॥ श्री: ॥

चौखम्बा सुरभारती ग्रन्थमाला
३५

श्रीभट्टोजिदीक्षितविरचिता

# प्रौढमनोरमा

श्रीहरिदीक्षितविरचित शब्दरत्नविभूषिता

तथा

'बालप्रकाशिका'-संस्कृत-हिन्दीव्याख्योपेता

( पञ्चसन्धिप्रकरणान्तः प्रथमो भागः )

व्याख्याकार:—
श्री द्वारिकाप्रसाद द्विवेदी



चौखम्बा सुरभारती प्रकाशन
वाराणसी

॥ श्रीः ॥



चौखम्बा सुरभारती ग्रन्थमाला

३५



श्रीभट्टोजिदीक्षितविरचिता

# प्रौढमनोरमा

श्रीहरिदीक्षितविरचित-शब्दरत्न-विभूषिता

तथा

'बालप्रकाशिका'-संस्कृत-हिन्दीव्याख्योपेता

( पञ्चसन्धिप्रकरणान्तः प्रथमो भागः )

व्याख्याकारः—

श्री द्वारिकाप्रसाद द्विवेदी

नव्यव्याकरणाचार्यः, व्याकरणवाचस्पतिः, नव्यन्यायशास्त्री, वेदान्तशिरोमणिः

व्याकरणविभागाध्यक्षः—

वाराणसेय श्रीनन्दलालबाजोरियासंस्कृतमहाविद्यालस्य



चौखम्बा सुरभारती प्रकाशन

वाराणसी

प्रकाशक—



चौखम्बा सुरभारती प्रकाशन

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )

के० ३७/११७, गोपालमन्दिर लेन

पोस्ट बाक्स नं० १२९

वाराणसी–२२१००१



द्वितीय संस्करण १९८०



अन्य प्राप्तिस्थान—

चौखम्बा विद्याभवन

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )

चौक ( बनारस स्टेट बैंक भवन के पीछे ),

पोस्ट बाक्स नं० ६९

वाराणसी–२२१००१

दूरभाष : { ६३०७६ दुकान
५५३५७ निवास

मुद्रक—

श्रीजी मुद्रणालय

वाराणसी

THE

CHAUKHAMBA SURBHARATI GRANTHAMALA

35



# PRAUDHAMANORAMĀ

OF

## ŚRĪ BHAṬṬOJI DĪKṢITA

Together with

## ŚABDARATNA

OF

ŚRĪ HARI DĪKṢITA

( VOL I—PANCHASANDHI PRAKARANA )

*Edited with*

**'BALPRAKASHIKA' SANSKRIT & HINDI COMMENTARIES**

By

Pt. Dwarika Prasad Dwivedi

*Navya Vyakaranacharya, Vyakaranavachaspati, Navya Nyayashastri, Vedantashiromani*

Head of the Deptt. of Vyakarana

Sri Nandalal Bajoriya Sanskrit Mahavidyalaya, Varanasi.





CHAUKHAMBA SURBHARATI PRAKASHAN

VARANASI





# प्रस्तावना

देवैराराधितां देवीं नित्यं प्रौढमनोरमाम् ।
राजराजेश्वरीं वन्दे, सर्वाभीष्टार्थसिद्धये ॥

विपश्चित्प्रवराः !

आधिभौतिकाध्यात्मिकाधिदैविकजालाकुलेऽस्मिन्संसारेऽनेकजन्मार्जितपुण्यप्रतापैः भारतवर्षे मनुष्यशरीरं प्राप्नुवन्ति प्राणिनः । अत्रोन्नत्यवनती द्विविधे, ऐहलौकिक्यौ, पारलौकिक्यौ च । द्विविधे ते धर्माधर्मनिमित्तके, तत्राधिभौतिकाध्यात्मिकाधिदैविकसकलदुःखापहारकस्य कर्मोपासनाजीवब्रह्मैक्यज्ञानेनाभ्युदयनिःश्रेयससिद्धिहेतुकस्य धर्मस्य साधनभूता वेदा इति ।

तदुक्तं मनुना—

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥

अयं भावः समस्तऋग्यजुःसामाथर्वलक्षणः विध्यर्थवादमन्त्रस्वरूपो वेदः धर्मे प्रमाणम् । अर्थवादानामपि विध्येकवाक्यत्वेन स्तावकतया धर्मे प्रामाण्यात् ।

वेदविदां स्मृतिर्धर्मे प्रमाणम् । वेदविदामिति विशेषणदानेन वेदमूलत्वेन स्मृत्यादीनांप्रामाण्यमिति तात्पर्यम् ।

वेदविदां शीलं = ब्रह्मण्यतादिरूपम् । अथवा शीलं=रागद्वेषपरित्यागः धर्मे प्रमाणम् । वैकल्पिके धार्मिकाणामाचारः आत्मतुष्टिश्च प्रमाणम् ।

श्लोकवार्तिकेऽपि—

श्रेयः साधनता ह्येषां नित्यं वेदात्प्रतीयते ।
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः ॥

कथितञ्चाऽन्यत्र—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते ।
एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥

यथाऽऽह सायणः—

इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः ।

अतिगभीरस्य वेदस्यार्थमवबोधयितुं शिक्षादीनि षडङ्गानि प्रवृत्तानि, अत एव तेषामपरविद्यारूपत्वं मुण्डकोपनिषदि कथितम् । तथाहि—

"द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति, परा चैवापरा च, तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः, शिक्षा, कल्पो व्याकरणं निरुक्तं छन्दोज्योतिषमिति। अथ परा यया तदक्षरमधिगम्यते। (मुण्डक० १।१।४) उपनिषद्वेद्याक्षरविषयं हि विज्ञानमिह परा विद्येति प्राधान्येन विवक्षितं नोपनिषच्छब्दराशिरिति तात्पर्यम् पराविद्यायाः।

तद्यथा पाणिनिशिक्षायाम्—

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
[1]ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते॥

छन्दः—लौकिकान् वैदिकांश्च वाक्यविशेषान् पादविरामादिव्यवस्थापनेन छन्दयति= नियमयतीति छन्दः पिङ्गलादिमहर्षिप्रणीतो ग्रन्थविशेषः।

कल्पः—कल्प्यते=समर्थ्यते यागप्रयोगोऽत्रेति कल्पः, अर्थात् केषां मन्त्राणां कुत्र प्रयोगः इति प्रयोगक्रमकल्पक आपस्तम्बादिमुनिप्रणीतो ग्रन्थविशेषः।

ज्योतिषम्—सूर्यचन्द्रादिज्योतिर्द्वारा तत्तद् वेदशास्त्रादिविहितकर्मानुष्ठानकालनिर्णयेष्टाऽनिष्टफलप्रदर्शकाः ग्रन्थविशेषाः।

निरुक्तम्—अर्थज्ञाने नैरपेक्ष्येण पदसमूहो यत्रोक्तं तन्निरुक्तम्।

शिक्षा—तत्तद्वर्णानां स्थानप्रयत्नोच्चारणाविक्रमप्रदर्शको पाणिन्यादिकृतोग्रन्थविशेषः।

व्याकरणम्—शब्दसाधुत्वबोधकः सूत्रात्मको लक्ष्य-लक्षणात्मको वा ग्रन्थविशेषस्तदुक्तं-भाष्ये—लक्ष्य-लक्षणं व्याकरणं, लक्ष्यञ्च लक्षणञ्चैतत्समुदितं व्याकरणं भवति, शब्दो हि लक्ष्यः, सूत्रं लक्षणम्। न चैवं समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवेनोपपद्यते। सूत्राणि चाप्यधीयान इष्यते वैयाकरण इतीष्टं न सिद्ध्येदिति वाच्यं समुदायेषु प्रवृत्तानां शब्दानां-पञ्चाल-तैल-घृतानामवयवेष्वपि पूर्वे पञ्चाला उत्तरे पञ्चालाः, तैलं भुक्तम्, घृतं भुक्तमित्यादि-रूपेणाजस्रं प्रवृत्तेर्दर्शनात्।

अथवा यथा राहोः शिरः इत्येकस्मिन्नपि वस्तुनि शब्दार्थभेदाद् भेदव्यवहारः, अनेकावस्थायुक्तं शिरोहि राहुशब्दार्थः, यत्किञ्चिदेकावस्थायुक्तं तच्छिरः शब्दार्थः, एवं व्याकरणस्य सूत्रमित्यत्रापि व्यपदेशिवद्भावेन षष्ठ्यर्थस्योपपत्त्या सूत्रमस्तु व्याकरणपदार्थः।

अस्य व्याकरणस्य प्रणेतारोऽष्टनव वा आचार्या बभूवुः।
केचित्—इन्द्रश्चन्द्रः काशकृत्स्नापिशाली शाकटायनः।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादि-शाब्दिकाः॥—इत्याहुः।
अपरे तु—ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतं चापिशलं शाकलं पाणिनीयकम्॥—इत्याहुः।

---

१. ज्योतिःशास्त्रम्।

ऐन्द्रं व्याकरणं तावच्छ्रुत्या ज्ञायते। तथाहि—"वाग्वै पराच्यव्याकृतावदत्, ते देवा इन्द्रमब्रुवन्, इमां नो वाचं व्याकुरु" तामिन्द्रो मध्यतोऽपक्रम्य व्याकरोत्, तस्मादियं व्याकृतावागुच्यते" इति श्रुतिः इन्द्रस्य व्याकरणकर्तृत्वे प्रमाणम्।

"चान्द्रास्तु—आत्मोदरकुक्षिष्विति पेठुः" इति वचनाच्चान्द्रव्याकरणमपि पूर्वमासीदिति सिध्यति। काशकृत्स्नं व्याकरणं भगवता भाष्यकारेण—"शताच्च ठन्यतावशते (५।१।२१) इत्यत्र भाष्ये नाम्ना निर्दिष्टम्।

अग्निपुराणेऽन्त्यभागे कौमारव्याकरणस्योल्लेखो दृश्यते। सारस्वत-शाकटायन ऋक्तन्त्राख्यानि व्याकरणानि मुद्रितान्यत एव सुलभानि सन्ति।

आपिशलशाकलयोश्च पाणिनिसूत्रेषु तत्र-तत्र नाम्ना निर्दिष्टत्वात् तावपि पूर्वमास्तामिति। पाणिनीयव्याकरणस्तु सर्वत्र प्रचलत्येव। एवम् "अवङ्स्फोटायनस्य" इत्युक्तेः स्फोटायनम्, "पौष्करसादेः" इति वार्तिकात् पौष्करसादिव्याकरणम्, "विन्दतिश्चान्द्रदौर्गादेः इत्युक्तेर्दौर्गव्याकरणम्" व्याघ्रभूत्यादयस्त्वेतम्' इति कारिकाबलाद् व्याघ्रभूतेर्व्याकरणञ्चासीदिति। एवमप्याशुबोध-जैनेन्द्र-मुग्धबोध-कलापादीनि बहूनि व्याकरणानि सन्ति। सत्स्वपि सर्वेषु व्याकरणेषु सार्वलौकिकवैदिकशब्दानां नितरां व्युत्पादकं पाणिनीयव्याकरणमेव।

अत एवास्य वेदाङ्गत्वम्। इदमेवाभिप्रेत्य "इदमक्षरच्छन्दो वर्णशः समनुक्रान्तं-यथाचार्या ऊचुः, ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय, इन्द्रो भारद्वाजाय, भारद्वाज-ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षरसमाम्नायमित्याचक्षते, न भुक्त्वा न नक्तं-प्रब्रूयात् ब्रह्मराशिः" इति ऋक्तन्त्रव्याकरणेऽस्य चतुर्दशसूत्रकदम्बकस्याम्नायत्वमुक्तं-तन्मूलकत्वादस्यैव व्याकरणस्य वेदाङ्गत्वं युक्तम्। अतएवास्य ज्ञाने सर्ववेदपारायणजं-पुण्यमिति स्पष्टं शब्देन्दुशेखरे नागेशोक्तम्। छान्दोग्योपनिषदि व्याकरणमुपक्रम्य "वेदानां वेदः" [ ७ अ० १ ख० ४ म० ] इत्युक्तम्।

पराशरोपपुराणे—

पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम्।
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन॥

तस्यैतस्य व्याकरणस्य प्रयोजनविशेषो वररुचिना वार्तिकेन दर्शितः "रक्षोहागम-लघ्वसन्देहाः प्रयोजनम्" इति। एतानि रक्षाऽऽदिप्रयोजनानि प्रयोजनान्तराणि च महाभाष्ये पस्पशाह्निके भगवता पतञ्जलिना स्पष्टीकृतानि। रक्षार्थं वेदानामध्येयं व्याकरणम्। लोपागमवर्णविकारज्ञो हि सम्यग्वेदान् परिपालयिष्यति वेदार्थं चाध्यवस्यति। ऊहः खल्वपि न सर्वैर्लिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः, ते च यज्ञाङ्गत्वेन यथायथं-विपरिणमयितव्याः, तान् नावैयाकरणः शक्नोति विपरिणमयितुम्। तस्मादध्येयं व्याकरणम्।

आगमः खल्वपि "ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति । प्रधानञ्च षट्सु अङ्गेषु व्याकरणम्, प्रधाने च कृतः यत्नः फलवान् भवति । लघ्वर्थं-चाध्येयं व्याकरणम्, बृहस्पतिरिन्द्राय दिव्यवर्षसहस्रं प्रतिपदोक्तानां शब्दानां पारायणं-प्रोवाच नान्तं जगाम बृहस्पतिश्च प्रवक्ता, इन्द्रश्चाध्येता दिव्यं वर्षसहस्रमध्ययनकालः, अन्तं च न जगाम । अद्यत्वे पुनर्यदि मानवः परमायुर्भवति तदा स वर्षशतं जीवति । तत्र कुतः प्रतिपदपाठेन सकलपदावगमः कुतश्च प्रयोगेण । असन्देहार्थं चाध्येयं व्याकरणम् । याज्ञिकाः पठन्ति—'स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत' इति । तत्र न ज्ञायते किं स्थूलानि पृषन्ति यस्याः सा स्थूलपृषती किं वा स्थूला चासौ पृषतीति । तान् नावैयाकरणः स्वरतोऽध्यवस्यति । यदि समासान्तोदात्तत्वम्, तदा कर्मधारयः, अथ पूर्वपदप्रकृतित्वं ततो बहुव्रीहिरिति । एवञ्च व्याकरणस्याध्ययनं परमावश्यकमिति न सन्देहलेशः । उक्तञ्चाभियुक्तैः—

यद्यपि बहुनाधीषे तथापि पठ पुत्र ! व्याकरणम् ।<br>स्वजनः श्वजनो मा भूत् सकलं शकलं सकृत् शकृत् ॥

ज्ञाते च व्याकरणे—

अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः ।<br>पुराणं धर्मशास्त्रञ्च विद्याह्येताश्चतुर्दश ॥

इत्युक्तासु सर्वासु विद्यासु सुकरप्रवेशतेति न तिरोहितं मतिमताम् ।

ननु व्याकरणस्यावश्यकत्वे तत्तात्पर्यनिर्णायकानां भाष्यादीनां शब्दसाधुत्वबोधनप्रकारप्रदर्शकानां काशिकादीनाञ्च सत्वे सिद्धान्तकौमुदीनिर्माणवैय्यर्थ्यमिति चेन्न भाष्यादीनां-साधारणबुद्ध्यवेद्यत्वात्, काशिकादीनां बहुत्र भाष्याद्याकरग्रन्थविरुद्धार्थप्रतिपादिकत्वाच्च तैः सिद्धान्तज्ञानासम्भवेन तदर्थं कौमुदीनिर्माणस्यावश्यकत्वात् । नन्वेवमपि मनोरमा नैरर्थक्यमिति चेन्न कौमुदीकर्तुरेव मनोरमायाः कर्तृत्वेन तदभिप्रायस्य कार्त्स्न्येन तद्विरचितविवृतेरेव सम्भवात् । न चैवमपि शब्दरत्नविषयकप्रयासनैष्फल्यम् इति वाच्यं शरीरस्यालङ्काराणामिव मनोरमोक्तार्थानां प्रेक्षावदुत्प्रेक्षितप्रामाणिकरहस्यार्थप्रकाशनेन गौरवाधायकत्वात् ।

यद्यपि महामहोपाध्यायश्रीमद्भट्टोजिदीक्षितविरचितसिद्धान्तकौमुदीव्याख्यानभूता प्रौढमनोरमा श्रीमद्भट्टोजिदीक्षितपौत्रेण महामहोपाध्यायहरिदीक्षितेन विरचितशब्दरत्नेन युक्ता परिपूर्णा तथापि वाङ्मयव्याख्याया आनन्त्यात् महर्षिकल्पानां पाणिनेरिव व्याकरणसारामृतपरिपूर्णमानसानां पूज्यगुरुवराणां श्री १००८ राघवेन्द्रानन्दसरस्वतीमहाभागानां-( श्री रामयशस्त्रिपाठिमहोदयानाम् ) परिष्कारांशानां सिद्धान्तानाञ्च प्रदर्शनस्यावश्यकत्वेन संस्कृतबालप्रकाशिकाऽपि नानुपयुक्ताभवेदिति विद्वद्वरेभ्यः सादरमुपह्रियते । छात्राणां-टीकाग्रन्थे प्रवेशार्थं हिन्दी बालप्रकाशिकाऽपि नानुपयुक्तेति मन्ये ।

## प्राचीनवैयाकरणानां सङ्क्षिप्तः परिचयः

भाष्याब्धिमथनोपलब्धशब्दकौस्तुभतत्वज्ञानकिरणध्वस्तध्वान्तस्वान्ताः भट्टवंशावतंसाः, विद्वन्मूर्धन्यलक्ष्मीरमणसदृशलक्ष्मीधरशर्मतनूजाः, निखिलविद्यापारावारीण-श्रीकृष्णशर्मान्तेवासिनः स्वीयाप्रतर्क्यतर्केण जितभट्टतयान्वर्थनामानो भट्टोजिदीक्षिताः विक्रमादित्यस्य षोडशशताब्द्यां जाता इति निश्चितप्रायम् । पूर्वार्धे उत्तरार्धे वा जन्मेति सन्दिग्धम् ।

किन्तु प्रौढमनोरमायाः निर्माणन्तु तस्याः शताब्द्याः उत्तरार्धे एवेति बहवोऽभिप्रयन्ति इति, महाराष्ट्रब्राह्मणा इति बहवः, सारस्वतब्राह्मणा इति केचित् वदन्ति ।

सिद्धान्तकौमुदी, प्रौढमनोरमा, शब्दकौस्तुभः, वैयाकरणभूषणकारिका चेति व्याकरणे ग्रन्था एभीरचिताः, तत्वकौस्तुभाख्योऽद्वैतवेदान्तप्रतिपादको दर्शनग्रन्थोऽप्येतेषां कृतिः ।

धर्मशास्त्रेतु कालनिर्णय-प्रवरनिर्णयत्रिस्थलीसेतु-चतुर्विंशतिमतव्याख्याप्रभृतयो दशैकादशग्रन्थाः रचिता इति विदुषां मतम् ।

श्रीरामाश्रमसद्गुरुशिष्यैः, भट्टोजिदीक्षितपौत्रैः श्रीवीरेश्वरपुत्रैः महावैयाकरणैः श्रीहरिदीक्षितैः श्रीशेषकृष्णपण्डितेन्द्रपुत्राणां श्रीजगन्नाथस्य गुरूणां शेषवीरेश्वराणां क्रोधोपशमनार्थं प्रौढमनोरमोक्तिमण्डनपरः शब्दरत्नग्रन्थः प्रायशः १७१० वैक्रमाब्दे व्यलेखि । बृहच्छब्दरत्ने ग्रन्थकृता स्वयमेव निर्दिष्टम्—

> गूढोक्तिग्रथितां पितामहकृतां विद्वत्प्रमोदप्रदाम्—
> भक्त्याऽधीत्य मनोरमां निरुपमाद्रामाश्रमात्सद्गुरोः ।
> तत्त्वाज्ञानवशात् परेण कलितान् दोषान् समुन्मूलयन्
> व्याचष्टे हरिरेष तां फणिमतान्यालोड्य वैरेश्वरिः ॥

ये दोषाः प्रौढमनोरमायामन्यैरुद्भावितास्ते दोषाभासा एव तेषां समूलमुन्मूलनाय महाभाष्यार्णवालोडनपूर्वकं मनोरमा व्याख्यानमहं करोमीति तात्पर्यम् ।

## आभारप्रदर्शनम्

निगमागमसमस्तशास्त्रपारावारीणानां, वेदभाष्यकाराणां, कलौ यज्ञयुगप्रवर्तकानां-श्रीविद्याप्रकाशकानामस्मद्दीक्षागुरूणां श्री १००८ स्वामिहरिहरानन्दसरस्वती-करपात्र-महाराजानां कृपालेश एव लेखने हेतुरतस्तेषां चरणेषु सहस्रशः प्रणामा विलसन्तु । वेदवेदाङ्गधर्मशास्त्रन्यायपूर्वोत्तरमीमांसादिसमस्तशास्त्रपारङ्गतानां सरस्वतीस्वरूपाणां तत्र भवतां प्रातःस्मरणीयानां गुरुचरणानां पूज्यश्री १००८ स्वामिराघवेन्दानन्दसरस्वतीमहाभागानां ( श्रीरामयशस्त्रिपाठिसहोदयानाम् ) पादरजः शिरसा वहामि, यैः स्वकीयचरणेषु प्रश्रयं दत्वा पुत्रवात्सल्येन व्याकरणादिशास्त्रे दृगुन्मीलिता । तेषामेव सिन्धुस्वरूपप्रवचनमध्ये विन्दुस्वरूपं प्रवचनं स्मारं स्मारं मया लिखितमतस्तेषु कोटिशः प्रणामाः, लेखने या त्रुटिः सा मदीया यद्यत्र सौष्ठवं तत्सर्वं गुरुचरणानामेव ।

कवितार्किकचक्रवर्तिनां काशीपीठाधीश्वरजगद्गुरुशङ्कराचार्याणां श्री १००८ महेश्वरानन्दसरस्वतीमहाभागानां चरणेषु प्रणामाः यैः कृपां विधाय वेदान्तपरिभाषाब्रह्मसूत्रशाङ्करभाष्यादिकं समुपदिष्टम् ।

नव्यन्यायवेदान्तादिसमस्तशास्त्रपारङ्गतानां पुंभाववाग्देवतानां दिग्दिगन्तविश्रुतकीर्त्तीनां गुरुवराणां पूज्यश्री १०८ बदरीनाथशुक्लमहोदयानां चरणेषु प्रणामाञ्जलयः स्युः, येभ्यो मया नव्यन्यायशास्त्रज्ञानमधिगतम् ।

व्याकरण-धर्मशास्त्र-मीमांसादिशास्त्रपारङ्गतानां पूज्यश्रीगुरुवराणां श्री १०८ बालचन्द्रदीक्षितमहाभागानां चरणकमलेषु प्रणतयः सन्तु, यैः कृपया बाल्यावस्थायां व्याकरणधर्मशास्त्रादौ प्रवेशः कारितः ।

पूज्यश्रीगुरुवराणां श्रीशारदाप्रसादपाठकानां चरणेषु विनतोऽस्मि एभिरपि बाल्यावस्थायां व्याकरणशास्त्रप्रवेशे सहायता कृता ।

पूज्यश्रीविष्णुयाज्ञिकमहोदयानां तथा घनान्तपाठकर्तॄणाम् श्रीश्रीनाथमिश्रमहाभगानां चरणानभिवादये यैः यजुर्वेदसंहितापूर्वार्धशतपथब्राह्मणग्रन्थश्च पाठितः ।

चौखम्बासुरभारतीप्रकाशनसंस्थायाः सर्वे सदस्याः धन्यवादार्हाः यैः छात्राणां हितार्थमेतस्य प्रकाशनं कृतम् ।

मया स्वीयधर्मपत्न्याः श्रीशकुन्तलादेव्या आग्रहेण हिन्दीबालप्रकाशिकाटीका लिखितातः सापि धन्यवादार्हा ।

ईषत्स्पृष्टऋकारलृकारयोः सीसकाक्षराभावेन ग्रन्थेऽस्मिन् सम्यङ्निरूपणंदुःशकमासीदितिसूचना ।

गच्छतस्खलनन्यायान्मदीयमतिमान्द्याद् दृष्टिदोषाद्वा याः काश्चन त्रुटयः स्युः ता गुणैकपक्षपातिनो विद्वांसो हंसक्षीरन्यायेन संशोध्य मामनुगृह्णन्त्विति साञ्जलिबद्धं मुहुर्मुहुः सम्प्रार्थयते ।

गुरुपूर्णिमा<br>सं० २०३५

विदुषामनुचरः<br>द्वारकाप्रसादद्विवेदी

## द्वितीयसंस्करणे लेखकस्य निवेदनम्

अस्मिन् द्वितीयसंस्करणेऽपेक्षितस्थले परिवर्तनं न्यूनाधिक्यञ्च कृतम् । प्रथमसंस्करणे ये मुद्रणादिदोषाः मद्दृष्टिपथगोचरीभूतास्ते दूरीकृताः तथापि "गच्छतः स्खलनं क्वापि-भवत्येवप्रमादतः" इति न्यायेन दोषाः सन्त्येवातोविद्वांसः तान्संशोध्य मामुपकुर्वन्तु इति प्रार्थयते ।

सं० वा० प्र० पृ० ११ प० १९ "स्ववृत्तित्वसम्बन्धेन साक्षादेव" इत्यत्र "स्ववृत्ति-वृत्तित्वसम्बन्धेन साक्षादेवेति" पठितव्यमिति सूचयति च ।

विदुषामनुचरः
द्वारकाप्रसादद्विवेदी

# विषयानुक्रमणिका

पृष्ठम्







॥ श्रीः ॥

सशब्दरत्न

# प्रौढमनोरमा

'बालप्रकाशिका' संस्कृत-हिन्दीव्याख्योपेता



ध्यायं ध्यायं परं ब्रह्म स्मारं स्मारं गुरोर्गिरः ।
सिद्धान्तकौमुदीव्याख्यां कुर्मः प्रौढमनोरमाम् ॥ १ ॥

---

## शब्दरत्नम्

शेषविभूषणमीडे शेषाशेषार्थलाभाय ।
दातुं सकलमभीष्टं फलमीष्टे यत्कृपादृष्टिः ॥ १ ॥

---

## ❀ बालप्रकाशिका ❀

ज्ञानस्वरूपाय भवाब्धिहन्त्रे, त्रैलोक्यनाथाय गजाननाय ।
क्लेशाभिहर्त्रे दुरितक्षयाय, भद्राय देवाय नमो जयाय ॥ १ ॥
सामर्थ्यहीनाय निराश्रिताय, दुर्बोधयुक्ताय ददातु बुद्धिम् ।
बालस्वभावेन कृतापराधं, स्वीयञ्च पुत्रन्न जहातु माता ॥ २ ॥
दीक्षागुरून्नमस्कृत्य तथा विद्यागुरूनपि ।
पितरौ च नमस्कृत्य कुर्वे बालप्रकाशिकाम् ॥ ३ ॥

ग्रन्थसमाप्ति-ग्रन्थप्रचारादिप्रतिबन्धकविघ्नप्रशमायाशीर्वादनमस्कारवस्तुनिर्देशमध्येऽविगीतशिष्टाचरिततर्कितस्मृत्यनुमितश्रुतिज्ञापितानुष्ठेयताकं नमस्कारात्मकं मङ्गलमाचरञ्छिष्यशिक्षायै ग्रन्थघटकीकरोति—शेषविभूषणमिति । विविधं विशिष्टं वा भूषणं विभूषणं-शेषएव विभूषणं यस्य तं शिवमित्यर्थः । शेषश्च विश्च शेषवी । विशब्दस्याल्पाच्त्वेऽप्यभ्य-

---

ग्रन्थसमाप्ति ग्रन्थप्रचारादि का प्रतिबन्धकरूप विघ्नप्रशमार्थ शिष्यशिक्षार्थ एवं व्याख्याताओं, श्रोताओं को अनुषङ्गतः मङ्गलार्थ अर्थात् फलान्तरेच्छया प्रवृत्त का अनायासेन फलान्तर सम्बन्धार्थ प्रथम देवतावाचक शेषशब्दबोध्य पतञ्जलियुक्त स्वइष्टदेवता विषयक स्तुत्यात्मक मङ्गल को आचार्य हरिदीक्षित ग्रन्थावयव करते हैं । शेष ही है विविध भूषण जिनका अथवा शेष ही है विशिष्ट भूषण जिनका, इस तरह के हर्षावस्थापन्न भगवान् शिव को अथवा शेष और गरुड़ है भूषण जिनका इस तरह के भगवान् विष्णु को महाभाष्य का अर्थ जानने को मैं नमस्कार करता हूँ । जिनकी कृपादृष्टि सम्पूर्ण अभीष्टों को देने में समर्था है ।

विषयश्चाधिकारश्च सम्बन्धश्चप्रयोजनम्
विनानुबन्धं ग्रन्थादौ मङ्गलं नैव शस्यते ॥

ध्यायं ध्यायमिति । ध्यात्वा ध्यात्वेत्यर्थः । णमुलन्तमेतत् । परं सर्वजगदुपादानम् ।

हितत्वाच्छेषशब्दस्य पूर्वनिपातः । शेषगरुडौ भूषणे यस्य पर्यङ्कतया वाहकतया च तं-शेषशायिनं गरुडवाहनं विष्णुमित्यर्थः । ईडे=स्तुवे । कस्मै प्रयोजनाय ? शेषस्य योऽशेषार्थ-स्तल्लाभाय । आद्यपक्षे शेषयुक्तशिवस्तुत्या शिवस्य विशिष्टभूषणयुक्तस्य हर्षावस्थापन्नस्य स्मरणेऽभीप्सितार्थस्य सिद्धिर्भविष्यत्येव । अन्त्यपक्षे शेषस्याशेषार्थो महाभाष्यार्थस्तल्ला-भाय । सर्वनाम्नां प्रधानपरामर्शित्वाद्यस्य शिवस्य विष्णोर्वा कृपायुक्ता दृष्टिः निखिलाभीष्ट-फलं दातुं समर्था । मङ्गलत्वञ्च आशीर्वादनमस्कारवस्तुनिर्देशान्यतमत्वं समाप्तिप्रति-बन्धकीभूतविघ्नध्वंसहेतुत्वं वा ।

ननु मङ्गलाचरणमयुक्तं निष्फलत्वाज्जलताडनादिवत् । न च निष्फलत्वमेवासिद्ध-मिति वाच्यम्, मङ्गलं निष्फलं यावत्फलविशेषशून्यत्वात् । तथा हि—मङ्गलं न विघ्न-ध्वंसं प्रति नवा समाप्तिं प्रति कारणं, विनापि मङ्गलं नास्तिकादीनां ग्रन्थेषु निर्विघ्न-परिसमाप्तिदर्शनादिति चेन्न—मङ्गलं सफलमविगीतशिष्टाचारविषयत्वात् ।

शिष्टत्वं नाम फलसाधनतांशे भ्रान्तिरहितत्वम् । वेदप्रामाण्याभ्युपगन्तृत्वं वा । ननु शिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकं मङ्गलमिति लेखनं युक्तमिति चेन्न—सति विरोधे स्मृत्या तन्मूलभूता श्रुतिरनुमीयते । नैवं शिष्टाचारेण साक्षात्साऽनुमीयते किन्तर्हि शिष्टाचारेण स्मृतिस्तया च श्रुतिरिति 'आचारात् स्मृतिं ज्ञात्वा श्रुतिर्विज्ञायेत्तत' इति तन्त्रवार्तिकस्य प्रथमाध्यायतृतीयपादे स्पष्टत्वात् ।

ध्यायं ध्यायमिति । चिन्तार्थकध्यैधातोः "अव्ययकृतो भावे" इति सिद्धान्ताद्भावे आभीक्ष्ण्ये णमुल् चेत्यनेन णमुल्यात्वे, युकि नित्यवीप्सयोरित्यनेन द्वित्वे । न च

---

यह शिष्टों का व्यवहार होने से यहाँ पर विषय सम्बन्ध प्रयोजन अधिकारी बतलाना आवश्यक हैं । [ वेद प्रामाण्याभ्युपगन्तृत्वं शिष्टत्वम् ] वेदों के प्रामाण्य को मानने वालों को शिष्ट कहते हैं । अधिकार शब्द अर्शाद्यजन्त होने से अधिकारी का बोधक है ।

विषय का तात्पर्य है प्रतिपाद्य वस्तु, जैसे भगवान् भाष्यकार पतञ्जलि के भाष्य का सम्पूर्ण अर्थ अर्थात् "वैयाकरण सिद्धान्त" यह विषय है । जब तक अध्येता को सामान्य रूप से यह ज्ञान नहीं होगा कि इस ग्रन्थ का प्रतिपाद्य विषय क्या है ? तब तक उसकी प्रवृत्ति नहीं हो सकती ।

ग्रन्थ के साथ विषय का प्रतिपादकत्व विषय के साथ ग्रन्थ का प्रतिपाद्यत्व सम्बन्ध है ।

प्रयोजयति प्राधान्येन यत् तत् प्रयोजनम् अर्थात् प्रधान प्रवर्तक, क्योंकि अध्येता को विषय का ज्ञान तथा विषय और ग्रन्थ के बीच प्रतिपाद्य प्रतिपादक भाव सम्बन्ध का ज्ञान होने पर भी जबतक उसे प्रयोजन का ज्ञान नहीं होता तब तक उस ग्रन्थ के अध्ययन में प्रवृत्ति नहीं होती, यहाँ पर "वैयाकरण सिद्धान्त ज्ञान" प्रयोजन है ।

वैयाकरणसिद्धान्त-जिज्ञासु अधिकारी माना जाता है । अधिकारी को इष्ट साधनता और कृति-साध्यता का ज्ञान आवश्यक होता है । क्योंकि मनुष्य जिस कार्य को अपने इष्ट का साधन तथा अपने प्रयत्न से साध्य समझता है, उसके सम्पादन में प्रवृत्त होता है । अनुबन्ध शब्द का अर्थ है, "अनु = पश्चात् = स्वज्ञानोत्तरं बध्नन्ति = प्रवर्तयन्ति इति अनुबन्धाः" । जिसका ज्ञान होने पर ग्रन्थ के अध्ययन में प्रवृत्ति हो ।

कार्यब्रह्महिरण्यगर्भव्यावृत्तये इदम्। ध्यानं चिन्तापरपर्यायं स्मृत्यनुकूलव्यापाररूपम्।

"आभीक्ष्ण्ये द्वे भवतः" इति द्विर्भावः स्यादिति वाच्यम्, अस्य सार्वत्रिकत्वाभावात्। अतएव प्रदीपकारेणोक्तं "यद्याभीक्ष्ण्ये द्विर्वचनं विधीयते किमर्थं वार्तिककार आभीक्ष्ण्ये द्वे भवत इति वक्तव्यमिति वक्ष्यति, तत्रैव नागेशेनोक्तम् एवमाभीक्ष्ण्ये द्वे वाच्य इत्यस्यापि वैयर्थ्यमिति।" ननु आभीक्ष्ण्यं णमुलादिना द्योतितं तथा च "उक्तार्थानामप्रयोग" इति न्यायात्तद्द्योतनार्थं द्वित्वं न स्यादिति चेन्न समानकर्तृकयोरित्यादिनाऽर्थान्तरेऽपि णमुलो-विधानात्, द्वित्वरहितयोराभीक्ष्ण्यद्योतने सामर्थ्याभावात्।

यदि ध्यायमिति घञन्त-प्रकृतिक-द्वितीयान्तं तदा शब्दशक्तिस्वभावादाभीक्ष्ण्यं तिङन्तेषु अव्ययसंज्ञककृदन्तेषु च विद्यमानत्वात् द्वित्वाऽनुपपत्तिरत आह—ध्यात्वा ध्यात्वेति। ध्यायशब्दो यदि घञन्तस्तदोक्तार्थाऽलाभोऽतआह—णमुलन्तमिति। तथा च क्त्वाणमुलोः समानार्थकत्वेनोक्तार्थस्य लाभः सुकर एव। एतेन स्मारंस्मारमित्यपि व्याख्यातम्।

सर्वंजगदुपादानमिति—सदसद्भ्यामनिर्वचनीय त्रिगुणात्मकं ज्ञानविरोधिभावरूपम्, अज्ञानपदवाच्यम्, सत्त्वेनासत्त्वेन च विचाराऽसहत्वे सति सदसत्त्वेन च यद्विचारं न सहते तदनिर्वाच्यम्। विस्तरस्तु तत्वप्रदीपिकायाम्। आवरणविक्षेपभेदेनाऽज्ञानस्य शक्तिद्वय-मस्ति। आवरणशक्तिस्तावदल्पोऽपि मेघोऽनेकयोजनावस्तीर्णादित्यमण्डलमवलोकयितृ-पुरुषदृष्टिमात्राच्छादकत्वेनादित्यमाच्छादयतीत्युपचारादुच्यते। तथा परिच्छिन्नस्याप्य-ज्ञानस्य प्रमातृ=अवलोकयितृबुद्धिमात्राच्छादकत्वेनाच्छादकत्वमुपचारादुच्यते। तदुक्तं वेदान्तसारे="घनच्छन्नदृष्टिर्घनच्छन्नमर्कं, यथा मन्यते निष्प्रभं चातिमूढः। तथा बद्धव-द्भाति यो मूढदृष्टेः, स नित्योपलब्धिस्वरूपोऽहमात्मा"॥ नास्ति=न प्रकाशते इति व्यवहारालम्बनयोग्यतावरणम्। अन्यथा स्वप्रकाशत्वेन "अस्ति प्रकाशते" इति व्यवहार-योग्ये ब्रह्मणि नास्ति न प्रकाशते इति व्यवहारानुपपत्तेः।

चिन्तार्थक ध्यै धातु से पौनःपुन्य प्रतीयमान रहने पर भाव में णमुल् प्रत्यय हो जाने पर आत्व और युक् आगम होने से 'नित्यवीप्सयोः' इससे द्वित्व होगा। 'आभीक्ष्ण्ये द्वे भवतः' इस वार्तिक से द्वित्व नहीं होता, क्योंकि उक्त वार्तिक असार्वत्रिक है। यह नित्यवीप्सयोः ८।१।४ तथा प्रकारे गुणवचनस्य ८।१।१२ के कैयट उद्योत में स्पष्ट रूपेण प्रतिपादित है।

यद्यपि पौनःपुन्य णमुलादि से द्योतित है, आदिपदेन क्त्वा का भी ग्रहण होगा, अतः क्त्वा से द्योतित है। इस हेतु पौनःपुन्य द्योतनार्थ 'उक्तार्थानामप्रयोगः' इस न्याय के सामर्थ्य से द्वित्व नहीं होगा तथापि 'विभाषाऽग्रेप्रथमपूर्वेषु' इस सूत्र के विषय में आभीक्ष्ण्याभाव में णमुल् होता है। अतः द्वित्वरहित णमुलन्त में आभीक्ष्ण्यद्योतनसामर्थ्याभाव ही रहेगा। ध्यायं इसको घञन्त स्वीकार करने पर द्वित्व नहीं होगा तथा आभीक्ष्ण्य अर्थ की प्रतीति नहीं होगी। सम्पूर्ण जगत् का उपादान कारण परं ब्रह्म का बार-बार ध्यान करके। उपादान कारण उसे कहते हैं, जिससे कार्य अभिन्नतया उत्पन्न हो। जैसे घटरूप कार्य मृत्तिका से अभिन्नतया उत्पन्न होता है, अतः मृत्तिका घट का उपादान कारण है।

परंब्रह्म जगत् का उपादान कारण इस प्रकार है—आवरण तथा विक्षेप शक्तिद्वय से युक्त अज्ञानरूपोपाधि विशिष्ट चैतन्य ब्रह्म स्वयं प्रधानरूप से इस संसार का निमित्त कारण है, और

स्मरणं तु तज्जन्यमिति विशेषः। गुरोरित्येकवचनेन सर्वविद्यालाभ एकस्मादेव गुरोरिति सूचितम्। प्रौढानां मनो रमयतीत्यर्थिकां मनोरमाम्। प्रौढत्वं च सकलदर्शनार्थज्ञानपूर्वकमहाभाष्यगूढार्थज्ञानवत्त्वम्।

आवरणशक्त्यावच्छिन्नस्यात्मनः कर्तृत्वभोक्तृत्वसुखदुःखमोहात्मकतुच्छसंसारभावनाऽपि संभाव्यते। यथा स्वज्ञानेनावृतायां रज्ज्वां सर्पत्वभावना। विक्षेपशक्तिस्तु यथा रज्ज्वज्ञानं स्वावृतरज्जोः स्वशक्त्या सर्पादिकमुद्भावयति, एवमज्ञानमपि स्वावृतात्मनि विक्षेपशक्त्याऽऽकाशादिप्रपञ्चमुद्भावयति। तदुक्तम् "विक्षेपशक्तिर्लिङ्गादिब्रह्माण्डान्तं जगत् सृजेदिति"। शक्तिद्वयवदज्ञानोपहितं चैतन्यं स्वप्रधानतया निमित्तम्। स्वोपाधिप्रधानतयोपादानञ्च भवति।

उपादानञ्च यदभिन्नं कार्यमुत्पद्यते तदुपादानम्। यथा घटरूपकार्यं मृत्तिकयाभिन्नमुत्पद्यतेऽतः घटकार्यस्योपादानं कारणं मृत्तिका। अपि च लूता तन्तुकार्यं प्रति स्वप्रधाननिमित्तम्। स्वशरीरप्रधानतयोपादानञ्च भवति। कार्यब्रह्महिरण्यगर्भव्यावृत्तये परमिति। यद्यपि कार्यब्रह्मरूपचतुर्मुखवाचि ब्रह्मशब्दस्य "ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठी पितामहः। हिरण्यगर्भो लोकेशः स्वयंभूश्चतुराननः॥" इति कोषेण पुंस्त्वानुशासनात् नपुंसकब्रह्मशब्दोपादानेन तद्व्यावृत्तौ सिद्धायां परं पदोपादानं निष्फलम्, तथापि "यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः। तस्मादेतद्ब्रह्मनामरूपमन्नञ्च जायते॥" इति श्रुतौ ब्रह्मणा लोककर्तृणेत्यादौ च हिरण्यगर्भवाचकस्यापि नपुंसकत्वोपलम्भेन तद्विशेषणसार्थक्यात्। कोशस्तु प्राचुर्याभिप्रायक इति। न च हिरण्यगर्भस्य चेतनरूपत्वात्तस्य च "नित्यं विज्ञानमानन्दं ब्रह्म" इति श्रुत्या नित्यत्वावगमेन कथङ्कार्यत्वमिति वाच्यम्, चैतन्यस्य नित्यत्वेऽप्युपाधेरनित्यतया तस्य जन्यत्वात्। तथा हि ज्ञानेन्द्रियपञ्चकविशिष्टबुद्धिस्वरूपविज्ञानमयकोशो भवति, ज्ञानेन्द्रियपञ्चकविशिष्टमनोमयकोशो भवति, कर्मेन्द्रियपञ्चकविशिष्टवायुपञ्चकरूपप्राणमयकोशो भवति, एतत् कोशत्रयं मिलितं सत् सूक्ष्मशरीरमित्युच्यते। अत्राप्यखिलसूक्ष्मशरीरमेकबुद्धिविषयतया वनवज्जलाशयवद्वा समष्टिः। अनेकबुद्धिविषयतया वृक्षवज्जलवद्वा व्यष्टिरपि भवति। एतत्समष्ट्युपहितं चैतन्यं सूत्रात्मा हिरण्यगर्भ इति। "न लोकाव्ययनिष्ठाखलर्थतृनाम्" इति निषेधात् परंब्रह्मरूपकर्मणि षष्ठी न।

ननु ध्यैस्मृधात्वोस्तुल्यार्थकत्वेनान्यतरवैयर्थ्यमत आह—ध्यानमित्यादि। चिन्ताशब्दोऽयमर्शआद्यजन्तोभावसाधनः। ध्यै धातोरर्थनिर्देशे धातुपाठेऽप्येवमेवेत्याशयः।

---

अपनी अज्ञानरूप उपाधि की प्रधानता के कारण उपादान कारण हो जाता है। जैसे मकड़ी स्वयं प्रधान रूप से तन्तुरूप कार्य के प्रति निमित्त कारण है, और वही अपने शरीर की प्रधानता के कारण उपादान कारण है, क्योंकि उसके शरीर से ही तन्तु का निर्गमन होता है। 'ब्रह्मणा लोककर्तृणा' इत्यादि में हिरण्यगर्भवाची कार्यब्रह्म भी ब्रह्मपदेन गृहीत है, अतः कार्यब्रह्म हिरण्यगर्भ की व्यावृत्ति करने के लिए 'परम्' यह विशेषण दिया। पर ब्रह्म जो कर्म है, इसमें 'नलोकाव्य०' इत्यादि सूत्र से निषेध होने के कारण षष्ठी नहीं होती।

ध्यै धातु तथा स्मृ धातु तुल्यार्थक हैं, अतः अन्यतर व्यर्थ है इस आशङ्कापर शब्दरत्नकार ने लिखा कि ध्यान चिन्ता का दूसरा पर्याय है, जो स्मृतिजनक व्यापार रूप है। स्मरण तो उक्त व्यापार जन्य है। एक ही गुरु से सम्पूर्ण विद्याप्राप्ति प्रदर्शनार्थ तथा सर्वविद्या सार्वभौमत्वलक्षणोत्कर्ष

'ह य व र ट्' (मा० सू० ५)। हकारोपदेशः, अट्अश्हश्इण्ग्रहणेषु हकारग्रहणार्थः। अर्हेण, 'अड्व्यवायेऽपि' इति णत्वम्। देवा हसन्ति, 'भोभगो' (पा० सू० ८।३।१७) इति रोर्यत्वम्। देवो हसति, 'हशि च' (पा० सू० ६।१।११४) इत्युत्वम्। लिलिहिढ्वे, लिलिहिध्वे, विभाषेटः' (पा० सू० ८।३।७९) इति वा ढः।

इण्ग्रहणेष्विति। नन्विदं न्यूनम्, अम्ग्रहणेऽपि ग्रहणात्। फलं तु वहुपुम्स्कुह्, इत्यादौ

स्मृत्यनुकूलेति। स्मृतिजनकभावनाख्यसंस्काररूपव्यापाररूपमित्यर्थः। व्यापारेण व्यापारिणोऽन्यथासिद्धिमते ध्यानम् स्मृत्यनुकूलभावनापरपर्यायव्यापाररूपम्। व्यापारेण व्यापारिणो नान्यथा सिद्धिरिति मते यथा व्यापारेण विघ्नध्वंसेन व्यापारिणः मङ्गलस्यान्यथासिद्धिर्न तथैव संस्काररूपव्यापारेण व्यापारिणोऽनुभवस्यान्यथासिद्धत्वाभावादनुभवरूपमेव बोध्यम्। तज्जन्यमिति। तादृशसंस्कारजन्यम्। ननु गुरोरित्यनुचितं पूज्यतया वहुवचनस्य युक्तत्वादत आह—गुरोरितीति। एकस्मादेवेति। श्रीकृष्णपण्डिताख्यादेवेत्यर्थः। सूचितमिति। एतेनैतस्य सर्वविद्यासार्वभौमत्वलक्षणोत्कर्षसूचनार्थमेवैकवचननिर्देशो नतु पूज्यताप्रयोजकसद्गुणाधिक्यराहित्यमूलकापकर्षसूचनार्थस्तन्निर्देशः। गिर इति—द्वितीयाबहुवचनम्। "न लोकाव्ययनिष्ठाखलर्थतृनाम्" इति निषेधात् कर्मणि षष्ठी न। व्याख्यामिति—

पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना।
आक्षेपस्य समाधानं व्याख्या पञ्चविधा स्मृता॥

रमयतीति रमा, प्रौढानां मनः प्रौढमनः, प्रौढमनसो रमा प्रौढमनोरमा। गङ्गाधर इत्यत्रेव समासः। पचादित्वकल्पनेनाचि कर्मणः शेषत्वविवक्षायां "शेषे षष्ठी" इति षष्ठीविभक्तौ इति शब्दव्युत्पत्तिः। प्रौढानां मनो रमयतीति फलितार्थकथनमन्यथा-कर्मण्यण् प्रसङ्गात्। प्रकृतोपयोगिप्रौढपदार्थतावच्छेदकमाह प्रौढत्वमिति। एतेन महाभाष्यगूढार्थज्ञानमितरसकलदर्शनार्थज्ञाने सत्येवेति सूचितम्, महाभाष्यविचारसमये सकलदर्शनार्थस्य तत्र तत्र ध्वननात्। एवंविधप्रौढत्वोपपादनेन तादृशज्ञानवतामेव निर्दुष्टत्वज्ञानेनेयं मनोरमा रमयतीति नान्येषामिति। कुर्म इति। सर्वापेक्षयात्मनः प्रियत्वात् सर्वप्रियकारित्वेन बहुत्वारोपः।

इण् ग्रहणेष्विति—अट् अश् हश् इणो गृह्यन्ते येषु तेषु "अड्व्यवायेऽपि" मो-

सूचनार्थ 'गुरोः' एकवचन का प्रयोग किया। गिरः यह द्वितीया का बहुवचन है, गुरु की वाणी को बार-बार स्मरण करके। रमयतीति रमा, प्रौढानां मनः प्रौढमनः, प्रौढमनसः रमा प्रौढमनोरमा इस शाब्दव्युत्पत्ति से युक्त प्रौढानां मनोरमयतीत्यर्थिका सिद्धान्तकौमुदीव्याख्या प्रौढमनोरमा को हम बनाते हैं। प्रकृतोपयोगी प्रौढपदार्थतावच्छेदक क्या है इसका समाधान करते हैं। सकलदर्शनार्थज्ञानपूर्वक महाभाष्यार्थ-गूढार्थ-ज्ञानवत्व ही प्रौढत्व है, अर्थात् महाभाष्य के छिपे हुए अर्थों का ज्ञान होना ही प्रौढत्व है। अन्यूनानतिरिक्त धर्म अवच्छेदक होता है। जैसे ब्राह्मण शब्द का ब्राह्मणत्व अन्यूनानतिरिक्त होने से अवच्छेदक है।

अट् ग्रहण है जिससे एतादृश जो 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इस लक्षण में हकार का ग्रहण होने से अर्हेण इसमें अट् बोध्य हकार का व्यवधान रहने पर भी णत्व हो गया प्रक्रियावस्था में।

मगो ८।३।१७ हशि च ६।१।११४ विभाषेट: ८।३।७६ इत्यादिसूत्रेषु हकारग्रहणार्थो-हयवरडित्यत्र हकारोपदेशः। ग्रहणफलानि स्पष्टानि।

अत्रेदं बोध्यम्—अश् इण् इति प्रत्याहारद्वयं सूत्ररीत्या न भाष्यरीत्या तथाहि "भोभगोअघोअपूर्वस्य योऽशि" इति सूत्रे भाष्यकृतोपन्यस्तमश्ग्रहणमन्यत्राभावान्नह्यन्यत्र रुरस्त्यन्यदतोऽशः, अर्थाद्यत्राशोऽन्यः खर्भवति तत्र पूर्वत्रासिद्धमिति यत्वस्यासिद्धत्वाद्विसर्जनीयः स्यादश्येव रुरस्तीत्यभिप्रायकः। ननु चायमस्ति छन्दःसुः पयःस्विति किं पुनः कारणं सुकारपरएवोदाह्रियते न पुनरयं वृक्षस्तत्र प्लक्षस्तत्रेति। अस्त्यत्र विशेषः विसर्जनीये कृते न भविष्यति। इहापि तर्हि विसर्जनीये कृते न भविष्यति छन्दःसु पयःस्विति स्थानिवद्भावात्प्राप्नोति। ननु चेहापि स्थानिवद्भावात् प्राप्नोति वृक्षस्तत्र प्लक्षस्तत्रेति अनल्विधौ स्थानिवद्भावः। अथायमल्विधिः स्याच्छक्यमश्ग्रहणमवक्तुम्। बाढं-शक्यम्। अल्विधिस्तर्हि भविष्यति, अल्विधिस्तर्हीति प्रतीकमादाय कैयटेनोक्तं रुर्नैव स्थानी किन्तु तद्विशेषणं रोर्योरेफस्तस्य विसर्जनीय इत्यर्थं इति। कथमिदमस्ति "रोरीति" ततो वक्ष्यामि व्याख्यास्यामि "खरवसानयोर्विसर्जनीयः" ततो रोः सुपि विसर्जनीयो र इत्येव, उत्तरार्थं तर्ह्यश्ग्रहणं कर्तव्यम् "हलि सर्वेषां" हल्यशीति यथा स्यादिह माभूत् वृक्षवयतेरप्रत्यये वृक्षव् करोति तत्र प्रदीपकारेणोक्तम्—अश्ग्रहणानुरोधेन चैतद्भाष्यकारेणोदाहृतम्, तथाहि लणित्यत्रोक्तं न पदान्ता हलोऽणः सन्तीति। तत्रैवोद्योतकारेणोक्तम्—एवञ्चेदं भाष्यं पूर्वपक्ष्येकदेश्युक्तिः। हलि सर्वेषामित्यनेन भोसादिसाहचर्येण रोरित्यस्यानुवृत्या च रुस्थानिकस्यैव लोपाद्वित्यपि बोध्यम्। प्रथमहकारस्येण् ग्रहणेन ग्रहणं भवति नवेत्यस्य विचारः।

नन्वेवमिण्यपि तदुक्तिरसङ्गता। न चेष्टापत्तिः "लिलिहिढ्वे" इत्यादीनामसाधुतापत्तेः। यदि तु अट्हशोः फलोक्तिपरभाष्यस्योपलक्षणत्वं ब्रूषे तर्हि अश्यपि, उक्तहेतोः कैयटेन तथैव कण्ठतस्तत्र फलोक्तेः। पुंयोगादिति सूत्रे मम्चा हसन्ति इति भाष्यप्रयोगाच्च ग्रहणापत्तावधिकमित्युक्तिरेवायुक्तेति चेदत्र केचिदाहुः, द्वितीयहकारफलोक्त्यनन्तरं यदि किञ्चिदन्यत्राप्युपदेशे प्रयोजनमस्ति तत्राप्युपदेशः कर्तव्य इति भाष्यादिणि सफलत्वात्तथा

अश् ग्रहण है, जिसमें एतादृश जो 'भो भगो अघो अपूर्वस्य योऽशि' इस सूत्र में हकार का ग्रहण होने से देवा हसन्ति यहाँ पर अश् बोध्य हकार परे रहने पर यत्व हो गया, प्रक्रियावस्था में। हश् ग्रहण है, जिसमें एतादृश जो 'हशि च' इस लक्षण में हकार का ग्रहण होने से देवो हसति इसमें हश् बोध्य हकार परे रहने पर 'हशि च' से उत्व हो गया, प्रक्रियावस्था में। इण् ग्रहण है जिसमें एतादृश जो 'विभाषेटः' इस सूत्र में हकार का ग्रहण होने से लिलिहिध्वे, लिलिहिढ्वे 'इस लक्ष्य में इण्बोध्य हकार से परे जो इट् उससे परे जो लिट् सम्बन्धी धकार होने से विकल्प से ढत्व हो गया, प्रक्रियावस्था में। अश् इण् प्रत्याहारद्वय भाष्यकार को इष्ट नहीं है, यह 'भोभगो' 'हयवरट्' सूत्रद्वय भाष्य से प्रतीत होता है। सूत्रकार को इष्ट होने से मनोरमाकार ने परिगणन कर दिया। उस परिगणन में न्यूनता की आशङ्का करके निराकरण करते हैं। 'अम् गृह्यते यस्मिंस्तस्मिन्' अम्ग्रहणे यहाँ पर अधिकरण में ल्युट् प्रत्यय किया गया है, अतः अम् ग्रहण है जसमें एतादृश जो 'पुमः खय्यम् परे' इस सूत्र में अम् पद वाच्यों का ग्रहण होने से निमित्ततया हिकार का ग्रहण अपेक्षित हैं। यद्यपि बहवः पुमांसो यस्य इस विग्रह वाले बहुव्रीहि समास में "उरः

"पुमः खय्यम्" इति रुत्वम् । गवित्ययमाहेत्यादिवत्, अपदान्तत्वात्ककारादेर्न जश्त्व-

न त्वशि तदभावादिति फलसत्त्व एव तद्भाष्यस्योपलक्षणत्वं नान्यथा एवञ्चाधिक्ये न भाष्यानुक्तत्वमात्रं हेतुः किन्तुफलाभावसहितं तत् । प्रदीपोद्योतौ तु सूत्रानुसारिणौ । मय्वा हसन्ति इति प्रयोगस्य त्वत्रापि मते सिद्धिर्निर्बाधैवेति ।

वस्तुतस्तु इण् इत्यपि तथैव, अतएव यदि किञ्चिदितिसन्दिग्धार्धमुक्त्वाग्रे फलादानं भाष्ये संगच्छते । अतएव वक्ष्यति, अमि हकारप्रयोजनमिति च भाष्येनोक्तमिति । तदुक्तिस्तु स्वरूपप्रतिपत्यर्थं एवायमक्षर समाम्नाय इति भ्रमनिवारणाय सर्वथा शास्त्रीयफलार्थतया ह्रस्य द्वेधोपदेशः कर्त्तव्य इत्यत्र तस्य तात्पर्यम्, एवञ्चाशंशे फलाभावस्योक्तरीत्या स्पष्टत्ववदत्रोक्तहेतोरेव तदनुमानात् । आधिक्ये तद्वदीदृशभाष्यानुक्तत्वमपिहेतुः, अतएव कैयटेनाप्यत्रफलं नोक्तम्, एवञ्च लिलिहिड्वे इत्यादीनामनभिधानमेवेति प्रपञ्चितं भावप्रकाशे प्रौढमनोरमाकारेण हयवरट् सूत्रस्थहकारफलकथनावसरे प्रत्याहारचतुष्टय एव फलं दत्तन्तत्र न्यूनत्वमाशङ्क्य निराचष्टे—नन्वित्यादिना ।

अम्ग्रहणेऽपीति । अम् गृह्यते यस्मिंस्तस्मिन् "पुमः खय्यम् परे" इति, ग्रहण इत्यत्राधिकरणे ल्युडस्ति । ग्रहणादिति—अम् वाक्यत्वेन निमित्ततया तद्ग्रहणस्यापेक्षणीयत्वात् । एतत्प्रयोजनमाह—फलं त्विति । क्लृप्तप्रयोजनाभावसूचनाय तु शब्दः । बहुपुम्क्‌ह् इति बहवः पुमांसो यस्येति बहुव्रीहौ "उरः प्रभृतिषु" एकवचनान्त पुम्स् शब्दस्य पाठाद् बहुवचने न कप् एवं शेषाद्विभाषेत्यत्र विभाषापदोपादानात् कबभावः क् ह् इति प्रत्येकमनुकरणद्वयम्, बहुपुम्स इत्यत्र तु सान्तप्रातिपदिकानुकरणम् भेदविवक्षा चातः सकारस्य संयोगान्तलोपः बहुपुम्स क् ह् इत्यवस्थायाम् अम् परक खय् सत्वान्मकारस्य रुत्वं स्यान्न च ककारस्य जश्त्वे सत्यम्परकखयोभावान्नरुत्वमिति वाच्यम् अनुकार्यानुकरणयोरभेदविवक्षायामनुकरणस्य सादृश्यज्ञानाधीनोपस्थित्यार्थविषयकबोधजनकत्वेऽपि शक्तिलक्षणान्यतरज्ञानाधीनोपस्थित्यार्थविषयकबोधजनकत्वरूपार्थवत्वाऽभावात् सुबनुत्पत्त्यागवित्ययमाहेत्यत्रापदान्तत्वेन वकारस्य "लोपःशाकल्यस्येति" सूत्रेण लोपाभावेनेवापदान्तत्वेन ककारस्य जश्त्वाभावात् ।

अर्थवत्वञ्च—वृत्तिविशिष्टत्वमर्थवत्वं वैशिष्ट्यञ्च स्वपर्याप्त्यधिकरणत्व, स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यत्वैतदुभयसम्बन्धेनेति प्राचीनाः ।

---

प्रभृति गण में एक वचनान्त पुम्स् शब्द का पाठ होने से बहुवचन में उससे कप् नहीं होगा । तथापि "शेषाद्विभाषा" इस सूत्र में विभाषापद ग्रहण होने से कबभावपक्षवाला जो बहु पुम्स् है, उसका अनुकारण करेंगें । भेद विवक्षा पक्ष मानकर सकार का 'संयोगान्तस्यलोपः इस सूत्र से लोप हो जायगा । क् ह् इन दोनों का अनुकरण करेंगे । बहु पुम् क् ह् इस अवस्था में अम्परक खय् होने से मकार को रुत्व हो । ककार को जश्त्व हो जाने पर अम्परक खय् का अभाव होने से रुत्व नहीं होगा यह नहीं कहना चाहिये, क्योंकि अनुकार्य अनुकरण में अभेद विवक्षा में अनुकरण में सादृश्य ज्ञानाधीनार्थबोधजनकत्व होने से अर्थवत्वाभाव रहेगा ।

अर्थवत्व का स्वरूप इस प्रकार का है "वृत्तिविशिष्टत्वमर्थवत्वम्", वैशिष्ट्यञ्च स्वपर्याप्त्यधिकरणत्व स्वज्ञानाधीनोपस्थितिप्रयोज्यशब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यत्वैतदुभयसम्बन्धेन-वृत्तियाँ

मिति चेन्न । "सुट्तिथोः" इत्यादाविकाराद्युच्चारणेन शास्त्राबोधिताजव्यवहितहल्स-मुदायस्यासाधुत्वबोधनात् । अत एव "उच्चैरुदात्तः" [ पा० सू० १।२।२९ ] इति सूत्रे

नव्यास्तु सूत्रे एवाभेदविवक्षा भवति लोकेऽभेदविवक्षा न भवति गवित्ययमाहेत्यत्र तु न दोषः, गवे इत्येतद्घटक गव्इत्यस्यानुकरणत्वस्वोकारात् । तस्मादुत्पन्नसुविभक्तेस्तु "हल्ङ्-याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्" इत्यादिलोपः, लोपःशाकल्यस्येति वलोपस्तु न शङ्क्यः प्रकृतिवदनुकरणे सति पूर्वंजातस्य भत्वस्यातिदेशात् । अनुकार्यादनुकरणमभिन्नमित्यभेदविवक्षायामर्थवत्वाभावान्नप्रातिपदि-कत्वन्न वा पदत्वम् । अभेदपक्षज्ञापकस्तु भू सत्तायामित्यादिनिर्देशः प्रातिपदिकत्वाभावेऽपि भू इत्यादेः साधुत्वं भवत्येव । ननु "अपदं न प्रयुञ्जीत्" इतिभाष्यादसाध्विदमिति चेन्न अपदमित्यस्य हि अपरिनिष्ठतमित्यर्थः । परिनिष्ठितत्वञ्च—अप्रवृत्तनित्यविध्युद्देश्य-तावच्छेदकाऽनाक्रान्तत्वम् । देवदत्तो भवतीत्यादौ तिङ्ङतिङ इति निघाते जातेऽतिङन्त पदपररूपोद्देश्यतावच्छेदकसत्त्वेऽपरिनिष्ठतत्ववारणायाप्रवृत्तेति । स्वरतीत्यादिविकल्प-सूत्रस्य पाक्षिकप्रवृत्तौ सेद्धेत्यादावसाधुत्ववारणायनित्यविधीति । अभेदपक्षेतु "अर्थवदिति-सूत्रस्यार्थवत्त्वरूपोद्देश्यतावच्छेदकानाक्रान्तत्वात्सूत्राप्रवृत्तावपि भू इत्यादिपरिनिष्ठतम् । परिनिष्ठितसाधुशब्दौ पर्यायौ । अनुकार्यादनुकरणं भिद्यते इति पक्षे तयोर्भेदविवक्षाया-मनुकार्य्यस्वरूपप्रतिपादकत्वेनार्थवत्वात् प्रातिपदिकत्वात् स्वादिविधिः भेदपक्षज्ञापकः भुवोवुग्लुङ्लिटोरित्यादिनिर्देशः । स्वसदृशशब्दमात्रबोधतात्पर्यकोच्चारणविषयत्वमनु-कारणत्वम् । स्वसदृशशब्दप्रतिपाद्यत्वे सति, शब्दत्वमनुकार्य्यत्वम् ॥ ककारादेरिति । आदिना हकारपरिग्रहः जश्त्वमुपलक्षणं ढत्वस्यापि । सुट् तिथोरित्यादाविति—इति, आदिपदद्वयेन झषस्तथोरित्यत्राकारस्य च परिग्रहः ।

शास्त्राबोधितेति । अचा अव्यवहितोऽजव्यवहितः अजव्यवहितश्चासौ हल्समुदा-यश्चाजव्यवहितहल्समुदायः, शास्त्रेणाबोधितो योऽजव्यवहित हल्समुदायस्तस्यासाधुत्व-मित्यर्थः । शास्त्राबोधितत्वञ्च = शास्त्रबोधितभिन्नत्वम् । ननु राज्ञ इत्यादौ शास्त्र-बोधितत्वं लोपस्य न तु अव्यवहितत्वस्येति प्रतियोग्यप्रसिद्धिरिति चेन्न शास्त्रजन्य-ज्ञानप्रयोज्यसाधुत्वप्रतिपत्तिकभिन्नत्वस्य विवक्षितत्वात् । साधुत्वस्य व्याकरणव्यङ्ग्य-जातिविशेषरूपत्वात् तत्प्रतिपत्तेः शास्त्रजन्यज्ञानप्रयोज्यत्वमक्षतमेव । असाधुत्वेति ।

तीन होती हैं शक्ति, लक्षणा, व्यञ्जनाभेद से । जैसे राम इस लक्ष्य में लक्षण इस प्रकार घटेगा स्वपदेन दशरथापत्य निरूपित शक्ति का ग्रहण होगा, तज्ज्ञानाधीनोपस्थिति होगी दशरथापत्य की उपस्थिति, तत्प्रयोज्य शाब्दबोध होगा दशरथापत्यविषयक शाब्दबोध तज्जनकत्वप्रकारक तात्पर्य होगा "रामशब्दः दशरथापत्यविषयक शाब्दबोधजनको भवतु" तात्पर्यविशेष्यत्व रामशब्द में चला जायगा । अर्थवत्व चला गया अतः राम की प्रातिपदिक संज्ञा होगी । उक्त अर्थवत्व अनुकरण में नहीं है प्रातिपदिक संज्ञा का अभाव होने से स्वादि की उत्पत्ति नहीं होगी, जैसे गवित्ययमाह इत्यादि में अपदान्त होने से "लोपः शाकल्यस्य" इस सूत्र से वकार का लोप नहीं होता, उसी प्रकार ककार को जश्त्वाभाव हो जायगा । नवीन तो सूत्र में ही अभेद विवक्षा मानते हैं, अतः नवीनों के मत से यहाँ पर भेदविवक्षा होगी तथा च वकार का लोप हो जायगा, यह नहीं कहना चाहिये क्योंकि गवेघटक गव् का अनुकरण करने पर प्रकृतिवदनुकरण होता है, अतः पूर्वजात भत्व का अतिदेश हो जाने से

'हल्' (मा० सू० १४)। इदं सूत्रं वल्रल्झल्शल्षु हकारग्रहणार्थम्। रुदिहि, स्वपिहि, 'रुदादिभ्यः सार्वधातुके' (पा० सू० ७।२।७६) इति वलादिलक्षण इट्। स्निहित्वा, स्नेहित्वा, 'रलो व्युपधाद्' (पा० सू० १।२।२६) इति वा कित्त्वम्। अदाग्धास्, 'झलो झलि' (पा० सू० ८।२।२६) इति सकारलोपः। अलिक्षत्, 'शल इगुपधात्' (पा० सू० ३।१।४५) इति क्सः।

---

भाष्यं "न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति" इति। स्कोरित्यादिस्तु सौत्रप्रयोगः। अत एवाटि हकारप्रयोजनकथनावसरे भाष्ये "शश्छोटि" [पा० सू० ८।४।३३] इत्युपन्यस्य तदुदाहरणं नोपन्यस्तम्। हकारपरशकारासम्भवेन शश्छोटीति प्रसङ्गोच्चारितमिति च कैयटेन व्याख्यातम्। अमि हकारप्रयोजनमिति च भाष्ये नोक्तमिति दिक्।

इदं सूत्रमिति। वलादिप्रत्याहाराश्च रेफेणैव सन्तु। हरन्त्यसित्थन्नान्योन्याश्रयपरि-

---

अतएवामादिव्यवहारस्य "ञमन्" इति नकारेण प्रत्याहाराश्रयणादिनैवोपपत्तौ मानुबन्धो न कार्यः। हकारमकारपरखयाद्यभावात् "पुमः खयि" इत्यादेर्नास्त्यतिप्रसङ्गः इति तत्सूत्रभाष्यं संगच्छतेऽन्यथा बहुपुम् क् ह् इत्यादौ रुत्वादिवारणाय तदावश्यकत्वे तदसङ्गतिः स्पष्टैव। एवञ्चैताद‍ृशस्यापभ्रंशवदसाधुत्वेन शास्त्रप्रवृत्तियोग्यता तेषु नास्तीत्याशयेन "अम् प्रत्याहारे हकारस्य ग्रहणरूपं प्रयोजनं नोपन्यस्तमिति भावः। इदञ्च तस्य समुदायस्य सत्त्वाभिप्रायेण वस्तुतस्तु सत्वमेव नेत्याह—अत एवेति ताद‍ृश समुदायस्य सत्वसाधुत्वयोरभावादेव। न पुनरिति। अचं विना केवलहल्रूपपदस्योच्चारणं=प्रयोगो न भवतीत्यर्थः।

व्यञ्जनस्येति—अचं विना विगता अञ्जना=अभिव्यक्तिर्यस्य तस्य व्यञ्जनस्य न चोक्तव्युत्पत्तौ न मानमिति वाच्यं "विना स्वरैस्तु नान्येषां जायते व्यक्तिरञ्जसा" इत्यभियुक्तोक्तेः। उच्चारणमपीति। एकस्याप्युच्चारणासम्भवेन ताद‍ृशसमुदायस्य सुतरां तदसम्भवेन तयोर्लाभः। यत्त्विदम्भाष्यं किम् मणिमन्त्रन्यायेन ताद‍ृशोच्चारणे प्रतिबन्धकम् उत् ताद‍ृशसमुदायस्यासाधुत्वतात्पर्यम्। आद्ये संयोगसंज्ञाविधायकशास्त्रस्य संज्ञप्रसिद्ध्यानर्थकत्वापत्तिः "लोपश्चेति द्विशकारको निर्देश इति भाष्यस्य चासङ्गतिः नान्त्यः एतद्भाष्यघटकोच्चारणशब्दस्यासाधुत्वाबोधकत्वादिति तन्न वाच्यवृत्या साधुत्वाबोधकत्वेऽपि लक्षणया तदर्थबोधकत्वसम्भवात्। नन्वेवं शास्त्राबोधिताजव्यवहितहल्समुदायस्या-

---

वकार का लोप नहीं होगा। तथापि 'सुट्तिथोः' 'हयवरट्' इत्यादि मे हकार वकार का उच्चारण होने से यह प्रतीत होता है कि शास्त्र से अबोधित अच् व्यवधानशून्य हल् समुदाय असाधु होता है। अतएव "उच्चैरुदात्तः" इस सूत्र के भाष्य में लिखा है केवल हल्रूप पद का प्रयोग नहीं होता क्योंकि एक व्यञ्जन का प्रयोग असम्भव होने से ताद‍ृश समुदाय का प्रयोग सुतरां असम्भव है।

व्यञ्जन शब्द की व्युत्पत्ति है 'अचं विना विगता अञ्जना अभिव्यक्तिर्यस्य तस्येति। शास्त्राबोधिताजव्यवहित हल्समुदाय को असाधु कहने पर 'स्को' इत्यादि में सकार ककार का समुदाय भी असाधु कहलायेगा यह आशङ्का नहीं करनी चाहिये सौत्र प्रयोग होने से।

शास्त्राबोधिताजव्यवहित हल्समुदाय को असाधु होने के कारण ही भाष्यकार ने अट् प्रत्याहार बोध्य वर्णों में हकार ग्रहण फल कथनावसर पर 'शश्छोटि' इस सूत्र को कहा। पर उसका उदाह-

हारस्तु "रन्त्यं हर्" इति न्यासेनावृत्त्या हर्प्रत्याहारबोधकसूत्रसमुदायान्त्यमिदित्यर्थेन वा सुकर इति भावः। ग्रहणार्थमिति। शषसहरित्येव तु नोक्तम्। खरि हकारग्रहणापत्तौ

साधुत्वे स्कोरित्यादौ सकारककारयोस्तादृशसमुदायस्याप्यसाधुत्वापत्तिरत आह स्कोरिति। आदिना व्योरित्यादिसंग्रहः। सौत्र इति। एवञ्च तत्रैवायं साधुरिति।

अत एवेति। तादृश हल्समुदायस्यासाधुत्वादेव। हकारप्रयोजनमिति। हकारग्रहण-प्रयोजनमित्यर्थः। तदुदाहरणम् = शश्छोटीत्यस्योदाहरणम्। हकारपरशकारासम्भवेनेति—हकारः परो यस्मादिति हकारपरः हकारपरश्चासौ शकारः हकारपरशकारस्तस्योक्तरी-त्यासम्भवेन। नोक्तमीति। एतेनेणशोरपि फलं नास्तीति सूचितम्। तच्च प्रतिपादितम्। प्रागुक्त-ञमङणनेति सूत्रस्थभाष्यासङ्गतिरप्यत्र बोध्या। तद् ध्वनयन्नाह—दिगिति।

द्वितीय हकाराभावे लकारस्याप्यसत्त्वमित्याशयेनाह—इदं सूत्रमिति। लकारसाध्य-प्रयोजनानामन्यथासिद्धिमाह—वलादौति। आदिना हलादिपरिग्रहः। ननु हलिति सूत्र-सत्त्वे "हलन्त्यमित्यास्यावृत्या अन्योन्याश्रयपरिहारो भवति, अधुना कथमत आह रन्त्यं-हरितिन्यासेनेति अत्र वाक्यद्वयम् रन्त्यमित्येकम्, हरिति द्वितीयम्, रन्त्यमित्यस्यार्थ-भवति, उपदेशेऽन्त्यं र् इत्संज्ञको भवति। इत्संज्ञाज्ञाने सति" "आदिरन्त्येनसहेता" इत्यस्य वाक्यार्थबोधे सति हरित्यस्यार्थो भवति उपदेशेऽन्त्यं हर् इत्संज्ञको भवति, तदा नान्योन्याश्रय इति, न्यासभेदे गौरवमित्याशयेनाह आवृत्येति—हरन्त्यं हरन्त्यमित्यावृत्तौ प्रथमस्यार्थो भवति, हर्प्रत्याहारबोधकसूत्रसमुदायस्यान्त्यमिदिति। हरः अन्त्यमिति—

रण नहीं लिखा क्योंकि शास्त्राबोधिताजव्यवहित हल्समुदाय असाधु होता है। अतः श् ह् इस समुदाय का उदाहरण नहीं दिया। प्रदीपकार ने भी व्याख्या करते हुए लिखा हकार परे हो जिससे एतादृश हल्समुदाय असम्भव होने से प्रसङ्गतः 'शश्छोटि' इसका उच्चारण किया। अम् प्रत्याहार बोध्य वर्णों में हकार ग्रहण फल भाष्यकार ने नहीं कहा, अतः बहुपुम् क् ह् इस स्थल में 'पुमः खय्यम् परे इस शास्त्र की प्रवृत्ति नहीं होगी शास्त्राबोधिताजव्यवहित हल्समुदाय असाधु होने से।

द्वितीय हकाराभाव में अनुबन्ध लकार भी व्यर्थ हो जायगा अतः मनोरमाकार लिखते हैं वल् रल झल् शल् प्रत्याहार-बोध्य वर्णों के अन्तर्गत हकार ग्रहणार्थ इस सूत्र की आवश्यकता है। हकार वल् प्रत्याहार बोध्य होने से 'रुदिहि स्वपिहि' इन प्रयोगों की प्रक्रिया अवस्था में 'रुदादिभ्यः सार्वधातुके' इस सूत्र से वलादि सार्वधातुक निमित्तक इट् का आगम होता है। रल् प्रत्यारबोध्य हकार होने से स्निहित्वा, स्नेहित्वा इस प्रयोग की प्रक्रिया अवस्था में 'रलो व्युपधाद्धलादेःसंश्च' इस सूत्र से इकारोपध रलन्त से परे सेट् क्त्वा विकल्प से कित् होता है। झल् प्रत्याहार बोध्य हकार होने से अदाग्धाम् इस प्रयोग की प्रक्रियावस्था में 'झलो झलि' से सिच् के सकार का लोप होता है। शल् प्रत्याहारबोध्य हकार होने से अलिक्षत् प्रयोग की प्रक्रियाअवस्था में 'शल इगुपधादनिटः क्सः' इस सूत्र से च्लि को क्सादेश होता है।

लकार-साध्य जो फल हैं उनको अन्यथा सिद्ध करते हैं। वलादि प्रत्याहार रेफपर्यन्त ही हो हल् सूत्र रहने पर 'हलन्त्यम्' की आवृत्ति करके अन्योन्याश्रय दोष का परिहार होता है, अधुना किस तरह से होगा? यदि यह कहो तो नहीं कहना चाहिये, क्योंकि 'रन्त्यंहर् इस तरह करने पर अन्योन्याश्रय का वारण हो जायगा' रन्त्यम् एकवाक्य होगा, हर् यह द्वितीय वाक्य होगा, प्रथम का अर्थ होगा उपदेश में अन्त्य र् इत्संज्ञक होता है। इत्संज्ञा का ज्ञान होने पर 'आदिरन्त्येनसहेता'

हलन्त्यम् (पा० सू० १।३।३)। सूत्रेऽन्त्यमिति। हलि अन्त्यमिति विग्रहे सप्तमीति योगविभागात् 'सुप्सुपा' (पा० सू० २।१।४) इति वा समास इति भावः।

हरिर्हरतीत्यादौ विसर्गापत्तेः। सप्तमीति। अधिकरणकारकस्य कर्त्राद्यन्वयद्वारा क्रियान्वया-दस्ति सामर्थ्यमिति भावः। अस्य योगविभागस्य भाष्येऽदर्शनादाह—सुप्सुपेतीति।
अनेनापि साधनस्यागतिकगतित्वादाह—यद्वेति। हलः=हलिति सूत्रस्यान्त्यमिति

विग्रहो भवति। हर् पदस्य स्वघटितत्वसम्बन्धेन हकारादिरेफान्तसमुदाये लक्षणा तथा च हकारादिरेफान्तसमुदायघटकान्त्यस्येत्यर्थः। अनया रीत्या "आदिरन्त्येन सहेता" इत्यस्य वाक्यार्थबोधे सति "हरन्त्यमित्यस्यार्थो भवति, उपदेशेऽन्त्यं हर् इत्संज्ञकस्तथा चानया रीत्यान्योन्याश्रयवारणेऽपि वल्रल्शल्षुहकारग्रहणार्थमित्युक्तम्।

अन्योन्याश्रयत्वञ्च स्वग्रहसापेक्षग्रहकत्वस्वोत्पत्त्यधीनोत्पत्तिकत्वान्यतरसम्बन्धेन परस्प-रविशिष्टत्वम्। नन्विदं सूत्रमित्यादिना यत्प्रयोजनं मूलेऽभिहितं तद् द्वितीयहकारमात्रस्यैव तथा च स हकारस्सकारान्तरं पाठ्यः हल्सूत्रं तु नारब्धव्यमत आह शषसहरित्येवेति—विसर्गापत्तेरिति। न च प्रेष्यन्ब्रुवोर्हविष इति निर्देशेन हकारे परे विसर्गो नेति वाच्यं-सुगण् हसति प्रत्यङ् हसति इत्यत्र ङणोः कुक्टुगित्यस्यापत्तेः। न च तत्रापि "एङ् ह्रस्वादिति निर्देशेन न दोष इति वाच्यमनेकस्य ज्ञाप्यस्य वचनस्य कल्पनापेक्षया ह्रस्व परत्र पाठे एव लाघवमिति ज्ञापकानां सौत्रत्वेनोपपत्तौ ज्ञापकत्वे मानाभावाच्च।

यदि हलीत्यस्यान्त्येन्वयः स्यात्तदाधिकरणंकारकं न स्याद् यदि क्रियायामन्वयः—स्यात्तदा सामर्थ्याभावः स्यादत आह—अधिकरणेति। अत्र प्राञ्चोऽधिकरणकारकस्य कर्तृकर्मान्यतरद्वारकेण स्ववृत्तित्वसम्बन्धेन साक्षादेव क्रियायामन्वयः सम्बन्धस्तुपरम्परया, स्वमधिकरणं हलीति तद्वृत्तिः कर्ता अन्त्यमिति तद्वृत्तिः क्रिया स्यादिति यतः क्रियान्व-यित्वं कारकत्वं, करोति स्वसम्बन्धेन क्रियायां विशेषरूपत्वं सम्पादयति, इति व्युत्पत्त्या कारकस्य साक्षात्क्रियायामेवान्वय इति वदन्ति।

नव्यास्तु करोति क्रियां निर्वर्तयतीति भाष्यकारीयनिर्वचनबलेन क्रियाजनकत्वं-कारकत्वमित्येव वदन्ति। अधिकरणस्य क्रियान्वयादन्त्यपदार्थेनासामर्थ्यात्समासाभावात्।

इसका वाक्यार्थबोध हो जाने पर हर् इसका अर्थ होगा उपदेश में अन्त्य हर् इत्संज्ञक होता है, इस प्रकार अन्योन्याश्रय का वारण हो जायगा। किन्तु रन्त्यं हर् यह न्यास भेद करना गौरव है, अतः आवृत्ति से अन्योन्याश्रय का परिहार करते हैं। हरन्त्यम् हरन्त्यम् इस प्रकार आवृत्ति करेंगे प्रथम का अर्थ होगा हर् प्रत्याहारबोधक सूत्र समुदाय के अन्त्य की इत्संज्ञा होती है।

हरः अन्त्यम् यह प्रथम हरन्त्यम् का विग्रह होगा। हर् यह कोई सूत्र नहीं है अतः हर् पद की स्वघटितत्व सम्बन्ध से हकारादि रेफान्त समुदाय में लक्षणा होगी। इस तरह से 'आदिरन्त्येन सहेता' इसका वाक्यार्थबोध हो जाने पर उपदेश अवस्था में विद्यमान जो हर् उसकी इत्संज्ञा होती है, अन्योन्याश्रय का वारण हो जाने पर भी वल् रल् झल शल् में हकार ग्रहणार्थ यह कहा। यद्यपि शषसहर् एतादृश सूत्र करने पर खर् प्रत्याहार बोध्य वर्ण हकार हो जाने से हरिर्हरति में विसर्ग होने लगेगा किन्तु 'प्रेष्यन्ब्रुवोर्हविषः' इस निर्देश से दोषवारण हो जाने पर भी सुगण् हसति, प्रत्यङ् हसति यहाँ पर 'ङ्णोः कुक् टुक् शरि' इससे कुक् टुक् होने लगेगा किन्तु 'एङ् ह्रस्वात्सम्बुद्धेः इस

यद्वा षष्ठीतत्पुरुषोऽयम्। स्यादेतत्। हलित्येकदेशस्यैव तन्त्रावृत्त्येकशेषान्यतमस्तु। हस्य ल् इति च व्याख्यास्यते। सामीप्यं षष्ठ्यर्थः।

---

विग्रह इति भावः। "षष्ठी स्थाने" इत्यस्य च "ऊदुपधाया गोहः" [पा० सू० ६।४।८९] इत्यादाविव गुणानां च परार्थत्वादिति न्यायेन वाऽप्रवृत्तिरिति बोध्यम्। तन्त्र वृत्त्येकशेषान्य-

---

स्ववृत्तित्वसम्बन्धेनाधिकरणस्य कर्तर्यन्वयः स्ववृत्तित्वसम्बन्धेन कर्तुः क्रियायामन्वयः। अत्र सम्बन्धः साक्षादन्वयस्तु परम्परया स्वं हल्रूपाधिकरणं तद्वृत्तिरन्त्यरूपकर्त्तास्ति। स्वमन्त्यमिति तद्वृत्तिः क्रियास्ति। अस्य योगविभागस्येति। सप्तमीयोगविभागस्य। अगतिकगतिकत्वादिति। अगतिकप्रयोगसाधकत्वादित्यर्थेऽत्र बहुव्रीहिपूर्वपदकषष्ठीतत्पुरुषः स्वार्थे क इति भावः।

विग्रहः इति। हलः अन्त्यमिति विग्रहः, हलिति सूत्रस्यान्त्यमिदितिभावः। नन्वेवमपि "षष्ठीस्थानेयोगा" इति परिभाषया हलः स्थाने योऽन्त्यः स इदित्येव सूत्रार्थः कथन्नस्यादुदाहरणश्चैतस्य "ङे प्रथमयोर"मित्यनेन सुस्थाने जातोऽम् भविष्यतीत्यत आह "षष्ठीस्थाने" इत्यादि गोह इत्यादाविवेति। यथा "ऊदुपधाया गोह" इत्यत्रोपधापद श्रवणेन अप्रवृत्तिरिति भावः। तत्र हि उपधापदं समुदायांशे नित्यसाकाङ्क्षन्तथाहि—

समुदायविशिष्टत्वमुपधात्वम्—वैशिष्टयञ्च-स्वघटकत्वम्, स्वघटकान्त्यालावधिकपूर्वत्वमेतदुभयसम्बन्धेन यथा—राजन् सु इत्यत्र समुदायो राजन्निति तद्वैशिष्टयं जकारोत्तराकरे स्वं राजन्निति समुदायस्तद्घटकत्वं तस्मिन्नकारे एवं राजन्नितिसमुदायस्तद्घटकोऽन्त्योऽल् नकारस्तदवधिकपूर्वत्वमपीति। तथा च नित्यसाकाङ्क्षार्थबोधकपदसमभिव्याहृतषष्ठयाऽसति तात्पर्यनिश्चायकप्रमाणान्तरे आकाङ्क्षयमाणसम्बन्धार्थबोधकत्वमिति नियमेन गोह इति षष्ठया आकाङ्क्षयावयवावयविभावसम्बन्धस्य निर्धारितत्वेन षष्ठी स्थाने इत्यस्य प्रवृत्तिः। एवमेव "हलन्त्यमित्यत्रापि हल इति षष्ठया" अन्त्यपदस्यनित्यसाकाङ्क्षस्य समभिव्याहारेणाकांक्षयमाणावयवावयविभावसम्बन्धबोधकत्वस्याकाङ्क्षयैवनिर्धारणेन

---

निर्देश से यहाँ का भी दोष वारण हो जायगा तथापि अनेक ज्ञाप्य वचन-कल्पना की अपेक्षा पर में पाठ करना ही लाघव है।

यदि हल् इसका अन्त्य अन्वय हो तो हल् में क्रियाजनकत्वाभाव होने से कारकत्व नहीं रहेगा, यदि क्रिया में अन्वय हो तो अन्त्य के साथ अन्वयाभाव होने से सामर्थ्याभाव हो जायगा तो समास नहीं होगा, अतः अधिकरण का स्ववृत्तित्वसम्बन्धेन कर्त्ता में अन्वय होगा और कर्त्ता का स्ववृत्तित्व सम्बन्धेन क्रिया में अन्वय होने से सामर्थ्य बन जायगा, और 'सप्तमी शौण्डैः' इस सूत्र में 'सप्तमी' योगविभाग से समास होगा। सूत्र का अर्थ है सप्तम्यन्त का समर्थ सुबन्त के साथ समास होता है। किन्तु योगविभाग भाष्य में नहीं देखा गया अतः मनोरमाकार ने लिखा 'सुप्सुपा' इससे समास हो जायगा, 'सुप्सुपा' यह अगतिक प्रयोग साधक है, अतः कहा अथवा षष्ठी तत्पुरुष है।

हलः अन्त्यम् यह विग्रह है। इसका अभिप्राय है, "हल्" इस सूत्र के अन्त्य की इत् संज्ञा होती है। यद्यपि षष्ठी तत्पुरुष कर लेने पर भी 'षष्ठीस्थाने योगा' इस परिभाषा के बल से स्थान पदार्थ की उपस्थिति होने से इसका अर्थ होगा हल् के स्थान में जो अन्त्य वह इत्संज्ञक होता है

तममस्त्विति। यद्यपीदृशे विषये उच्चारयितुस्तन्त्रैकशेषान्यतरेणोच्चारणं बोद्धुस्त्वावृत्त्या बोध इत्येवानुभवसिद्धं, तथाऽपि व्यवस्थितैवान्यतमसत्ताऽनेन बोध्यत इति न दोषः। एकशेषश्च प्रत्याख्यातोऽसहविवक्षायामपि शास्त्रमात्रप्रक्रियोपयोगीत्याशयेन पृथगुक्तः।

षष्ठीस्थाने इत्यस्य न प्रवृत्तिः। अन्त्यपदमपि समुदायांशे नित्यसाकाङ्क्षं स्वघटकत्वम् स्वघटकवर्णप्रागभावाधिकरणक्षणावृत्त्युत्पत्तिमत्वमेतदुभयसम्बन्धेन समुदायविशिष्टत्वस्यान्त्यपदार्थत्वात्। गोह इति षष्ठ्या यथावयवावयविभावार्थकत्वस्यनिर्णयस्तथान्त्यपदश्रवणेन हल इति षष्ठ्या अपि, तथा चानियमे नियमकारिण्याः 'षष्ठीस्थाने' इति परिभाषाया अप्रवृत्तिरिति भावः।

न्यायेनेतेति। गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्। इदञ्च—नहि भिक्षुको भिक्षुकान्तरं याचितुमर्हति सत्यन्यस्मिन्नभिक्षुके इति भाष्योक्तन्यायमूलकमेव गुणानाञ्चपरार्थत्वात् समत्वादसम्बन्ध इत्यन्वयः। संज्ञासूत्रस्य परिभाषासूत्रस्य च विधिशास्त्रोपकारकत्वेन गुणत्वात्तयोः समत्वमस्त्यतः परस्परमनयोरुपकार्योपकारकभावो—न भवति। हलन्त्यमिति सम्पूर्णसूत्रावृत्त्यपेक्षयैकदेशस्यैवावृत्तिरस्त्विति शङ्कते मूले।

तन्त्रावृत्तीति। तन्त्रत्वञ्च—अत्र शास्त्रे सकृदुच्चरितत्वे सत्यनेकार्थबोधकत्वम्, एकोच्चारणेनानेकार्थबोधनमिति यावत्। तच्च द्विविधम् अर्थतन्त्रम् शब्दतन्त्रञ्च, यत्र प्रवृत्तिनिमित्तनिष्ठैकप्रकारतानिरूपितनानाविशेष्यताकबोधेच्छा तत्रार्थतन्त्रम्। यथा ब्राह्मणत्व–

उदाहरण होगा 'ङे प्रथमयोरम्' जो ङ्‍ के स्थान पर अम् होता है, तथापि यह उचित नहीं क्योंकि यथा 'ऊदुपधाया गोहः' यहाँ पर उपधापद श्रवण होने से अवयवावयविभाव सम्बन्ध का निर्णय हो जाता है तथैव अन्त्यपद श्रवण होने से अवयवावयविभाव सम्बन्ध का निर्णय हो जायगा तथाच अनियमे नियमकारिणीत्वरूपा 'षष्ठी स्थाने योगा' इस परिभाषा की प्रवृत्ति नहीं होगी। अथवा 'गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्' इस न्याय के कारण परिभाषा की प्रवृत्ति नहीं होगी। क्योंकि संज्ञासूत्र और परिभाषासूत्र विधिशास्त्र के उपकारक हैं। परिभाषा सूत्रों तथा संज्ञा सूत्रों में समता है अतः परस्पर दोनों में उपकार्योपकारक भाव नहीं होगा। भाष्यकार ने कहा है-'नहि भिक्षुको भिक्षुकान्तरं याचितुमर्हति सत्यन्यस्मिनभिक्षुके' इति। "स्यादेतत्", यहाँ पर सम्भावना में लिङ् लकार है, अर्थात् जो वक्ष्यमाण है हलन्त्यम् घटक हल् इसमें तन्त्र हो या एकशेष हो या इसकी आवृत्ति हो इसकी सम्भावना है। आवृत्ति से बोद्धाओं को बोध होता है, तन्त्र और एकशेष से वक्ताओं को ही बोध होता है, इस सिद्धान्तानुसार बोद्धाओं के बोध वास्ते आवृत्ति आवश्यक है। आवृत्त जो हल् उसका अर्थ होगा 'ह समीपवर्तिलकारः इत्सञ्ज्ञको भवति" सामीप्य षष्ठ्यर्थ होगा। एकोच्चारण से अनेकार्थ का ज्ञान होना तन्त्र है। तन्त्र दो प्रकार के होते हैं। शब्दतन्त्र और अर्थतन्त्र के भेद से। विस्तर तो संस्कृत व्याख्या में है।

यद्यपि 'ह समीपो ल् इत् हलरूपान्त्यश्चेत्' इस तरह के विरुद्धानेकार्थ विषय में वक्ता तन्त्रैकशेषान्यतर का उच्चारण कर सकता है, किन्तु बोद्धाओं को तो आवृत्ति से ही बोध होगा, यह अनुभव सिद्ध है। अनुभवापलाप नहीं हो सकता। जैसे सुखित चित्त में अर्थात् सुखयुक्त चित्त में, दवदहन दीधिति = अर्थात् वनाग्नि समूह को उद्देश्य करके, तुहिन दीधिति = अर्थात् चन्द्रकिरण का विधान करते हैं, किन्तु दुःखित चित्त में तुहिनदीधिति को उद्देश्य करके दवदहन दीधिति का विधान करते हैं। तथाच उद्देश्य विधेय भेद से विरुद्धार्थ प्रतीयमान है। अतः आवृत्ति ही होती है। अतः जिस

सामीप्यं षष्ठ्यर्थं इति। "षष्ठीस्थाने" इत्यस्य गुणानां च परार्थत्वादिति न्यायेनाप्रवृत्तिः।

निष्ठैकप्रकारतानिरूपितनानाविशेष्यताकबोधेच्छा इमे ब्राह्मणा इत्यत्रास्त्यतोऽर्थतन्त्रमित्यत्रैकशेषो न भवति। यत्र प्रवृत्तिनिमित्तनिष्ठनानाप्रकारतानिरूपितनानाविशेष्यता तत्र शब्दतन्त्रम्। यथा अक्षा इत्यादौ अत्राक्षत्वरूपं प्रवृत्तिनिमित्तम् तच्च त्रिविधम् शकटाक्ष-देवनाक्ष-विभीतकाक्षभेदेन। तथा चाश्रयभेदेन विषयताया भेदात् नानाप्रवृत्तिनिमित्तनिष्ठनानाप्रकारतानिरूपितनानाविशेष्यताकबोधो जायते, इति शब्दतन्त्रमत्र। एवञ्च नानाप्रवृत्तिनिमित्तनिष्ठनानाप्रकारतानिरूपितनानाविशेष्यताकबोधो यत्र तत्र शब्दतन्त्रम्। यत्रैकप्रवृत्तिनिमित्तावच्छिन्नबोधस्तत्रार्थतन्त्रम्।

एकशेषेति। यत्र सकृदुच्चारितस्यैकस्य शब्दस्य समानानेकार्थपरता तत्र श्रुतस्यैकस्य शक्त्या लक्षणया वाऽनेकार्थबोधकत्वसम्भवो यत्र तु विरुद्धानेकार्थबोधकता तत्रैकानुसन्धानेनानेकार्थबोधकत्वासम्भवः। यथा पुण्जनाश्रयोऽयं देश इत्यादौ अत्र हि पुण्याश्रयोजन इत्यर्थविवक्षायां तात्पर्यग्राहकसत्वे धार्मिकत्वेन चरितार्थस्यार्थस्यार्थान्तराबोधकत्वम्। यदा तु रूढ्या यातुधानस्य बोधो जायताम् इति तात्पर्यतन्त्रसामग्रीसत्वे यातुधानबोधकत्वन्न तदा धार्मिकबोधकत्वमिति तादृशस्थले आवृत्ति विना नानेकार्थप्रतीतिरिति। प्रकृते हल्शब्दस्य विरुद्धार्थकतया तन्त्रनिर्देशस्यावृत्तेश्च समानफलकत्वाभावेनान्यतमशब्दप्रयोगानुपपत्तिरित्याशयेन शङ्कते यद्यपीति। ईदृशे विषये विरुद्धार्थयोर्युगपद्बोधाजनके इत्यर्थः।

व्यवस्थितैवेति। नियतैव। एवकारेणैच्छिक्या व्यावृत्तिः। सा च व्यवस्था वक्तृश्रोत्रन्यतरत्वेन कल्पनीया वक्तुस्तन्त्रेणैकशेषेण वोच्चारणम् बोद्धुस्तूभयत्राप्यावृत्तिरेवेति—एवञ्च तन्त्रावृत्तिर्वैकशेषावृत्तिर्वा। न दोष इति। वक्त्रभिप्रायेण त्रितययोजने योऽनुभवविरोधरूपो दोषः स नेत्यर्थः।

नन्वेवमप्येकशेषस्य प्रत्याख्यानादन्यतमशब्दानुपपत्तिरत आह, एकधर्मावच्छिन्नस्यैकधर्मावच्छिन्नसंसर्गेणैकधर्मावच्छिन्नेऽन्वयरूपायां सहविवक्षायां द्वन्द्वो भवति। तस्यापवाद एकशेषो—यथा धवखदिरौ छिन्धीत्यत्रैकधर्मः समुदायत्वरूपस्तदवच्छिन्नः समुदायः तस्य, एकधर्मः क्रियाकर्मभावः, तत्संसर्गे एकधर्मः छेदनत्वरूपः तदवच्छिन्नेऽन्वये सति द्वन्द्वसमासो भवति। ईश्वरं गुरुञ्च भजस्व इति प्रत्येकान्वयाभिप्रायेण प्रयोगे, एकस्य कर्तृतया परस्य कर्मतयान्वये ध्यानभजनरूपविभिन्नक्रियायामन्वये च सहविवक्षाया अभावात् समासाभावः। तन्त्रेणैव लौकिकलक्ष्याणां सिद्ध्या "सरूपाणामित्यस्य भाष्य-

व्यवस्था से वक्ता बोद्धा प्रत्येक का निर्वाह हो वही अन्यतम सत्ता इससे प्रतीत होती है। वक्तृबोद्ध्रन्यतरसम्बन्धित्वेन तीनों में ऐच्छिक विकल्प विवक्षित है। तन्त्रावृत्ति एकशेषावृत्ति, अथवा आवृत्ति इससे तीनों की सत्ता प्रतीत होती है। तथा च वक्ता अपने बोध के लिए तन्त्र अथवा एकशेष का उच्चारण करेगा, क्योंकि आवृत्ति की अपेक्षा इसमें लाघव है। बोद्धा के बोधनार्थ आवृत्ति ही होगी इस बात को शब्दरत्नकार स्पष्ट करते हैं, इस अन्यतम शब्द से नियत ही अन्यतम सत्ता गृहीत है। एकशेष का यद्यपि भाष्यकार ने प्रत्याख्यान किया है, तथापि असहविवक्षा रहने पर भी शास्त्र की प्रक्रिया के निर्वाह के लिए आवश्यक होने से उसको पृथक् कहा गया। हस्य ल् हल् यहाँ

न च "इको गुणवृद्धी" [ पा० सू० १।१।३ ] इति सूत्रे तच्छेषपशब्देन परिभाषयोरपि गुण-गुणिभाव उक्त इति वाच्यम् । "सार्वधातुकार्धधातुकयोरलोन्त्यस्येकोगुणवृद्धी" इति सूत्रत्रयस्य लक्ष्यसंस्कारकमहावाक्ये विशेष्यविशेषणभावमादायैव तच्छेषव्यवहारो न तु

कृता प्रत्याख्याततत्वेऽपि" 'सर्वादीनि सर्वनामानि' 'द्विर्वचनेऽपि' इति सूत्रयोः एकशेषनिर्देशाद्वासिद्धम् इति तदुक्त्याऽसहविवक्षायामपि सौत्रमात्रप्रयोगार्थं तस्यावश्यकत्वं सूचितम् । सर्वनामानि इति पदे, एकशेषेण सर्वनामानि सर्वार्थवाचकानि यानि सर्वनामानि सर्वनामसंज्ञकानि, इत्यर्थे एकत्रान्वयाभावेन "द्विर्वचने" इत्यस्यैकशेषेणैकस्य द्विर्वचने कर्त्तव्ये इत्यर्थकत्वात्, क्रियायामन्वयेन द्वितीयस्य द्वित्वनिमित्तेऽचीत्यर्थकतयाऽजादौ प्रत्ययेऽन्वयेनैकत्रान्वयाद्यभावादुक्तरूपा सहविवक्षा नास्तीति तत्रैकशेषार्थसूत्रमित्याशयेन मनोरमाकृता तन्त्रात्पृथगेकशेष उक्त इति । आशयेनेति । भाष्यकारस्येति शेषः ।

पृथगुक्त इति । मनोरमाकारेणेति शेषः । ननु सामीप्यं षष्ठ्यर्थो न युक्तः "षष्ठी स्थाने" इति परिभाषायाः विद्यमानत्वादत आह षष्ठी स्थाने इत्यस्येति इको गुणवृद्धीति सूत्रे इति ।

इको गुणवृद्धीति सूत्रे भाष्ये, किं पुनरयमलोन्त्य शेषः, आहोस्विदलोन्त्यापवादः, कथञ्चायंतच्छेषः स्यात् कथं वा तदपवादः यद्येकं वाक्यम् तच्चेदञ्चालोन्त्यस्यविषयो-भवन्ति, इकोगुणवृद्धी, अलोन्त्यस्येति । ततोऽयं तच्छेषोऽथ नानावाक्यम् । अलोन्त्यस्य विषयो भवन्ति, इको गुणवृद्धी, अन्त्यस्य चानन्त्यस्य च ततोऽयन्तदपवाद इति । "सार्वधातुकार्धधातुकयोरिति गुणविधायकशास्त्रे" अङ्गस्येति स्थानषष्ठ्या "अलोन्त्यस्य" इत्युपतिष्ठते, गुणशब्देन विधेयबोधकतया च इक इति वृद्धेः क्रमिकत्वाद्विशेष्यभावे कामचाराच्चपूर्वमिकाङ्गं विशेष्यते—इगन्ताङ्गस्य गुणो भवति स च भवन्नलोन्त्यस्येत्य-न्त्यस्येत्युच्यते तदा सः = अलोन्त्यस्येतिसूत्रम् अस्य इको गुणवृद्धी इत्यस्य शेषो भवति तच्छेष इत्यत्र बहुव्रीहिः यदा तु 'अङ्गस्य' इति षष्ठीपूर्वमन्त्येनाला विशेष्यते, अङ्गा-न्त्यस्य गुणो भवति इति स च भवन्निगभिन्नस्येति "इगभिन्नस्यान्त्यालभिन्नस्येक इति विशेष्यविशेषणभावव्यत्यासकल्पनेन द्विधा तच्छेषपक्षो भवति उभयथापि यत्रेगभिन्ना-न्त्याल् स्यात् तत्रैवोपस्थितिरनयोः स्यादिति" मिदेर्गुण इत्यादावुपस्थितिरेव न स्यादिति सर्वस्य मिदेर्गुणः स्यादिति तच्छेषपक्षोऽसङ्गतः ।

यदि तु अङ्गस्येत्यवयवषष्ठी तदाङ्गावयवस्येकोगुण इत्याद्यर्थं इति स्थानषष्ठ्यभावेन "अलोऽन्त्यस्य इत्यस्योपस्थितेरभावस्तदपवादपक्ष इति परिभाषयोरपि गुणगुणिभाव-

पर 'षष्ठी स्थाने' इस परिभाषा के बल से स्थान पदार्थानुयोगिक सम्बन्ध की प्रतीति होगी तथा च हकार के स्थान में जो लकार वह इत्संज्ञक होता है, यह अर्थ होगा । इस आशङ्का का समाधान है कि संज्ञाशास्त्र और परिभाषा शास्त्र विधिशास्त्र के उपकारक होते हैं अतः परस्पर अङ्गाङ्गिभाव नहीं होता । यद्यपि 'इको गुणवृद्धी' इस सूत्र में तच्छेष शब्द से 'इको गुणवृद्धी' तथा 'अलोन्त्यस्य' इन परिभाषाओं में भी गुणगुणिभाव कहा गया है ।

तच्छेप शब्द में तत्पुरुष और बहुव्रीहि दोनों समास विवक्षित हैं । अर्थात् तस्य शेषः तच्छेषः, सः शेषो यस्यासौ तच्छेषः । तथापि यह कहना उचित नहीं क्योंकि 'सार्वधातुकार्धधातुकाव्यवहित

यद्वा मास्तु तन्त्रादि। अस्तु समाहारद्वन्द्वो हल् च ल् चेति। लकारस्य संयोगान्तलोप इति चेन्मैवम्।

आद्ये समासस्य क्लिष्टत्वात्। न हि ब्राह्मणकम्बल इत्यादौ ब्राह्मणसमीपवर्त्यन्यदीयः कम्बलः प्रतीयते। न वा चित्रगुशब्दाच्चित्रगवीणां समीपवर्ती वृक्षादिः

---

गुणगुणिभावेन परस्परापेक्षत्वेन चेति कैयटेन स्पष्टमुक्तः। एतन्मूलकतयैव तत्पक्षासम्भवस्य तेनोक्तेश्चेति भावः।

क्लिष्टत्वादिति। 'ब्राह्मणस्य कम्बलः' इत्यादावसत्यपि प्रकरणादौ स्वस्वामिभावादिप्रतीतिवदनन्तरसमीपादिशब्दप्रयोगमन्तरेण सामीप्याद्यप्रतीतेः तस्य षष्ठ्यर्थत्वाभावात्त-

---

दर्शनादत्रापि षष्ठीस्थाने इत्यस्य प्रवृत्तिः स्यादिति भावः।" तच्छेषशब्देन = तस्य शेषः तच्छेषः सः शेषो यस्येति वेत्यर्थकतच्छेषशब्देन। शेषशब्दो विशेषणपरः। बहुव्रीहितत्पुरुषाभ्यामिकोगुणवृद्धीत्यस्यालोन्त्यपरिभाषां प्रति विशेष्यत्वं पर्यायेण बोध्यते। परिभाषयोः =अलोन्त्यस्य, इको गुणवृद्धी, इत्यनयोः परिभाषयोः, गुणगुणिभावः = अङ्गाङ्गिभावः।

"लक्ष्यसंस्कारकमहावाक्ये इति। लक्ष्यस्य संस्कारकं लक्ष्यसंस्कारकं तच्च महावाक्यं लक्ष्यसंस्कारकमहावाक्यम् तस्मिन् "सार्वधातुकार्द्धधातुकयोरित्यत्र परिभाषोपस्थाप्यार्थस्य इकः इत्यस्य, अन्त्यस्यालः इत्यस्य च विशेष्यविशेषणभावेन सार्वधातुकार्द्धधातुकाव्यवहितपूर्वस्याङ्गावयवस्यान्त्यालभिन्नेकः इगभिन्नोन्त्यालो वा गुण इति महावाक्यार्थे विशेष्यविशेषणभावमादायैव तच्छेषव्यवहार इति।" गुणगुणिभावेन = अङ्गाङ्गिभावेन। परस्परापेक्षत्वेन = परस्परनिमित्तनिमित्तिभावेन यथाविधिपरिभाषयोर्गुणगुणिभावेन विशेषणविशेष्यभावो यथा चोत्सर्गापवादयोः परस्परसापेक्षत्वेन न तथा प्रकृते, इति भावः। स्वस्वामिभावादिति। स्वश्च स्वामी च स्वस्वामिनौ तयोर्भावः। प्रकृतिजन्यबोधे प्रकारीभूतो भावः यथा गोर्भावः गोत्वमित्यत्रप्रकृतिजन्यबोधेगोत्वविशिष्टस्य तत्र प्रकारीभूतं गोत्वन्तदेव भावपदार्थः। तथा च भावपदस्य द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येकमन्वयः। प्रतीतवदिति। यथा ब्राह्मणस्य कम्बल इत्यादौ स्वस्वामिभावस्य प्रतीतिर्भवति तथाऽनन्तरादिशब्दप्रयोगंविना सामीप्यं नहि प्रतीयते।

षष्ठ्यर्थत्वाभावादिति। सामीप्यस्यषष्ठ्यर्थत्वाभावेन सामीप्यार्थे समासोऽपि न भवति। तत्प्रयोगेत्विति। समीपादि पदप्रयोगेत्वित्यर्थः। असामर्थ्यादिति। हलोरिति शेषोऽन्वयस्यैवाभावादितिभावः। समासे स्वीक्रियमाणेसतीतिशेषः। तत्र षष्ठीसमासे।

---

पूर्वस्याङ्गावयवस्यान्त्यालभिन्नेकः, इगभिन्नान्त्यालो वा गुणः' इस लक्ष्यसंस्कारक महावाक्य में अन्त्याल् रूप जो इक् यहाँ पर इक् विशेष्य हुआ, और इक् रूप जो अन्त्य अल् इसमें अन्त्य अल् विशेष्य हुआ, यहाँ विशेष्य विशेषणभाव को लेकर ही तच्छेष व्यवहृत है, अङ्गाङ्गिभाव अथवा परस्पर निमित्तनिमित्तीभाव लेकर तच्छेष व्यवहृत नहीं है, इसको आचार्य कैयट ने स्पष्ट लिखा है। गुणानाब्र पदार्थत्वादसम्बन्धः समत्वात् इस न्याय के बल से ही महामहोपाध्याय कैयट ने परिभाषाओं का अङ्गाङ्गिभाव असम्भव है, यह कहा है।

अथवा तन्त्रादि न हो समाहार द्वन्द्व हो हल् च ल् च हल् लकार का संयोगान्त लोप हो जायगा। अर्थ होगा उपदेश में लकार की इत्संज्ञा होती है। तथा च—'आदिरन्त्येनसहेता' इसका वाक्यार्थ

प्रयोगे स्वसामर्थ्यात् षष्ठीसमासाप्राप्तिरिति मध्यमपदलोपिसमासे सौत्रे वा तत्र समासस्य क्लिष्टत्वमिति भावः। तदेतदाह—नहीत्यादिना तत्रानिष्ट इत्यन्तेन। चित्रगवीणामिति। 'कुमति च' [पा० सू० ८।४।१३] इति णत्वम्। दन्त्यपाठस्तु लेखकप्रमादात्। एवं-स्त्रीगवीणामित्येकशेषप्रकरणान्तस्थकैयटप्रयोगेऽपि बोध्यम्।

अस्तेरनन्तरे समीपे वेत्यादि भाष्यंस्त्वनन्तरादिपदाध्याहारेण तन्निरूपितसम्बन्धार्थिका स्थानपदाध्याहारेण तन्निरूपितसम्बन्धार्थिका वा षष्ठीत्यभिप्रायकम्। अत एव मतुप्सूत्रे

चित्रगवीणामिति। चित्राश्चताः गावः चित्रगव्यस्तासाञ्चित्रगवीणाम्। कर्मधारयसमासे 'गोरतद्धितलुकि' इति टचि ङीबादि कृते साधुत्वं भवति नवीनमतेन एकाजुत्तरपदे णः इति सूत्रेण णत्वं भवति। यतस्तेषां मते समुदायावयवीभूय समासान्ताः भवन्ति तथा च गोरूपोत्तरपदैकाजेवेति उत्तरपदावयवीभूयसमासान्ताः प्रवर्तन्ते, इति प्राचीनानां मतेपि "कुमति चेति णत्वं भवति तदाह कुमति चेति णत्वम्, दन्त्यपाठस्तु लेखकप्रमादात्। नन्वानन्तर्यस्य षष्ठ्यर्थत्वाभावे अस्तेरन्तरे समीपे वेति भाष्यमसङ्गतं स्यादिति चेन्न अनन्तरसमीपादिपदाध्याहारेणानन्तरादिपदार्थानुयोगिकसम्बन्धार्थिका षष्ठी अथवा स्थान-पदाध्याहारेण स्थानपदार्थानुयोगिकसम्बन्धार्थिका षष्ठीत्यर्थात् कस्याध्याहारो भवतीति निर्णेतुं भाष्यन्नतु षष्ठ्यर्थः।

न च स्थानपदं षष्ठ्यर्थं एव तज्ज्ञानार्थमध्याहारस्यावश्यकता नास्तीति वाच्यम्, भाष्ये स्थानेन योगो यस्य इति व्यधिकरणपरकबहुव्रीहिदर्शनात् स्थानरूपः सम्बन्धो न षष्ठ्यर्थः। अन्यथा स्थानं योगो यस्य इत्येव वदेत्। अयं भावः "षष्ठी स्थाने" इति

हो जाने पर 'हलन्त्यम्' इसका वाक्यार्थ बोध हो जायगा। तब अर्थ होगा 'हलन्त्यमित्संज्ञको भवति' यह नहीं कह सकते, क्योंकि सामीप्य में पष्ठी का अभाव होने से प्रथमपक्ष में समास नहीं होगा। ब्राह्मणकम्बलः (ब्राह्मणस्यकम्बलः) इत्यादि में ब्राह्मण स्वामिक कम्बल यह प्रतीति होती है। यदि सामीप्यषष्ठ्यर्थ होता तो ब्राह्मण समीपवर्ति अन्यदीय कम्बल की प्रतीति होती। सामीप्यषष्ठ्यर्थ नहीं हैं अतः चित्रगु शब्द से चित्रगवी समीपवर्तिवृक्षादि की प्रतीति नहीं होती। जैसे हकार के समीप-वर्ति ल् इत्संज्ञक है यह अर्थ नहीं होता। उसी प्रकार हकार के अनन्तर ल् इतसंज्ञक है यह अर्थ भी नहीं होगा अनभिधान होने से, सामीप्यादि अर्थों के अभिप्राय से ब्राह्मणस्य कम्बलः, चित्रा गावोऽस्य, यह असमस्त प्रयोग भी नहीं होगा। ह्स्य ल् हल् षष्ठी तत्पुरुष करके षष्ठ्यर्थ सामीप्य करना क्लिष्टता है, क्योंकि जैसे ब्राह्मणस्य कम्बलः इत्यादि में प्रकरणादि का ज्ञान न रहने पर भी शीघ्र स्वस्वामिभाव की प्रतीति हो जाती है, उस तरह से अनन्तर सामीप्यादि शब्द प्रयोग बिना सामीप्यादि की प्रतीति नहीं होती, क्योंकि सामीप्यादिषष्ठ्यर्थ नहीं है।

यदि अनन्तरादि शब्द का प्रयोग करें तो सामर्थ्याभाव होने से समास ही नहीं होगा। "शाक-पार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्" इससे मध्यमपदलोपिसमास करना पड़ेगा, यह क्लेश होगा। वर्णो वर्णेन २।१।६८। इस सूत्र के भाष्य में "समानाधिकरणाधिकारे शाक-पार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च" इस वार्तिक पर भाष्यकार ने लिखा, समानाधिकरणाधि-कारे शाकपार्थिवादिनामुपसंख्यानं कर्तव्यम्, उत्तरपदलोपश्च वक्तव्यः। शाकभोजी पार्थिवः शाक-पार्थिव इत्यादि। अतः समानविभक्तिकस्वरूप समानाधिकरण्याभाव होने से मध्यपदलोपिसमास की

कैयटेन गावोऽस्य सन्त्यनन्तराइत्यर्थे मतुप्शङ्कापरभाष्यव्याख्याऽवसरे आनन्तर्यमस्त्यर्थवत्प्रकृत्यर्थोपाधिरित्युक्तम्, न तु तस्य षष्ठ्यर्थत्वेन प्रत्ययार्थत्वमुक्तम्। भाष्यकृता चासामर्थ्यात् तत्र वृत्त्यभाव उक्तः। षष्ठ्यर्थत्वे तु प्रत्ययार्थत्वात्क्वासामर्थ्यम्। तस्माद्यत्र षष्ठ्यन्तमात्रप्रयोगे आनन्तर्यादिप्रतीतिस्तत्रानन्तरादिपदाध्याहार एव बोध्यः।

---

परिभाषापर्यालोचनात्प्राग्वाक्यार्थबोधनिश्चयार्थमध्याहारोऽवश्यङ्कर्तव्य इति। इत्यभिप्रायकमिति। न तु सामीप्यादिसम्बन्ध एव षष्ठ्यर्थं इत्याशयकमिति शेषः। उक्तार्थे भाष्यान्तरमपि प्रमाणमित्याशयेनाह—अत एवेति। सामीप्यस्य षष्ठ्यर्थत्वाभावादेवेत्यर्थः।

मतुप्सूत्रे कैयटेनेति। गावोऽस्य सन्त्यनन्तरा इत्यर्थेमतुब्भवति नवेत्याशङ्कां कृत्वोक्तं—गावोऽस्य सन्तीत्यर्थे यथास्त्यर्थः प्रकृत्यर्थस्य = गोपदार्थस्य विशेषणन्तथानन्तर्यमपि प्रकृत्यर्थस्य = गोपदार्थस्य विशेषणन्नतु षष्ठ्यर्थत्वेनानन्तर्यस्य प्रत्ययार्थत्वमुक्तम्। न च वर्तमानकालावच्छिन्नास्त्यर्थस्य प्रकृत्यर्थविशेषणत्वे, गोमानासीदित्यत्रानन्वय इति वाच्यम्, तादृशव्यवहारविषये गोमानित्यत्र लक्षणाया अङ्गीकारात्। भाष्यकृतात्वेतादृशस्थले सामर्थ्याभावादवृत्तेरभावः "सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणन्नेति" न्यायेन तत्रासामर्थ्यात्। यथा ऋद्धस्य राज्ञः पुरुष इत्यत्र राज्ञि ऋद्धस्य विशेषणत्वाद्राज्ञः पुरुषेण सह समासाभावस्तथैव गोपदार्थे आनन्तर्यस्य विशेषणत्वान्मतुप्प्रत्ययो न। यद्यानन्तर्यषष्ठ्यर्थः स्यात्तदा क्वासामर्थ्यम्।

आनन्तर्यादिप्रतीतिरिति। अनन्तरपदाध्याहारेणानन्तरपदार्थानुयोगिकसम्बन्धार्थिका षष्ठी बोध्या। तत्रेति "तदस्यास्त्यस्मिन्निति" सूत्रे यथा बहुव्रीहिसमासे, वर्तमानकाला-

---

प्राप्ति ही नहीं है, यह अरुचि रहने पर कहा सौत्रत्वात् समास करना यह क्लिष्टता है, इस बात को मनोरमाकार ने 'नहि' इत्यादि से लेकर तत्रानिष्टपर्यन्त कहा। चित्राश्च ताः गावः चित्रगव्यः तासाञ्चित्रगवीणाम् "यहाँपर चित्रा और गो शब्द का कर्मधारय समास होगा, अलौकिक विग्रहवाक्य में सुप् से परे समासान्त टच् प्रत्यय होगा, ङीप् इत्यादि कर लेनेपर "समुदायाऽवयवीभूयसमासान्ताः प्रवर्तन्ते' इस नव्य सिद्धान्त से गोरूपोत्तरपदैकाच् होने से "एकाजुत्तरपदेऽणः" इससे णत्व होता है। "उत्तरपदावयवीभूयसमासान्ताः प्रवर्तन्ते" इस प्राचीन मत में 'कुमति च' से णत्व हो जायगा। अर्थात् हमारे मत में ( नव्यमत में ) णत्व होता ही है, आपके मत में भी णत्व हो जायगा। दन्त्य पाठ लेखकों का प्रमाद है। इसी प्रकार "त्यदादीनि" इति सूत्रस्थ स्त्रीगवीणाम् यह प्रयोग भी जानना चाहिये। आनन्तर्यषष्ठ्यर्थ न मानने पर "अस्तेर्भूः" यहाँपर षष्ठीमात्र का उच्चारण रहने पर भी भाष्यकार ने अस्तेरनन्तरे समीपे वा यहाँ पर सन्देह का प्रतिपादन किया, अतः प्रतीत होता है कि षष्ठी का अर्थ अनन्तर समीपादि होता है, अन्यथा भाष्य असङ्गत हो जायगा इसका समाधान यह है, यह भाष्य तो अनन्तर समीपादि पदाध्याहार करके अनन्तर समीपादि पदार्थानुयोगिका सम्बन्धार्थिका षष्ठी है अथवा स्थान पदाध्याहार करके स्थान पदार्थानुयोगिक सम्बन्धार्थिका षष्ठी है, किसका अध्याहार होता है इसका प्रतिपादक है, आनन्तर्यादिषष्ठ्यर्थ है इसका प्रतिपादक नहीं है।

सामीप्य में षष्ठ्यर्थत्वाभाव होने के कारण ही मतुप् सूत्र पर 'गावोऽस्य सन्त्यनन्तराः' इस अर्थ में मतुप् प्रत्यय होता है या नहीं, यह आशङ्का करके अस्त्यर्थ जैसे प्रकृत्यर्थ – गोपदार्थ का विशेषण है, उसी प्रकार आनन्तर्य भी प्रकृत्यर्थ गोपदार्थ का विशेषण है, यह कैयट ने कहा। आनन्तर्य को

प्रतीयते । अत एवानन्तरादिषु न समासोऽनभिधानादिति स्पष्टमाकरे । किं बहुना 'ब्राह्मणस्य कम्बलः' 'चित्रा गावोऽस्य' इति व्यस्तप्रयोगोऽपि तत्रानिष्टः ।

---

तत्रास्तिग्रहणाभावे तस्यान्यफलकत्वे वा सूत्रानुपात्तास्त्यर्थान्तर्भावेण मत्वर्थीयवद्बहुव्रीहिवच्च तथाभूतानन्तर्याद्यर्थान्तर्भावेण चित्रा गावोऽस्य सन्त्यनन्तरा इत्याद्यर्थे बहुव्रीहिमत्वर्थीयौ न भवतोऽनभिधानादिति मतुप्सूत्रे भाष्ये स्पष्टम् । अनन्तरादेरिदमर्थत्वे "तस्येदम्" [ पा० सू० ४।३।१२० ] इति शैषिकोऽप्यनभिधानान्नेति "तस्येदम्" [ ४।३।७ ] इत्यत्र भाष्ये । तदुक्तम्—अनन्तरादिषु न समासोऽनभिधानादिति स्पष्टमाकर इति । तत्र समासग्रहणं तद्धितवृत्तेरप्युपलक्षणम् । अनन्तरादिशब्दैः षष्ठीतत्पुरुषादिस्तु भवत्येव । ग्रामकूपो गङ्गातीरमित्यादौ समीपे एवावयवत्वारोपेण समासः । स्पष्टा चेयं रीतिः

---

वच्छिन्नास्त्यर्थान्तर्भावस्तथा शब्दशक्तिस्वभावाच्चित्रा गावः सन्त्यस्येत्यर्थेऽस्त्यर्थान्तर्भावेण मतुबपि भविष्यति । अस्तिग्रहणस्य फलन्नास्तीत्याशयः । अन्यफलकत्वे वेति । सूत्रकारस्याज्ञानकल्पनापेक्षयाऽन्यफलकत्वकल्पनमेव वरमिति भावः । अन्यत्फलमस्तिमानिति, अत्र हि सत्ताकर्तृधनवाचकोऽस्तिशब्दोऽव्ययम् । तस्यास्तिसामानाधिकरण्याभावान्मतुप्प्रत्ययो-न प्राप्तस्तदर्थमेतदस्तिग्रहणमिति भावः । तथा च भाष्यम्—तद्वै क्रियमाणमपि प्रत्ययोविष्यर्थं नोपाध्यर्थमस्तिमानिति मतुब्यथा स्यात् किञ्च कारणं न स्यादप्रातिपदिकत्वान्नैषदोषः । अव्ययमेषोऽस्ति शब्दः नैषोऽस्तेर्लट्, कथमव्ययत्वम् । विभक्तिस्वरप्रतिरूपकाश्च निपाताः, भवन्तीति निपातसंज्ञा, निपातोऽव्ययमित्यव्ययसंज्ञा, एवमपि न सिध्यति, किंकारणमस्तिनासामानाधिकरण्ये मतुब्विधीयते न चास्तेरस्तिना सामानाधिकरण्यम् । तद्वैतत्क्रियमाणम् प्रत्ययो विध्यर्थं नोपाध्यर्थम् ।

सूत्रानुपात्त इति—सूत्रेऽस्ति ग्रहणाभावेऽथवास्तिमानित्यस्य साधुत्वार्थंन्तस्य सत्वेऽप्यस्त्यर्थान्तर्भावेण यथा शब्दशक्तिस्वभावान्मत्वर्थीयो बहुव्रीहिश्च भवति, तथेति वैपरीत्ये दृष्टान्तः, तन्दर्शयति तथैवानन्तर्याद्यर्थान्तर्भावे चित्रागावोऽस्य सन्त्यनन्तरा इत्याद्यर्थे बहुव्रीहिमत्वर्थीयौ न भवतोऽनभिधानाद् । अनभिधानादिति । बहुव्रीहिमत्वर्थीययोः प्रवृत्तौ

---

षष्ठ्यर्थत्वेन प्रत्ययार्थ नहीं कहा । भाष्यकार ने तो "सविशेषणानां वृत्तिर्न वृत्तस्यविशेषणयोगो न" इस न्याय का आश्रयण करके सामर्थ्याभाव होने से समासाभाव कहा । जैसे ऋद्धस्य राज्ञः पुरुषः यहाँ पर राज्ञः में ऋद्धस्य विशेषण हो जाने से समास नहीं होता, उसी प्रकार गोपदार्थ में आनन्तर्य विशेषण हो जाने से समास नहीं होता । यदि आनन्तर्यादि प्रत्ययार्थ होता तो असामर्थ्य नहीं था । अतः जिस स्थल पर षष्ठ्यन्त मात्र प्रयोग में आनन्तर्यादि की प्रतीति होती है, वहाँ पर अनन्तरादि पदाध्याहार करना चाहिये ।

"तदस्यास्त्यस्मिन्निति मतुप्" इस सूत्र में जैसे बहुव्रीहि समास में वर्तमानकालविशिष्ट अस्ति का अन्तर्भाव होता है, उसी प्रकार शब्द शक्तिस्वभाव से "चित्रा गावः सन्त्यस्य इस अर्थ में अस्त्यर्थान्तर्भाव होने से मतुप् प्रत्यय हो जायगा अस्तिग्रहण निष्प्रयोजन है । किन्तु आचार्य के अज्ञानकल्पनापेक्षया अन्यफलकत्व मान लेना श्रेष्ठ है । अतः अस्तिमान् यहाँ पर मतुप्प्रत्यय करने के वास्ते अस्ति ग्रहण आवश्यक है, क्योंकि सामानधिकरण्याभाव होने से मतुप् प्रत्यय की प्राप्ति नहीं है । अस्त्यर्थान्तर्भाव हो जाने पर शब्दशक्ति स्वभाव से जैसे मत्वर्थीय तथा बहुव्रीहि होता है,

द्वितीयेऽपि संयोगान्तलोपो दुर्लभो यणः प्रतिषेधारम्भात्। तत्प्रत्याख्यान-पक्षेऽपि 'झलो झलि' ( पा० सू० ८।२।२६ ) इत्यतो झल्ग्रहणमपकृष्य संयोगान्तस्य झलो लोपविधानाच्च। किं च पदार्थबोधं विना वाक्यार्थबोधासंभवेन हल्-प्रत्याहारसिद्धेः प्रागेतत्सूत्रार्थाबोधे प्रसक्ते तदुद्धारार्थोऽयं यत्नः। अस्यां चावस्थायां-

---

"मपर्यन्तस्य" [पा० सू० ७।२।९१] इति सूत्रे कैयटे। किं च हस्य लित्यर्थे "हल विलेखने" इति धातोर्लसंज्ञस्येत्त्वापत्तिः। न च फलाभावो ? देवदत्तहलित्यादौ ङित्त्वसामर्थ्याद्भस्यापि टेर्लोपवल्लित्त्वसामर्थ्यात्प्रत्ययात्पूर्वत्वाभावेऽपि लित्स्वरस्यैव फलत्वं वक्तुं शक्यमित्यपि बोध्यम्। यद्यपि "हलसीरात्" [ पा० सू० ४।३।१२४ ] इति निर्देशेन तस्य नेत्त्वमिति कल्पयितुं शक्यम्। तथाऽपि ज्ञापकस्वीकारापेक्षया सूत्रावृत्तिरेव लघीयसीति दिक्।

---

निमित्तभूतस्य प्रथमान्तस्योपपत्तये सूत्रानुपात्तस्यापि विग्रहवाक्ये प्रतीयमानस्यास्त्यर्थस्य वृत्तिघटकत्वावश्यकत्वाद्भवतु तदर्थान्तर्भावेण तयोः प्रवृत्तिः, आनन्तर्याद्यन्तर्भावे तु विधायकाभावान्न तत्प्रवृत्तिरिति।

अनन्तरादेरिदमर्थत्वे इति। राज्ञः इदम्, अनन्तरम् इत्येवं रूपेण आनन्तर्यस्येद-मर्थत्वे, इत्यर्थः। नन्वेवं ग्रामकूप इत्यादिव्यवहारस्य कथमुपपत्तिरत आह ग्रामकूप-इत्यादि। ननु हलित्यत्रापि सामीप्यमूलकावयवत्वारोपे समासस्य सुवचत्वात् कथमनुप-पत्तिरित्यत आह किञ्च—इत्वापत्तिरिति। तथा च लोपः स्यादिति भावः अत एव "लोपश्च बलवत्तरः" इति भाष्ये उक्तम्, अणादिसंज्ञाशब्देषु लोपस्तु न आदिरन्त्येनेति सूत्रारम्भसामर्थ्यात्, अन्त्येनेत्यस्येदन्त्यसदृशेनेत्यर्थस्य वक्ष्यमाणत्वाच्च। न चेत्संज्ञा-लोपातिरिक्तमपि फलम् "अनुबन्धा अनेकान्ता इति पक्षे" "अभ्र आँ अटित" इत्यत्रेट् प्रतिषेधरूपम्फलन्दृष्टमिति वाच्यमनुबन्धानामेकान्तपक्षस्यैव सिद्धान्तत्वात्। फलाभावः = लोपातिरिक्तफलाभावः।

देवदत्तेति। हलिति क्विबन्तन्देवदत्तेति सम्बोधनमस्तीति शेषः। लित्त्वसामर्थ्यादिति। व्यञ्जनस्य या इत्संज्ञा तस्याः लोप एव फलमिति तु न, तथात्वे, व्यञ्जनानुच्चारणस्यैव

---

वैपरीत्येन दृष्टान्त है, उसी प्रकार आनन्तर्यादि का अन्तर्भाव हो जाने पर बहुव्रीहि मत्वर्थीय नहीं होता, अनभिधान होने से।

अनन्तरादि इदमर्थ रहने पर "राज्ञ इदमानन्तर्यमस्य" इस अर्थ में शैषिक प्रत्यय भी नहीं होता अनभिधान होने से। यह 'तस्येदम्' इस सूत्र के भाष्य में स्पष्ट है। इसी बात को मनोरमाकार ने कहा "अनन्तरादिषु न समासोऽनभिधानादिति स्पष्टमाकरे।" "अनन्तरादिषु न समासः यहाँ पर समास ग्रहण तद्धित वृत्ति का भी उपलक्षण है।

अनन्तरादि शब्दों के साथ षष्ठी तत्पुरुष तो होता ही है। ग्रामकूपः, गङ्गातीरम् इत्यादि में समीप में अवयववत्वारोप करके समास हो जायगा, यह रीति मपर्यन्तस्य इस सूत्र के कैयट में है। हल् यहाँ पर भी सामीप्यमूलक अवयववत्वारोप कर लेने पर समास हो जायगा समास में अनुपपत्ति क्या है, इस अरुचि पर कहते हैं।

किञ्च हस्यलका उक्तार्थ स्वीकार करने पर हल् विलेखने धातु का लकार इत्संज्ञक हो जायगा। यदि कहो कि फलाभाव होने से इत्संज्ञा नहीं होगी तो इस प्रश्न का समाधान यह है कि "देवद

हल्शब्दार्थाप्रसिद्धौ द्वन्द्व एव दुर्लभः, सहविवक्षाया असम्भवात्। तस्माद्यथोक्तमेव न्याय्यम्।

---

झलो लोपेति। सौत्रलोपाश्रयणे तु मूलोक्तमेव लघु। असम्भवादिति। न च "आद्यन्तौ टकितौ" [ पा० सू० १।१।४६ ] इत्यादौ यथासङ्ख्यमन्वयेऽपि प्रथमतः साहित्यावच्छिन्ने साहित्यावच्छिन्नान्वयमात्रेण सहविवक्षामाश्रित्य यथा द्वन्द्वसाधुत्वं तथेहापि प्रथमतो-लकारो हल्पदवाच्यश्चेदिति सामान्यतो बोधं कल्पितमादाय द्वन्द्वसाधुत्वं, ततो विशेष-जिज्ञासायामादिरन्त्येन, इत्येकवाक्यतया विशेषतो वाक्यार्थो लक्ष्यसंस्कारकः।

---

सुकरत्वात्। किन्तु फलान्तरमपि तच्च फलं "लितीत्येतत्प्रवृत्तिरूपमेव लकारस्थले स्वीकार्यम् एवञ्च प्रकृतोदाहरणे प्रत्ययात्पूर्वत्वाभावान्न प्राप्नोतीति तत्सामर्थ्याद्भवतीति भावः।

ननु हलसीरादिति'' निर्देशेन लकारस्य लोपाभावे, इत्वमपि न भविष्यति, प्रति-योगितासम्बन्धेन लोपस्येत्वव्यापकतया व्यापकाभावे व्याप्याभावस्य न्याय्यत्वादित्याशये-नाशङ्कते। लघीयसीति। कण्ठताल्वादिव्यापारगौरवापेक्षया मनोव्यापारगौरवमधिकमिति भावः। ननु 'कर्मवत्कर्मणा इति शास्त्रे "व्यत्ययो बहुलँल्लिङ्याशिष्यङिति'' संहिता-पाठेन द्विलकारको निर्देश एकस्य लकारस्य संयोगान्तलोप इति। "संयोगान्तस्य'' इति सूत्रे सम्बध्यमानमपि झल्ग्रहणं वाक्यभेदेन सम्बध्यते, तेन क्वचिदझलोऽपि लोपो भविष्यति। अतएव "अमोमश्'' इति सूत्रस्थशकारप्रत्याख्यानपरभाष्यस्याप्युपपत्तिः। तत्र हि "शकाराभावे मकारस्य मकारादेशः प्रयोजनं नास्तीति सर्वादेशो भविष्यतीति दूषणे दत्ते मकारस्य मकारादेशोऽनुस्वारबाधनार्थो भविष्यतीतिदूषणे परेण दत्ते एवन्तर्हि द्विमकारको निर्देशः करिष्यते'' इत्युक्तम्, अत्र द्विमकारक इति प्रतीकमुपादाय "एकस्य

---

हल् ( यहाँ पर हल् क्विबन्त है देवदत्तसम्बोधन है। जैसे डित्वसामर्थ्यात् भ संज्ञा न रहने पर भी टिलोप हो जाता है उसी प्रकार ) यहाँ पर भी लित्व सामर्थ्यात् प्रत्यय से पूर्वत्वाभाव रहने पर भी लित् स्वर होने लग जायगा। यद्यपि 'हलसीरादिति निर्देश से लकार की इत्संज्ञा नहीं होती यह कल्पना कर सकते है। तथापि ज्ञापकसूत्रापेक्षया सम्पूर्ण सूत्रावृत्ति ही लघु है। क्योंकि कण्ठताल्वा-दिव्यापारगौरवापेक्षया मनोव्यापार में गौरव अधिक होता है।

समाहार द्वन्द्व में भी संयोगान्त लोप नहीं होगा, क्योंकि "यणः प्रतिषेधो वाच्यः'' इस वार्तिक से निषेध हो जायगा। "यणः प्रतिषेधो वाच्यः'' इस वार्तिक के प्रत्याख्यान पक्ष में भी "झलो झलि'' से झल् का अपकर्षण करके संयोगान्त झल् का लोप होता है, किन्तु लकार संयोगान्त झल् नहीं है, अतः लोप नहीं होगा।

किञ्च पदार्थबोध के बिना वाक्यार्थ बोध नहीं होता अतः हल् प्रत्याहार सिद्धि के पहले "हलन्त्यम्'' इसका वाक्यार्थ बोध नहीं होगा, अन्योन्याश्रय दोष हो जायगा। उस अन्योन्या-श्रय दोषवारणार्थ यह समाहार द्वन्द्वरूप यत्न किया, किन्तु हल् पदार्थ अप्रसिद्ध होने के कारण उसका ज्ञान नहीं है। केवल ल् पदार्थ का ज्ञान होने से द्वन्द्व नहीं होगा। सहविवक्षा का अभाव होने से, क्योंकि "ज्ञातपदार्थस्यैकधर्मावच्छिन्नस्यैकधर्मावच्छिन्नसंसर्गेणैकधर्माविच्छिन्नेऽन्वयः साहित्यम्।'' जैसे ज्ञात पदार्थ हुआ धव और खदिर, एक धर्म है समुदायत्व, तदवच्छिन्न है समुदाय, इसका, एक धर्म है क्रियाकर्मत्वतदवच्छिन्न हुआ क्रियाकर्म, इस सम्बन्ध से, एक धर्म हुआ छेदनत्व, तदवच्छिन्न हुआ छेदन इसमें अन्वय हुआ, यहाँ पर द्वन्द्व हो जायगा। किन्तु हल् च ल् च यहाँ पर हल्

किं च, सहविवक्षा—सह वक्तुं वक्तुरिच्छा, सा च सूत्रप्रणयनानुपपत्त्या पाणिनेस्ततः—पूर्वमपि हल्पदार्थज्ञानादक्षतैव, बोद्धृबोधस्तु क्रमेणैवेतिवाच्यम्, "आद्यन्तौ [ पा० सू० १।१।४६ ] इत्यादौ यथासङ्ख्यसूत्रारम्भसामर्थ्येन तथासाधुत्वाङ्गीकारेऽप्यन्यप्रकारेण तस्य

---

मकारस्य संयोगान्तलोपः करिष्यते" इति कैयटेनोक्तम् । एवञ्च न लकारस्य संयोगान्तलोपानुपपत्तिरित्यत आह मूले किञ्चेति ।

अयं यत्न इति । हल् च ल् चेति द्वन्द्वकल्पनारूपः प्रयत्न इत्यर्थः । अस्यां चावस्थायामिति । हल्पदार्थाज्ञानावस्थायाम् । यथासङ्ख्यमन्वयेऽपि लक्ष्यसंस्कारवेलायामादिपदार्थस्य = टित्यन्तपदार्थस्य कितिप्रत्येकमन्वये, एकधर्मावच्छिन्नस्यैकधर्मावच्छिन्ने एकधर्मावच्छिन्नसंसर्गेणान्वयाभावाद् द्वन्द्वो न स्यादतः "आद्यन्तौटकितौ" इति वाक्यप्रयोगवेलायां समुदायत्वावच्छिन्नस्याद्यन्तसमुदायस्य समुदायत्वावच्छिन्ने टित् कित् समुदायेऽभेदत्वावच्छिन्नसंसर्गेणान्वयं कृत्वा समासस्तथैवात्रापि प्रथमं हल् ल् इति समुदायस्येदिति पदार्थेनान्वयेन समासे पुनः प्रत्येकान्वयेन बोधः । अयमाशयः—लत्वेन लकारस्य विशेष्यज्ञानमस्ति, हल्पदवाच्यः कश्चनेत्याकारकः सामान्यरूपेण हल्पदार्थस्य ज्ञानन्तथाचैकधर्मावच्छिन्नस्यैकधर्मावच्छिन्नएकधर्मावच्छिन्नसंसर्गेणान्वयात्समासः । ततो विशेषजिज्ञासायामादिरन्त्येन वाक्यैकवाक्यतया हकारादिलकारान्तसमुदायो हल्पदवाच्य इति विशेषरूपेण बोधो लक्ष्यसंस्कारकः । वस्तुतस्तुविशेषरूपेण ज्ञातपदार्थस्यैकधर्मावच्छिन्ने, एकधर्मावच्छिन्नस्यैकधर्मावच्छिन्नसंसर्गेणान्वयो भवति । तथा च 'आद्यन्तौ' इत्यत्र वक्तुराद्यन्तपदार्थज्ञानसत्त्वेन तथात्वसम्भवेऽपि प्रकृते हल्पदार्थज्ञानाभावेन दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमाशङ्क्य साम्यमाह किञ्चेति ।

---

पदार्थ ज्ञात न होने से द्वन्द्व नहीं होगा। सौत्रत्वात् लकार लोपाश्रयण की अपेक्षा तो सम्पूर्ण सूत्रावृत्ति ही लघु है।

लक्ष्यसंस्कार के समय आदि पदार्थ का टित् में अन्त्य पदार्थ का कित् में अन्वय करने पर समुदाय का समुदाय में अन्वयाभाव होने से द्वन्द्व की प्राप्ति नहीं है, अतः "आद्यन्तौ टकितौ" यह वाक्यप्रयोग के समय आद्यन्तसमुदाय का टित् कित् समुदाय में अन्वय करके समास होगा, समूहान्वयाभिप्राय से वाक्यार्थबोध होगा। इसके बाद "यथासङ्ख्य" सूत्र के बल से प्रत्येक में अन्वय कर देने पर जैसे वाक्यार्थबोध होता है, तथैव यहाँ पर भी हल् ल् इस समुदाय का इत् पदार्थ में अन्वय हो जाने पर समास हो जायगा बाद में विशेष जिज्ञासा होने पर "आदिरन्त्येन" इसके साथ वाक्यैकवाक्यता होने पर "हकारादिलान्तसमुदायः हल्पदवाच्यः" यह विशेष वाक्यार्थ-लक्ष्यसंस्कारक होगा।

विशेष ज्ञात पदार्थ का एक धर्मावच्छिन्न में एकधर्मावच्छिन्नसंसर्ग से अन्वय होता है। यहाँ पर हल्पदार्थ का सामान्य ज्ञान है हल् पद बोध्य कोई है तथा च दृष्टान्तदार्ष्टान्तिक में विषमता है, अतः साम्यप्रतिपादनार्थ कहते हैं। किञ्च साथ बोलने के वास्ते जो वक्ता की इच्छा वह सहविवक्षा कहलाती है। अर्थात् वक्ता की इच्छा है, कि मैं हल् ल् इन दोनों का साथ प्रयोग करूँ। अर्थज्ञानपुरःसर वाक्यरचना होने में हलन्त्यम् इस सूत्र को बनाने वाले पाणिनि जी को "आदिरन्त्येन सहेता" इस सूत्र के पहले हकारादि लान्त का हल्पदार्थत्वेन ज्ञान होने से सह विवक्षा अक्षता है। बोद्धाओं को ज्ञान तो हल् प्रत्याहार साधन क्रम से होता है, पहले लकार का लत्वेन ज्ञान ततः हल्पदार्थत्वेन

साधुत्वकल्पने मानाभावात्। किंच श्रोतॄणां सह बोधो भवत्वितीच्छया सहवक्तुमिच्छाया-एव सहविवक्षात्वेन श्रोतॄणामपि सहबोध एवोचितः। तादृशेच्छया तेषां तादृशबोधः-जनकशब्दप्रयोगे तु पाणिनेर्भ्रान्तत्वापत्तिः। मुखनयनं पश्येत्यादौ तु न दोषः। उभयज्ञत्वेन ज्ञातं प्रत्येव तादृशशब्दप्रयोगात् तेन रूपेण ज्ञानं भ्रमः प्रमा वेत्यन्यदेतत्।

---

सहविवक्षेति। सहवक्तु वक्तुरिच्छा सहविवक्षापदार्थंज्ञानपुरःसरं वाक्यरचनासत्वात् "हलन्त्यमिति सूत्रं प्रणयतः पाणिनेः प्रत्याहारसङ्केतग्राहकादिरन्त्येनेति सूत्रनिर्माणा-त्प्रागपिहल्पदार्थज्ञानं वर्तते, तथा च सहविवक्षाक्षतंवेति। बोद्धृबोधस्तु हल्प्रत्याहार-साधनक्रमेणेत्यर्थः। यथासङ्ख्यसूत्रारम्भसामर्थ्येनेति। लोके द्वन्द्वाभावस्थले "क्रमिकाणां-क्रमेणैवान्वयः समुदाहृतः। शत्रुंमित्रंविपत्तिञ्च जय रञ्जय भञ्जय॥" इत्यादौ योग्यतया क्रमेणान्वयाच्छास्त्रेऽपि "यथासङ्ख्यसूत्रं विनैव क्रमेणान्वयसिद्धेः अजाविधनौ देवदत्त-यज्ञदत्तौ" इत्युक्तेर्न ज्ञायते कस्याजाधनं कस्यावय इति भाष्याद् द्वन्द्वस्थले क्रमेणान्व-यासिद्धया तदर्थतयैव यथासङ्ख्यसूत्रस्य निर्माणेन तथा साधुत्वाङ्गीकारेऽपि यत्नं विनैकस्य हल्पदवाच्यत्वेनान्यस्य लत्वेन ज्ञानमितिरूपेण द्वन्द्वस्य साधुत्वकल्पने प्रमाणाभावात्। नन्वत्र "आदिरन्त्येनसहेता" इति सूत्रं प्रमाणमित्यरुचेराह किञ्चेति।

श्रोतॄणामिति। श्रोतृसम्बन्धिसहबोधकर्तृकसत्तेच्छा सहविवक्षा सा कदा सम्भवति यदा श्रोत्रा सहबोधः स्यात्तथात्र तु न सम्भवति, अन्योन्याश्रयादिति, सहविवक्षैव नास्तीति कल्पनीयम्॥

ननु पाणिनेस्तादृशेच्छा कल्प्यतानत आह तादृशेच्छयेति। तेषां=श्रोतॄणाम्। भ्रान्तत्वापत्तिरिति। इच्छाम् प्रतीष्टसाधनता ज्ञानस्य कारणतया श्रोतृसमवेतं सहज्ञानं-मदिष्टसाधनमितिज्ञानस्पूर्वंस्पाणिनेः कल्पनीयम्। श्रोतुस्तु सहज्ञानन्न भवति पाणिनि-समवेतस्य ज्ञानस्य सहबोधविशेष्यकत्वावच्छिन्नश्रोतृसमवेतत्वप्रकारकस्य भ्रमात्मकत्वेन

---

ज्ञान तब हल्पदवाच्यत्वेन ज्ञान होता है यह नहीं कहना चाहिये, क्योंकि "शत्रुंमित्रंविपत्तिञ्च जयरञ्जय भञ्जय" इस द्वन्द्वाभाव स्थल में योग्यताक्रम से अन्वय हो जायगा उसी प्रकार शास्त्र में भी द्वन्द्वाभाव स्थल में लौकिकन्याय से क्रमेण अन्वय हो जायगा, किन्तु "अजाविधनौ देवदत्तयज्ञदत्तौ न ज्ञायते कस्याजाधनं कस्यावयः" इस भाष्य से द्वन्द्व स्थल में यत्न के विना क्रमेण अन्वय नहीं होगा। अतः "आद्यन्तौ टकितौ" इत्यादि में यथासङ्ख्य सूत्रारम्भ सामर्थ्य से पूर्वोक्त रीति के अनुसार साधुत्व अङ्गीकार कर लेने पर भी एक का हल्पदवाच्यत्वेन दूसरे का लत्वेन ज्ञान करके द्वन्द्व के साधुत्व कल्पना में कोई प्रमाण नहीं है। जैसे "आद्यन्तौ टकितौ में यथासङ्ख्य सूत्रारम्भ से पूर्वोक्त साधुत्व हो जाता है उसी प्रकार यहाँ पर 'आदिरन्त्येन सहेता' सूत्रारम्भ सामर्थ्य से "आद्यन्तौ टकितौ" की तरह द्वन्द्व साधुत्व हो जायगा। यह अरुचि रहने पर शब्दरत्नकार लिखते हैं।

किञ्च श्रोताओं को साथ में बोध हो इस इच्छा से युक्त जो वक्ता की इच्छा वही सहविवक्षा पदेन गृहीत होने से साथ में बोध होना उचित है, किन्तु वह यहाँ पर सम्भव नहीं है, अन्योन्याश्रय होने से। अतः यहाँ पर सहविवक्षा ही नहीं है, अतः समाहार द्वन्द्व नहीं होगा, यदि यह कहो कि पाणिनि जी ने श्रोताओं को साथ बोध हो इस इच्छा से प्रयोग किया है, इसकी कल्पना कर लेने पर यहाँ पर सहविवक्षा बन जायगी तो यह कहना ठीक नहीं क्योंकि इच्छा के प्रति इष्टसाध-नताज्ञान कारण होने से 'श्रोतृसमवेतं सहज्ञानं मदिष्टसाधनम्' यह ज्ञान पहले पाणिनिजी को

किं च, पाणिनेः पूर्वं हल्पदार्थज्ञानेऽपि तदभिप्रायेण न प्रयोगः। अन्यथा व्याख्यातृपरम्पराऽवगतवक्तृतात्पर्यानुपपत्त्या "लट् स्मे" [पा० सू० ३।२।११८] इति सूत्रस्थकैयटोक्तरीत्या लक्षणया तन्त्रान्तरीयप्रथमादिव्यवहारेण प्रथमादिपदानामिव शक्त्यनु-

भ्रान्तत्वापत्तिः। अयंभावः। श्रोतुः सहबोधाभावेन सहविवक्षाकारणीभूतं यत् "श्रोतृसमवेतः सहबोधो मदिष्टसाधनम्" इत्याकारकमिष्टसाधनता ज्ञानम्, तस्य श्रोतृसमवेतत्वाभाववत्सहबोधविशेष्यकज्ञानविषयकत्वेन स्वयमभ्रमत्वेऽपि स्वविषयज्ञानस्य भ्रमत्वेन तस्यापि तत्त्वेन पाणिनेर्भ्रान्तत्वापत्तिरित्यर्थः।

ननु हल्पदार्थाऽज्ञानेऽपि लपदार्थस्य ज्ञानादेकपदार्थस्य ज्ञानसत्वेऽपि मुखनयनं पश्येत्यत्रेव न दोषोऽत आह मुखनयनमिति। तेन = उभयज्ञत्वेन। नन्वनुभयज्ञविषयकमुभयज्ञत्वज्ञानं भ्रम एवेति कथं तस्य प्रकृतप्रयोगनियामकत्वं स्यादत आह भ्रमः प्रमा वेति।

वक्तृतात्पर्यानुपपत्त्येति। पाणिनिना "हल्" हकारादिलान्तसमुदायघटक इत्येवं व्याख्यानेन शिष्याः बोधितास्तैश्च स्वशिष्या इत्येवं बोधपरम्परादर्शनेन, "हल्पदं हकारादिलान्तसमुदायघटकबोधजनकं भवतु" इति वक्तृतात्पर्यानुमानेन, शाब्दबोधजनकतात्पर्यस्य च तत्तदर्थवृत्तिं विनाऽसम्भवेनानुमितलक्षणया शक्तिविना शक्यसम्बन्धरूपलक्षणाया असम्भवेन शक्त्यनुमानाद्वा बोधसम्भव इति।

अयं भावः "पाणिनिप्रभृतिव्याख्यातॄणामभिप्रायो यत् हल् पदं हकारादिलान्तसमुदायघटकबोधजनकं भवतु" तथा चोक्ततात्पर्यानुपपत्त्या हल्पदस्य हकारादिलान्तसमुदायघटके लक्षणा। यथा लट्स्मे इति सूत्रे कैयटेन लक्षणा कृता तदाह—लट्स्मे इति। वार्तिककारेण पूर्वं "स्मपुरा भूतमात्रे" इति वार्तिकं पठितम् तदाशयो यत् "स्मघटितं पुराघटितञ्च सूत्रं भूतमात्रे भवति, पश्चात् पठितं "न स्म पुराद्यतने" अर्थात् स्मघटितं पुराघटितमद्यतने भूते न 'स्म, पुरा' इति निमित्तमादायोभयोः विधायकनिषेधकवार्तिकयोः प्रवृत्तिर्दुर्लभा यतः एकस्मिन्नेव निमित्ते भूतमात्रे विधानस्याद्यतनभूते निषेधस्य चासम्भवात्तात्पर्यानुपपत्त्या आद्यवार्तिके "स्म पुरा शब्देन लट् स्मे ३।२।११८। इति स्म शब्दादारभ्य" पुरि लुङि चास्मे ३।२।१२२ इति सूत्रस्थपुराशब्दपर्यन्तं निमित्तघटकपञ्चसूत्र्यां-

होगा, परन्तु श्रोताओं को साथ ज्ञान होता नहीं। अतः आचार्य भ्रान्त कहलायेगा, इस बात को शब्दरत्नकार लिखते हैं श्रोताओं को साथ-बोध हो इस इच्छा से प्रयोग होने पर श्रोताओं को हल्पदार्थ का ज्ञान न होने से सहबोधाजनक "हलन्त्यम्" शब्द का प्रयोग करने पर उनके प्रति पाणिनिजी को भ्रान्ति हो जायगी।

यदि कहो कि लोक में एक ज्ञान रहने पर भी "मुखनयनं पश्य" यह प्रयोग होता है, उसी प्रकार यहाँ पर भी ल् पदार्थ का ज्ञान हो जाने पर हल् का ज्ञान न रहने पर भी प्रयोग हो जायगा यह नहीं कह सकते, क्योंकि यह जानकर प्रयोग किया कि यह उभयज्ञ है। उस व्यक्ति का ज्ञान प्रमात्मक हो या भ्रमात्मक यह दूसरी बात है। किन्तु पाणिनिजी महर्षि थे, वह बोध की इच्छा से प्रयोग करें और बोध न हो तो भ्रम शून्य महर्षि भ्रान्त हो जायेंगे।

किञ्च पाणिनि जी को हल्पदार्थ का ज्ञान रहने पर भी उन्होंने इस अभिप्राय से हल्पदार्थ का प्रयोग नहीं किया कि बोद्धाओं को भी साथ-साथ ज्ञान हो जाय, यदि इस अभिप्राय से प्रयोग होत

मानाद्वा ततः श्रोतॄणां बोधसम्भवेनेतरेतराश्रयस्यैवाभावेन तदा शङ्का लक्ष्वेतिवक्तव्य-मित्यादिसमाधानपरभाष्यासङ्गत्यापत्तेः। न चैवमजादिव्यवहारस्यापि लक्षणादिनैवोपपत्तावादिरन्त्येनेति सूत्रवैयर्थ्यम्। क्वचिल्लक्षणादिना बोध इति सर्वत्र लक्षणाद्याश्रयणमेवेति नियमाभावात्। "नासूयाकर्त्तव्या यत्रानुगमः क्रियते' इति "पङ्क्तिविंशति" [ पा० सू०

लक्षणा तथा च न स्मपुराद्यतने इति वार्तिकस्य स्म पुराशब्दनिमित्तके एव प्रवृत्तिरतो-लट्स्मे, अपरोक्षे च 'इति सूत्रद्वयस्य स्मनिमित्तकस्य पुरि लुङि चास्मे इत्यस्य पुरानिमित्तकस्य' च 'नस्म पुराद्यतने' इति वार्तिकेन निषेधादद्यतनभूते न प्रवृत्तिः। 'ननौपृष्टप्रतिवचने, नन्वोर्विभाषा' इत्यनयोश्च स्मपुराभूतमात्रे 'इति वार्तिकेन भूतमात्रे प्रवृत्तिर्यथा तथात्रापि लक्ष्यानुरोधादन्त्यपदसामाधिकरण्यानुपपत्त्या च हल्पदेन हकारादिलान्त-समुदायघटकवर्णाः लक्ष्यन्ते।

शक्त्या निर्वाहे लक्षणाया अनौचित्यमित्यभिप्रायेणाह=तन्त्रान्तरीयेति, यथा पाणिनिव्याकरणान्तरे स्वौजस् प्रथमेत्याद्युक्तत्वेनैवास्मिन्व्याकरणशास्त्रेऽपि प्रथमादिव्यवहारः। अनुमानकारस्तु स्वौजस् पदं, प्रथमाबोध्यं शास्त्रान्तरे प्रथमा बोध्यत्वेन व्यवहारविषयत्वात्। हल्पदस्य शक्यार्थाभावेन शक्यसम्बन्धरूपा लक्षणासम्भवादत आह—शक्त्यनुमानाद्वेति। अनुमानकारस्तु हल्पदं हकारादिलान्तसमुदायवर्णनिरूपितशक्तिमत् तन्त्रान्तरे हकारादिलान्तसमुदायघटकवर्णबोधकत्वेन व्यवहारविषयत्वात्। ततः=तत्तात्पर्यकहल्शब्द-प्रयोगमात्रात्। तदा शङ्का=इतरेतराश्रयाशङ्का। आदिनैकशेषनिर्देशाद्वासिद्धमित्यस्य-

तो, पाणिनि—प्रभृत जो व्याख्याता उनकी परम्परा से ज्ञात जो वक्ता का तात्पर्यस्वरूप है 'हकारादिलान्तसमुदायघटकबोधक हल्, यह तात्पर्य अनुपपन्न होने पर हल् पद की हकारादि लान्त समुदाय घटक में लक्षणा कर देंगे, जिस प्रकार "लट् स्मे" इस सूत्रपर कैयट ने लक्षणा की है।

यथा वार्तिककार ने वार्तिक का निर्माण किया "स्मपुराभूतमात्रे" अर्थात् स्म घटित और पुराघटित की भूतमात्र में प्रवृत्ति होती है। इसके पश्चात् दूसरी वार्तिक लिखे "न स्म पुराऽद्यतने अर्थात् स्म घटित और पुराघटित की अद्यतन भूत में प्रवृत्ति नहीं होती, स्म घटित और पुराघटित 'लट् स्मे, अपरोक्षे च, पुरि लुङि चास्मे' ये तीन सूत्र हैं, "स्मपुरानद्यतनभूते" इस तरह यदि वह एक वार्तिक बना देते तो दो वार्तिक न बनाना पड़ता, यहाँ वार्तिककार का तात्पर्य अनुपपन्न होने पर "लट् स्मे" घटक स्म से लेकर पुरि लुङि चास्मे घटक पुरा शब्द पर्यन्त पांच सूत्रों में लक्षणा हो जायगी। लट् स्मे, अपरोक्षे च पुरि लुङि चास्मे यह तीनों भूतानद्यतन में लगेगें और 'ननौपृष्टप्रतिवचने, नन्वोर्विभाषा' यह दोनों सामान्य भूत में लगेगें, इस प्रकार यहाँ पर लक्षणा हो जायगी।

अथवा अन्य व्याकरणशास्त्र में प्रथमादि का व्यवहार होने से पाणिनिव्याकरण में शक्ति का अनुमान करते हैं, उसी प्रकार हल् पद में भी शक्ति का अनुमान होगा। उसको दिखाते हैं "हल्पदम् हकारादिलान्तसमुदायनिरूपितशक्तिमत्, तंत्रान्तरे हकारादिलान्तसमुदायघटकवर्णबोधकत्वेनव्यवहारविषयत्वात्" इस प्रकार यहाँ पर भी शक्ति का अनुमान कर देंगे, "हल्पदम्, हकारादिषु-शक्तम्, हकारादिबोधतात्पर्येण पाणिन्युच्चारितत्वात्। इससे बोद्धाओं को भी बोध सम्भव है।

'तथा च इतरेतराश्रयता का अभाव होने से—इतरेतराश्रयरूप अन्योन्याश्रय दोष की आशङ्का करके लक्ष्वेति वक्तव्यम् इत्यादि समाधान परक भाष्य असङ्गत हो जायगा। अनुपदोक्तरीति से

१।७।२६ ] इति सूत्रे भाष्योक्तेः । तस्मात्करिष्यमाणशक्तिग्रहोपायकपदस्य तदभिप्रायेणाचार्यस्य पूर्वमप्रयोग इत्येव कल्पना ज्यायसी ध्वनितश्चायमर्थो "नाऽऽज्झलौ" [ पा० सू० १।१।१० ] इति सूत्रेऽष्टादशानां ग्रहणाभावाय "वर्णानामुपदेशस्तावत्, उपदेशोत्तरकालेत्संज्ञा, इत्सञ्ज्ञोत्तरकालः प्रत्याहारः प्रत्याहारोत्तरकालासवर्णसञ्ज्ञा तदुत्तरकालमणुदिदिति सवर्णग्राहकमित्येतेन समुदितेनान्यत्र सवर्णानां ग्रहणं भवति न स्वस्मिन्नापि स्वाङ्गे" इत्येवं वाक्यापरिसमाप्तिप्रतिपादकभाष्येणापि । अन्यथा तत्तच्छास्त्रप्रणयनानुपपत्त्या पाणिनेस्तथाज्ञानस्य पूर्वमपि सत्त्वेनाचार्येण तथा प्रयोगे बोद्धृणामपि क्रमेण तथा बोधे उपपन्ने किं तेन कृतं स्यात्, कथं वा नाऽऽज्झलावित्यत्राष्टादशादीनां ग्रहणवारणं भाष्योक्तं सङ्गतं स्यादिति विभाव्यतां तदाह—तस्मादिति ।

---

ग्रहणम् । परेति = एतदुभयपरेत्यर्थः । लक्षणादिनेति । उक्तप्रकारलक्षणादिना । आदिना शक्तिसङ्ग्रहः व्याकरणस्य शक्तिबोधकत्वसिद्धान्तस्यैवमेवोपपत्तिरितिभावः ।

नासूयेति । प्रकृतिप्रत्यययोरानन्त्येनशब्दानां साधुत्वज्ञानान्नसम्भवति । तत्र केषाञ्चिच्छब्दानां साधुत्वमाचार्येण प्रतिपादितम् पङ्क्तिविंशतीत्यादिना । शब्दानामानन्त्यात् सर्वेषां तन्न सम्भवतीति तथा न कृतम् । नह्येतावताचार्यस्य दोष इति । करिष्यमाणग्रहोपायकपदस्येति । करिष्यमाणः शक्तिग्रहोपायो यस्य तादृशंयत्पदन्तदन्तस्य । तदभिप्रायेण = प्राक्ज्ञातार्थाभिप्रायेणेत्यर्थः । पूर्वम् = शक्तिज्ञानोपायात्पूर्वम् । अस्मिन्नर्थे साधकान्तरमप्याह—ध्वनित इत्यादिना । ग्रहणाभावायेति अच्पदेन ग्रहणाभावायेत्यर्थः । न स्वस्मिन्निति । नाण् पदे, स्वाङ्गे = नाज्झलावित्यत्र । वाक्यापरिसमाप्तिप्रतिपादकभाष्येणापीति । वाक्यस्य = अणुदित्सूत्रस्य स्व—स्वाङ्गान्यतरबोधकाले अपरिसमाप्तिः = सवर्णग्रहणबोधनासामर्थ्यमित्यर्थः । अन्यथेति । करिष्यमाणशक्तिज्ञानोपायस्य पदस्य स्वस्य ज्ञानसत्वात् तदभिप्रायेण प्रयोगाङ्गीकारे । आचार्येण=पाणिनिना । तथाबोध इति । आचार्यज्ञानवद्बोधे । सङ्गतं स्यादिति । पाणिनेः पूर्वमपि तावतां ज्ञानस्य सत्त्वेन तत्सवर्णा-

---

लक्षणा अथवा शक्ति का अनुमान स्वीकार करने पर अच् इत्यादि व्यवहार भी लक्षणादि से ही उपपन्न हो जायगा 'आदिरन्त्येन सहेता 'यह व्यर्थ है यह नहीं कहना चाहिये, कहीं पर लक्षणादि से ज्ञान होता हैं, सब जगह लक्षणादि का आश्रयण ही हो इसमें कोई प्रमाण नहीं । तभी व्याकरण का शक्तिग्राहकत्व सिद्धान्त उपपन्न होता है, पङ्क्तिविंशति इस सूत्र के भाष्य में भाष्यकार ने कहा जहाँ पर आचार्य निश्चय करते हैं, वहाँ पर असूया नहीं करनी चाहिये ।

उपसंहार करते हैं । करिष्यमाण है शक्तिज्ञानोपाय जिसका, ऐसा जो पद उसका ज्ञातार्थाभिप्राय से शक्तिज्ञानोपाय के पहले प्रयोग नहीं होता । यह कल्पना करना श्रेष्ठ है, उक्तार्थ भाष्य से भी ध्वनित होता है । क्योंकि "नाज्झलौ" इस सूत्र पर अष्टादशाज्ग्रहणाभावार्थ वर्णानामुपदेशस्तावदित्यादि कहा है । महावाक्यचतुष्टय सहित जो 'अणुदित्सूत्र' उससे सवर्णों का ग्रहण होता है । अणुदित्सूत्र में तथा उपदेशादि महावाक्यों में सवर्ण का ग्रहण नहीं होता ।

अन्यथा करिष्यमाण शक्तिज्ञानोपायक पद का स्वयं ज्ञान रहने पर तदभिप्राय से प्रयोगस्वीकार करने पर तत्तच्छास्त्रनिर्माणानुपपत्ति से शक्तिज्ञान आचार्य को पूर्व में रहने पर भी शक्तिज्ञान के अभिप्राय से प्रयोग करने पर बोद्धाओं को भी क्रम से आचार्य की तरह ज्ञान हो जायगा, तब अन्योन्याश्रय दोष की आशङ्का तथा 'लश्चेति वक्तव्यम्' इसका समाधान, 'नाज्झलौ' यहाँ पर

मध्यगानामिति । आद्यन्ताभ्यामवयवाभ्यामवयवीसमुदाय आक्षिप्यते; तस्य च युगपल्लक्ष्ये प्रयोगाभावात्तदवयवेष्ववतरन्ती सञ्ज्ञा मध्यगेषु विश्राम्यति, न त्वाद्यन्तयोः, संज्ञास्वरूपान्तर्भावेण तयोः पारार्थ्यनिर्णयादिति भावः। स्वस्य चेति। 'स्वं रूपम्' (पा० सू० १।१।६८) इत्यनुवृत्तेः। स्वं रूपं चादेरेव गृह्यते नान्त्यस्य । अन्त्येनेत्यप्रधानतृतीयानिर्देशात् । सर्वनाम्नामुत्सर्गतः प्रधान-परामर्शित्वात् ।

---

आद्यन्ताभ्यामिति। अवयवत्वेन बोधाकाद्यन्तशब्दाभ्यामित्यर्थः। तस्येति। समुदायस्य

---

भिप्रायेण प्रयोगेणाच्पदेन सवर्णग्रहणं दुर्वारम् । विभाव्यताम् = विचार्यतान्द्वन्द्ववादिने-तिशेषः। तदाह—तदेतत्सर्वं मनसि निधायाह तस्माद् यथोक्तमेव न्याय्यम् ।

ननु अन्त्यस्येत्संज्ञालोपाभ्यामपहारात् आदिरन्त्येनेत्यसङ्गतमेवञ्च सूत्रेष्वित्संज्ञायामपि, इणादिशब्देष्वित्संज्ञा न भविष्यति तथाचादिरन्त्येनेत्य सङ्गतमिति चेन्न तत्सदृशेलाक्षणि-कत्वात्। तथा च—अन्त्येत्सदृशेनसहित आदि सदृशः स्वघटकानुयोगिकसादृश्यप्रतियो-गित्वेन विवक्षितवर्णनिष्ठादिता निरूपकस्य समुदायस्य घटकानां संज्ञा। ऐऔच् घटक चकारः प्रतियोगी। अच्घटक चकारोऽनुयोगी।

आक्षिप्यते इति। अच् अक् इत्यादिसमुदायः संज्ञा। संज्ञायाश्च संज्ञिनि साकाङ्क्ष-त्वात् सूत्रे च तदनुपादानात् स्वघटकत्व, स्वघटकावधिकपूर्वत्व, स्वघटकावधिकोत्तरत्वा-भाववत्वैतत्त्रितयसम्बन्धेनादेः स्वघटकत्वस्वघटकोत्तरत्वस्वघटकावधिकपूर्वत्वाभाववत्वै-तत्त्रितयसम्बन्धेनान्त्यस्य, च समुदायविशिष्टतया समुदायं विना तयोरनुपपत्त्या "येन विना यदनुपपन्नं तत्तेनाक्षिप्यते" इति न्यायात् आद्यन्तघटितसमुदायरूपः संज्ञी आक्षिप्यते।

न चाक्षिप्तस्य शाब्दबोधे भानानुपपत्तिर्वृत्तिज्ञानजन्योपस्थितेरेवशाब्दाङ्गत्वात्। अन्यथा घटादिपदाश्रयतयोपस्थिताकाशादेरपि शाब्दे भानापत्तिरिति वाच्यम् अर्थापत्त्या-क्षिप्तस्य शाब्दे प्रवेशस्येष्टत्वात् !

अर्थापत्तिश्च परस्परविरुद्धत्वेनावभासमानधर्मद्वयघटितहेतुसाध्यानुमितिरर्थापत्तिः। देवदत्तः, रात्रिभोजनकर्तृत्वविशिष्टः, दिवाभोजनकर्तृत्वाभावत्वे सति पीनत्वात्। यथात्र परस्परविरुद्धत्वेनावभासमानधर्मद्वयघटितहेतुना रात्रिभोजनकर्तृत्वविशिष्टत्वानुमितिस्तथैवा-त्रापि, तद्यथा आद्यन्तपदम्पक्षः सूत्राघटकपदप्रयोज्यसमुदायत्वावच्छिन्नविषयतानिरूपिता-वयवत्वावच्छिन्नविषयताप्रयोजकं साध्यः, सूत्रघटकपदप्रयोज्यसमुदायत्वावच्छिन्नविषयता-निरूपितावयवत्वावच्छिन्नविषयताप्रयोजकत्वाभावत्वे सति अवयवत्वाच्छिन्नविषयता-प्रयोजकत्वात्, यन्नैवम्, तन्नैवम्। अवयवत्वावच्छिन्नविषयतासमुदायत्वावच्छिन्न-विषयतया निरूपिता भवति, समुदायत्वावच्छिन्नविषयताप्रयोजकञ्च पदं, समुदायपदम्।

---

अष्टादश ग्रहण वारण भाष्योक्त कैसे सङ्गत होगा? विचार कीजिये, इन सब बातों को मन में रखकर मनोरमाकार ने सूत्रावृत्ति ही ठीक है यह कहा।

आदि शब्द आद्यावयववाचक है, अन्त्यशब्द अन्त्यावयववाचक है, अवयवत्व प्रकारक अवयव विशेष्यक बोधजनक आद्यन्त शब्द से अवयवी समुदाय का आक्षेप होता है, अतः अच् से अ इ उ

तयोः पारार्थ्येति । सञ्ज्ञास्वरूपबोधकतया शक्तिग्रहकाले एव तयोः पारार्थ्यनिर्णयादित्यर्थः । परामर्शित्वादिति । वस्तुतो ज्ञापकादिनाऽस्यापि न संज्ञाकार्यम्, आद्यन्तशब्दाभ्यामाद्यन्तघटितसमुदायस्याक्षेपेणान्येषामिव तयोः प्राप्तायाः सञ्ज्ञायाः प्रकारान्तरेणाशक्यवारणत्वात् । स्वशब्दानुवृत्तेश्च न फलम् । भाष्येऽपि एतत्फलितार्थकथनमेव स्वस्य च रूपस्येति । सञ्ज्ञास्वरूपत्वं विशिष्टस्यास्तु प्रत्येकं स्वबोध्यत्वं चास्तु को विरोधः । यथा "अच्च घेः" [ पा० सू० ७।३।११९ ] इत्यादौ गुणदर्शनेन घिशब्दस्यापि घिसञ्ज्ञाबोद्ध्यत्वं तद्वत् । एवमजादिसञ्ज्ञा स्वसञ्ज्ञिघटकेकारादिष्विवाकारचकारयोरपि प्राप्नोत्येव । किं च, स्वशब्देन केवलान्त्यपरामर्शसम्भवेऽपि विशिष्टपरामर्शो न बाधकं, तत्र समुदाये फलाभावादवयवयोर्विश्रान्तिं प्राप्स्यति । तस्माज्ज्ञापकादिनैवान्त्यस्य तत्कार्यं वारणीयमित्यलम् ।

---

एवञ्चावयवत्ववाच्छिन्नविषयतानुपपन्नातः समुदायपदमाक्षिप्यते, सूत्रेऽवयवत्वावच्छिन्नविषयताप्रयोजकं पदमादिपदम् अन्त्यपदञ्च किन्तुसूत्रघटक समुदायत्वावच्छिन्नविषयताप्रयोजकपदन्नास्ति इति धर्मद्वयघटितहेतुना समुदाय आक्षिप्यते—

अवयवत्वेनेति । तृतीयार्थः प्रकारता तथाचावयवत्वप्रकारकावयवविशेष्यकबोधजनकाभ्यामाद्यन्ताभ्यामित्यर्थः तयोः = आद्यन्तयोः । पारार्थ्येति । संज्ञिबोधकत्वनिर्णयात् । प्राचामनुरोधेन मूलकृतोक्तं व्याख्याय सिद्धान्तमाह—वस्तुतइति ज्ञापकादिनेति । ज्ञापकमनुनासिक इत्यादि निर्देशः । आदिना भाष्यकारोक्तप्राधान्यलोपबलीयस्त्वयोः सङ्ग्रहः ।

प्रकारान्तरेणेति । ज्ञापकादिभिन्नप्रकारेण । अशक्यवारणत्वादिति । वाच्यप्रमेयादिशब्देषु संज्ञास्वरूपस्यापि संज्ञित्वेन प्रतीतेरीदृशेषु प्रधानाप्रधानयोरिति न्यायप्रवृत्तिरनुचिता । एवञ्चान्त्यस्य ज्ञापकादिना व्यावृत्तावप्यादेः स्वशब्दानुवृत्तिमन्तरैव तत्तत्प्रत्याहारबोध्यत्वमक्षतमित्याशयः ।

---

ण् ऋ ऌ क् ए ओ ङ् ऐ औ च् इस समुदाय का आक्षेप होगा यद्यपि समुदायान्तर्गत ण् क् ङ् च् है तथापि "प्रत्याहारेष्वितां न ग्रहणम्" इस न्याय के बल से उनका ग्रहण नहीं होगा । यह समुदाय एक साथ लक्ष्य में मिलेगा नहीं, अतः प्रत्येक अवयव की अच् संज्ञा होगी आदि अन्त्य संज्ञास्वरूप के बोधक हैं, अतः शक्ति ज्ञान काल में ही आदि अन्त्य का संज्ञी-बोधकत्व निर्णय हो जायगा। सन्ज्ञा सन्ज्ञी का बोध कराती है, अपने स्वरूप का नहीं । प्राचीनों की रीति से मनोरमा की व्याख्या करके अपना सिद्धान्त कहते हैं ।

वस्तुतस्तु "अनुनासिक इत्यादि" उच्चारण से अन्त्य तथा मध्यानुबन्धों की अच् सन्ज्ञा नहीं होगी । आद्यन्त शब्द से आद्यन्त विशिष्ट समुदाय का आक्षेप होने से इ उ इत्यादि की तरह आद्यन्त की प्राप्त अच् सन्ज्ञा ज्ञापकादि भिन्न प्रकार से वारण करना अशक्य है । यहाँ पर स्व शब्द की अनुवृत्ति नहीं होती फलाभाव होने से । ज्ञापकादि का ही फलितार्थ है स्वस्य रूपस्येति ।

यदि कहो कि सन्ज्ञा सन्ज्ञी का बोधन कराती है, अपना नहीं इस अनुभव का अपलाप होगा तो नहीं कहना चाहिये, क्योंकि जहाँ पर उद्देश्यतावच्छेदक और विधेयतावच्छेदक की एक रूप से उपस्थिति होती है, वहाँ पर शाब्दबोध नहीं होता, किन्तु यहाँ पर तो अकारादि चान्त समुदाय पर्याप्त समुदायत्व उद्देश्यतावच्छेक है अजानुपूर्वी विधेयतावच्छेदक है, भेद होने से शाब्दबोध

आद्योच्चारणमिति। यद्यप्युपदिश्यतेऽनेनेति करणव्युत्पत्त्या शास्त्रमुपदेश इति

---

नन्वेवमप्यनुवृत्तिपरभाष्यकारीयव्याख्यानविरोध इत्यत आह—भाष्येऽप्येतदिति। को विरोध इति। यत्रोद्देश्यतावच्छेकविधेययोरेकरूपेणोपस्थितिस्तत्रोद्देश्यविधेययोर्नान्वयबोधोदण्डवान् दण्डवानित्यत्र यथा, नहि तथा प्रकृतेऽस्ति। अकारादिचान्तसमुदायपर्यन्तसमुदायत्वमुद्देश्यतावच्छेदकम्, अजित्यानुपूर्वी तु विधेयतावच्छेदकमिति भावः।

प्राप्नोत्येवेति एतेन भवदुक्तरीत्या आद्यन्तयोर्वारणाभावः। स्वरूपमित्यनुवृत्तेर्वैयर्थ्यञ्च ध्वनितम्। यन्मूले "स्वंरूपमित्यस्यानुवृत्तिङ्कृत्वा स्वपदेनान्त्यपरामर्शाभाव उक्तस्तद् वैयर्थ्यमप्यस्तीत्याह किञ्चेति।

विशिष्टेति। अजित्यादिविशिष्टेत्यर्थः। तस्मात्=उक्तप्रकारद्वयात्। अलमिति। वस्तुतस्त्वत्रबोधकत्वस्य समुदायवृत्तितया सावकाशत्वेऽपि माठरपरिवेषणन्यायेन बाध्यबाधकभावो दुर्वारः। सर्वे ब्राह्मणाः भोजयन्तां माठरकौण्डिन्यौ परिवेविषाताम् इति हि न्यायस्वरूपम्। अनेन चैककार्यविनियोगोद्देशेन प्रवृत्तवाक्यकदम्बघटकव्यापकपदार्थे तद्वाक्यघटकव्याप्यपदार्थातिरिक्तत्वेन सङ्कोचः क्रियते। तथा च प्रकृतेऽकारादिचान्तसमुदायरूपव्यापकपदार्थे, आद्यन्तरूपव्याप्यपदार्थातिरिक्तत्वेन सङ्कोचे, आदेरपि संज्ञा न प्राप्नोतीतिः अतः "स्वम्" इत्यनुवृत्तिपरभाष्यसम्मतमूलोक्तमार्ग एव ज्यायान्।

आद्योच्चारणमिति। उच्चारणे आद्यत्वञ्च स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविधेयताकबोधप्रयोजकत्वम्। स्वं नुमिति तद्वृत्तिश्रावणप्रत्यक्षविषयतानुमि-

---

हो जायगा। संज्ञास्वरूप वर्णद्वयात्मक अजादि को हो अज्बोध्यत्व प्रत्येक को हो, इसमें क्या विरोध। जैसे अच्चघेः घटक, घि में गुण देखा जाने से घि संज्ञा बोध्यत्व भी घि में मानते हैं, उसी प्रकार यहाँ पर भी। तथा च अच् सञ्ज्ञा, सञ्ज्ञी घटक इकारादि की तरह अकार चकार को भी प्राप्त होती है, स्व शब्द से केवल अन्त्य का परामर्शाभाव होने पर भी विशिष्ट परामर्श में बाधकाभाव है। विशिष्ट परामर्श हो जाने पर समुदाय में फलाभाव होने से अवयवों में सम्बन्ध होगा, इस कारण से अन्त्य को ज्ञापकादि से ही संज्ञा रूप कार्य का वारण करना चाहिये।

अन्त्य की इत्सञ्ज्ञा होने से लोप से अपहार हो जानेपर "आदिरन्त्येन" यह असङ्गत हो जायगा। ( अतः सूत्रों में इत्संज्ञा हो जाने पर भी इगादि शब्दों में इत्संज्ञा नहीं होगी ) अतः तत्सदृश अर्थ करना चाहिये तथा च—अन्त्य इत् सदृश सहित जो आदि सदृश उससे आक्षिप्त जो समुदाय तद्घटकों की सञ्ज्ञा होती है, जिसका सादृश्य ग्रहण करते हैं, वह प्रतियोगी होता है, ऐऔच् के चकार का सादृश्य ग्रहण करते हैं, अतः वह प्रतियोगी हुआ। समुदाय निरूपक होता है, समुदाय से निरूपित आदिता अन्तता रहती हैं। अन्त्य इत् कौन हुआ ऐऔच् का चकार तत्सदृश हुआ अच् का चकार उसके साथ आदि हुआ अइउण् का अकार तत्सदृश हुआ अच् का अकार "ऐऔच्" घटक चकार प्रतियोगी है, अनुयोगी है अच्घटक चकार स्वपदेन गृहीत होगा अच् तद्घटक चकारानुयोगिक सादृश्य प्रतियोगित्वेन विवक्षित वर्ण हुआ 'ऐऔच्' घटक चकार तन्निष्ठान्तता निरूपक, स्व ले लेगें अच् तद्घटक अकार तदनुयोगिक सादृश्यप्रतियोगित्वेन विवक्षित वर्ण हुआ अइउण् घटक अकार तन्निष्ठादितानिरूपक समुदाय घटकों की अच् संज्ञा होती है।

भाष्यवृत्त्यादिषु व्याख्यातम्, तथाऽपि तत्प्रौढिवादमात्रम्, करणे घञो दुर्लभत्वात्,

---

भाष्येति। तत्र हि 'उपदेश इति किम्, अभ्र आँ अपः, प्रत्यक्षमाख्यानमुपदेशो गुणैः-प्रापणमुद्देश' इति "नासावुपदेश" इत्युक्त्वोपदेशोद्देशयोर्लोकव्यवहारेण सङ्कीर्णत्वमाशङ्क्य "उपदेशनेऽजनुनासिक" इति वार्त्तिककृद्दर्शितन्यासस्य खण्डनाय "उपदेश इति करणे घञुपदिश्यतेऽनेन" इत्युक्तम्। तच्च शास्त्रं शासनकरणं प्रत्यासत्त्यैतच्छास्त्रीयधात्वागमप्रातिपदिकप्रत्याहारसूत्रप्रत्ययादेशरूपम्।

प्रौढिवादमात्रमिति। वार्त्तिककृदुक्तन्यासीयार्थस्य कथञ्चित्सूत्रतोऽपि लाभसम्भवाद्

---

तदवच्छेदकधर्मः नुम्त्वधर्मः तदवच्छिन्नविधेयता नुमि विधेयतानिरूपकबोधः नुम् भवतीत्याकारकोबोधः, तज्जनकत्वं नुमि वर्तते। तथा च धर्मविशिष्टोच्चारणमाद्योच्चारणमिति फलितम्। धर्मः नुम्त्वमिति तद्विशिष्टोच्चारणम्, वैशिष्ट्यञ्च स्वेन साक्षदवच्छिन्न विधेयताकशाब्दबोधानुकूलत्वस्वप्रकारकप्रत्यक्षानुकूलत्वैतदुभयसम्बन्धेन स्वं नुम्त्वमिति तेन साक्षादवच्छिन्नविधेयतानुमितन्निरूपकशाब्दबोधः इदित्धातोर्नुम् भवति इति शाब्दबोधस्तज्जनकत्वं नुमि स्वं नुम्त्वमिति तत्प्रकारकप्रत्यक्षानुकूलत्वन्नुमि।

तत्र हीति। "उपदेशेऽजनुसासिक इत्" इति सूत्रव्याख्यानपरभाष्ये। उपदेशे किमिति। उद्देशोपदेशशब्दयोरुपसर्गभेदेऽपि अभिन्नार्थत्वं प्रक्रमते उपक्रमते इत्येतयोरिव मन्यमानः पृच्छति, उपदेश इति किम्। प्रत्यक्षमिति। अत्र प्रत्यक्षशब्दोऽर्श आद्यजन्तस्तेन प्रत्यक्षस्येन्द्रियग्राह्यस्याख्यानमित्यर्थो लभ्यते। प्रत्यक्षमिति त्वाख्यानक्रियाविशेषणम्। तद्यथा—गोपदार्थज्ञानरहिताय कश्चिद्गोः सक्थि, कर्णं वा गृहीत्वोपदिशति अयं गौरिति। उद्देश्य. इति। साधारणधर्मोपादानेन तु यत्प्रतिपादनं स उद्देशस्तद्यथा कश्चिदाह. देवदत्तं मे भावानुद्दिशतु स इहस्थः प्रयागस्थं देवदत्तमुद्दिशति, अङ्गदी कुण्डली किरीटी व्यूढोरस्को वृत्तबाहु लोहिताक्षस्तुङ्गनासो विचित्राभरण ईदृशो देवदत्त इति।

सङ्कीर्णत्वमिति। प्रत्यक्षाख्यानेऽप्युद्देशप्रयोगदर्शनेन सङ्कीर्णत्वम्। यथा छात्रेण "अनुवाकम्भवानुद्दिशतु" इत्युक्ते गुरुणा "इषेत्वेकम" धीष्वेत्युक्ते शिष्य आह—उद्दिष्टोमेऽनुवाक इति। इदञ्च सङ्कीर्णत्वं लृटः सद्वेति सूत्रविहितसङ्ग्रहायावश्यकमिति। वार्तिकेति। "सिद्धं तूपदेशनेऽजनुनासिक इति" इदञ्च वार्तिकमुच्चारित इत्यस्याध्याहारेण व्याख्येयम्। तथाच धात्वादावुच्चारिताजनुनासिकस्येत्संज्ञेत्यर्थः। तच्च = उपदेशकरणञ्च। शास्त्रमिति = शास्त्रपदेन प्रयोगशासनकरणभूताः धातुप्रातिपदिकप्रत्ययनिपातागमादेशाः, हलन्त्यसूत्रे व्यवसितपदार्थत्वेन भाष्ये उक्ता गृह्यन्ते। प्रत्याहारसूत्रमिति। प्रत्याहारसम्पादकम् अइउण् इत्यादि सूत्रमित्यर्थः। आदेशरूपमिति। धात्वा-

---

अज्ञात स्वरूप का कार्यार्थ अर्थात् स्वरूप बोधनार्थ अपूर्व उच्चारण उपदेश कहलाता है। प्रदीप में स्पष्ट है "येषान्तु स्वरूपज्ञानायापूर्वमुच्चारणं तेषामेवोपदेशव्यवहारः।" मनोरमाकार के मत में उपदेश शब्द भाव घञन्त है 'अर्थादुपदेशनमुपदेशः' इसी बात को मन में रखकर आक्षेप करते हैं—यद्यपि भाष्यवृत्त्यादि में करणव्युत्पत्ति से उपदेश शब्द का साधुत्व किया है तथापि वह

ल्युटा बाधात्। न च घः, असंज्ञात्वात्। प्रायेण सञ्ज्ञायामिति व्याख्यानस्य क्लिष्टत्वात्। न ह्युपाधेरुपाधिर्भवतीत्यादिना भाष्यकृताऽवहेलनाच्च। अत एव चापवादो 'हलश्च' (३।३।१२१) इति घञपीह न। बाहुलकं त्वगतिकगतिः। अत एव प्रक्रियन्ते शब्दा याभिरिति करणव्युत्पत्तिरपि परास्ता। तथा च वार्त्तिकम्—

---

प्रयासान्तरप्रवृत्तिस्ते वृथैवेति प्रौढ्या बोधयितुमेवं वाद इति भावः घञ् इति। अकर्त्तरि चेत्यत्र सञ्ज्ञायामित्यस्य प्रायिकत्वात्तत्प्राप्तिरिति भावः। बाधादिति। वासरूपविधिस्तु क्तल्युट्तुमुन्खलर्थेषु प्रतिषिद्धः। न च तत्र साहचर्येण भावल्युट एव ग्रहणमिति वाच्यम्। ईषत्पानः सोमो भवतेत्यत्र कर्मणि खल् नेति भाष्यादिप्रामाण्येनात्र साहचर्यानाश्रयणादिति भावः। क्लिष्टत्वादिति। गुणप्रधानसन्निधौ प्रधानस्य विशेषणे साकाङ्क्षत्वे इतरान्वयस्तस्यायुक्त इति क्लेश इति भावस्तदाह—नहीत्यादिना भाष्यकृतेति। अस्यार्थस्येति शेषः।

---

दिसाहचर्यादादेशोऽपि प्रकृतशास्त्रप्रवर्तकाचार्यैः शास्त्रेस्वरूपेणोच्चारितो विवक्षितः तेनाश्र आँ अप इत्यत्र "आङोऽनुनासिक" इति विहितस्यानुनासिकस्यादेशत्वेऽपि न क्षतिः।

एवं वाद इति। ततश्च नायमौद्धत्यप्रयुक्तो भगवतो महाभाष्यकारस्य वादः, किन्तु वार्तिककारोक्तार्थस्य सूत्राक्षरमर्यादालभ्यसमर्थनचातुरीप्रयुक्त इति। प्रायिकत्वादिति। "अकर्तरि च कारके संज्ञायामिति" सूत्रस्थभाष्यमेवमानन्तथाहि—संज्ञाग्रहणमनर्थकम्। असंज्ञायामपि घञ् दृश्यते, को भवता लाभो लब्ध इति, को भवतो दायो दत्त इति। तत्प्राप्तिरिति। घञ्प्राप्तिः।

ननु वासरूपविधिना ल्युड्विषये घञपि भविष्यतीत्यत आह वासरूपविधिस्तु। प्रतिषिद्ध इति। तत्र ज्ञापकन्तु "अर्हे कृत्यतृचश्च" इति तयोर्ग्रहणम्। तत्र हि चकारसमुच्चये, लिङा कृत्यतृचोबाधोमाभूदिति तयोर्ग्रहणम्। साहचर्येणेति। परतुमुन्साहचर्येण। खलनेति। किन्तु "आतोयुजिति युजेवेति शेषः। यदि साहचर्याश्रयणमत्रस्यात्तदा तुमुन्साहचर्येण भावार्थकखलविषय एव वासरूपविधिनिषेधेन, प्रकृते कर्मार्थकत्वेन निषेधाप्राप्त्या भाष्यासङ्गतिः स्पष्टैव। क्लिष्टत्वमुपपादयति=गुणेति। विशेषणे इति। निरूपितत्वं-सप्तम्यर्थः तस्याकाङ्क्षायामन्वयस्तथा च प्रधानस्य विशेषणनिरूपितसाकाङ्क्षावत्वे गुणस्य प्रधानातिरिक्ते गुणेऽन्वयोऽयमुक्तः किन्तु प्रधानान्वय एव न्याय्यः प्रकृते च विधेयत्वेन प्रत्ययः प्रधानम्। तद्विशेषणमेव प्रायेण न तु संज्ञायामित्यस्येति।

---

जबरदस्ती (बलात्) कथन मात्र है। "करणाधिकरणयोश्च" इस सूत्र से विहित जो ल्युट् उससे बाध हो जाने से घञ् दुर्लभ है, यद्यपि "पुंसि संज्ञायां घः प्रायेण" इस सूत्र से घ प्रत्यय प्रायेण संज्ञा में होता है, क्वचित् असंज्ञा में भी होता है, यह कह सकते हैं। तथापि घः विशेष्य है संज्ञायाम् विशेषण है, अतः प्रायेण इस पद का "घः" यहाँ पर ही अन्वय होगा सञ्ज्ञायाम् में नहीं। क्योंकि भाष्यकार ने विशेषण का विशेषण नहीं होता यह कह करके उक्तार्थ का तिरस्कार किया है। ल्युट् से बाध होने के कारण ही घ का अपवाद "हलश्च" इस सूत्र से घञ् भी नहीं होता। बाहुलकात् तो अगतिक की गति है करण में घञ् दुर्लभ होने से

"अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेनेति"। अतो भाव एव प्रत्ययो न्याय्य इति भावः॥

---

एवं चोभयप्राप्तौ कर्मणीति नियमाच्च कर्त्तरि षष्ठीति बोद्ध्यम्। अवहेलनाच्चेति। चो हेतौ यतोऽवहेलनमतः क्लिष्टत्वमित्यर्थः। घापवाद इति। ल्युडपवादश्चेत्यपि बोद्ध्यम्। तत्रापि सञ्ज्ञायामित्यनुवृत्तेरिति भावः। अगतिकगतिरिति। न च "खनो घ च" [पा० सू० ३।३।१२७] इति घविधानमन्यतोऽपीत्यर्थमित्याकरे स्पष्टं तेनात्र घः सिद्ध्यतीति वाच्यम्। तस्याप्यगतिकगतित्वात्। भगः पदमित्यादौ यत्र घित्वफलं तत्रैव तत्प्रवृत्तेश्च। पदस्य घनर्थे केन सिद्धेनैतदुदाहरणं किं तु क्वाचित्कं वाक्यं तत्, किञ्चोच्चार्य वर्णानाह—"उपदिष्टा इमे वर्णा" इत्यादिभाष्यादुपदेशशब्दस्योच्चारणार्थत्वस्य निर्णयेन, सङ्कीर्णलोकव्यवहारस्य लक्षणयाऽव्युपपत्त्या भावे घञि बाधकाभावः।

किं चोपदेशशब्दस्य प्रत्ययादिपरत्वे तस्यैव हलन्त्यमित्यत्रान्वयेन यत्किंचित्समुदायान्त्यस्य वारणसम्भवे तदर्थमन्त्यग्रहणसामर्थ्यादिवर्णनक्लेशो भाष्यकृतो व्यर्थः स्यादिति बोध्यम्। 'उद्देशश्च प्रातिपदिकानां नोपदेश" इति "आदेच उपदेशे" [पा० सू० ६।१।४५] इति सूत्रे च भाष्ये भावघञन्तस्यैव तस्याङ्गीकाराच्चेति दिक्।

---

भाष्यकृतावहेलनादित्यत्र भाष्यकृच्छब्दात् "कर्तृकर्मणोरिति षष्ठी प्राप्नोतीति शङ्कावारणायाह अस्यार्थेति—मूले अत एवेति। व्याख्यानस्य क्लिष्टत्वादेवेति ल्युटो बाधकत्वशङ्कायां घापवादकत्वकथनमनुपपन्नमेवेत्यत आह—ल्युडपवाद इति। तत्रापि=हलश्चेतिसूत्रेऽपीत्यर्थः। अगतिकगतिरित्यस्य न विद्यतेगतिर्यस्य तस्य गतिरित्यर्थे, अगतिकगतिरित्यनुपपन्नं गत्याश्रयस्यैव सत्त्वादित्याशयेनाशङ्कते न चेति। अन्यतोऽपि=खन् भिन्नादपि। खन् धातोः घित्वस्य फलाभावादिति भावः। तेन=हेतुना अत्र=उपदेशपदे करणे घः स्यात्। तस्यापि घविधानस्यापि गतिकत्वादिति=ज्ञापकसिद्धत्वेनासार्वत्रिकत्वात्।

ननु स्नानीयञ्चूर्णमित्यत्र यथा बाहुलकात् करणेऽनीयर्प्रत्ययस्तथोपदेशपदेऽपिबाहुलकात् घञ्स्यादत आह—उच्चारणार्थत्वेति। आद्योच्चारणार्थत्वेत्यर्थः। अतएव "एकाच उपदेशे" इति सूत्रे 'इत्संज्ञाविधावुच्चारणवचन उपदिशिर्गृह्यते। अपिना शक्तिपरिग्रहः। शक्तिग्राहकशिरोमणिवृद्धव्यवहारस्य प्राबल्येनोभयत्र शक्तिसिद्धिः। एवञ्चानेकार्थत्वमितिभावः।

नन्वेववमपि "लृटः सद्वा" इत्यादिशत्राद्यवयवानामित्वानापत्तिः लक्षणादिना तथा व्यवहारोपपत्तिवदत्रद्वयोर्यथाकथञ्चिद्बोधकस्य वा ग्रहणे तु 'अभ्र आँ अटित' इत्यादौ दोषस्य तादवस्थ्यमेवातोबाधकस्य सत्त्वाद्भाष्यरीतिरेवशरणमित्यत आह—प्रत्ययादिपरत्वे इति। भाष्योक्तकरणव्युत्पत्त्या प्रत्ययाद्यर्थत्वे तदर्थम्—यत्किञ्चित्समुदायान्त्यवारणार्थम्।

दिगिति। बाहुलकात्करणे घञ्स्वीकार एवोचितोऽतएव "भवतष्ठक्छसाविति सूत्र

---

"प्रक्रिया" शब्द की करण व्युत्पत्ति असङ्गता है। इस बात को वार्तिककार भी कहते हैं—अच् अप् को बाधकर स्त्र्यधिकारोक्त प्रत्यय खलर्थकप्रत्यय तथा अन प्रत्यय होते हैं, विप्रतिषेध से। स्त्र्यधिकारोक्त प्रत्यय को बाधकर खलर्थक प्रत्यय होते हैं तथा अन प्रत्यय होता है। अतः प्रक्रियन्

विहितान्त्यस्येत्वसिद्धिरिति नव्याः। मूले अतएवेति। ल्युटा बाधादेव। करणव्युत्पत्तिः परास्तेति। करणे घञ्दुर्लभत्वात्। प्रक्रियन्ते शब्दा याभिरिति करणव्युत्पत्तिरसङ्गता। प्रकरणं प्रक्रियेति ह्युचम्। वार्तिकमिति। ईषद्दुःसुषुकृच्छ्राकृच्छ्रार्थेषुखल् ३।३।१२६ इति सूत्रस्थवार्तिकम्।

अजब्भ्यामिति। अजपौ बाधित्वा अनखलर्थकप्रत्ययस्त्र्यधिकारोक्तप्रत्ययाः भवन्ति।

---

शब्दाः याभिः इस करण व्युत्पत्ति में "कृत्वः श च" इसको बाधकर ल्युट् प्रत्यय होने लगेगा। इसलिए भाव में घञ् प्रत्यय करना चाहिये।

'उपदेशेऽजनुनासिकइत्' इस सूत्र के भाष्य में भाष्यकार ने लिखा उपदेश पद का क्या प्रयोजन है, इसका समाधान करते हैं। 'उपदेश की इत्संज्ञा हो', उद्देश की इत् संज्ञा न हो, 'अभ्र आँ अपः' यहाँ पर आँ उद्देश है, उसकी इत्संज्ञा न हो। तब आशङ्का हुई उपदेश किसे कहते हैं, उद्देश किसे कहते हैं, प्रत्यक्ष जैसे हो इस तरह के कथन को उपदेश कहते हैं, अर्थात् इन्द्रियार्थ सन्निकर्षजन्यज्ञानविषयीकरण को उपदेश कहते हैं, जैसे ॐ पा० १।१।१८ इससे इति परे रहते उञ् को (दीर्घ अनुनासिक प्रगृह्य विशिष्ट) ॐ यह आदेश होता है, इसको उपदेश कहते हैं। साधारण धर्म से स्वरूप प्रतिपादन को उद्देश कहते हैं। जैसे "अभ्र आँ अपः में आँ उद्देश है, क्योंकि "आङोनुनासिकश्छन्दसि" इस सूत्र से आङ् को अनुनासिक करते हैं छन्द में। प्रत्यक्षाख्यानाभाव होने से इसको उद्देश कहते हैं। यह कह करके कहा लोक में उपदेश के स्थान पर उद्देश का प्रयोग होता है और उद्देश के स्थान पर उपदेश का प्रयोग होता है। तथा च उपदेश उद्देश सङ्कीर्ण होने से आँ की इत्संज्ञा हो जायगी तथा च "अभ्र आँ अटितः" यहाँ पर "स्व समीपेऽनुबन्धेस्वनिरूपितावयवत्वमारोप्यते अर्थात् स्वसमीप अनुबन्ध में स्वनिरूपित अवयवत्व की मान्यता होने से, अट् धातु के समीप" आँ "अट्" धातु का अवयव माना जायगा तथाच अनेकान्ताः अनुबन्धाः इस पक्ष में "आदितश्च" करके इट् का निषेध हो जायगा, इस दोष का वारण करने को वार्तिककार ने "उपदेशनेऽजनुनासिक इत्" इस वार्तिक का प्रणयन किया।

वार्तिक में उपदेशन पद से शास्त्र का ग्रहण होगा। इस वार्तिक से दोषवारण हो जायगा, किन्तु सूत्र भिन्न हो जायगा अतः भाष्यकार ने इस वार्तिक का खण्डन करके करण घञन्त उपदेश पद को स्वीकार किया. क्योंकि करण घञन्त उपदेश से शास्त्र का ग्रहण हो सकेगा, भाव घञन्त से नहीं। शास्त्र का अर्थ है शासनकरण, व्याकरणशास्त्रीय शासनकरणता धातु, आगम, प्रातिपदिक, प्रत्याहारसूत्र प्रत्याहार सम्पादक अइउण् इत्यादिसूत्र, प्रत्यय, आदेश, में है। प्रौढ़िवादमात्र शब्द से मनोरमाकार को क्या इष्ट है, इस अभिप्राय को शब्दरत्नकार व्यक्त करते हैं। वार्तिकार ने जो सिद्धन्तूपदेशनेऽजनुनासिकवचनात्" कह करके जो 'उपदेशने' यह न्यास किया, उस न्यासीय अर्थ का यदि किसी प्रकार सूत्र से लाभ हो जाय तो न्यासान्तर में प्रवृत्त होना प्रौढिवादमात्र है।

करण में घञ् दुर्लभ है, ल्युट् से बाध होने से। इस ग्रन्थ का अभिप्राय शब्दरत्नकार स्पष्ट करते हैं, "अकर्तरि च कारके सञ्ज्ञायाम्" इस सूत्र में सञ्ज्ञायाम् यह प्रायिक होने से करण में घञ् प्राप्त होगा, उसको ल्युट् बाध लेगा। यदि कहो वासरूपविधि से विकल्प से बाध होगा तो यह नहीं कह सकते, क्योंकि क्त ल्युट् तुमन् खलर्थक प्रत्ययों में इसका (वासरूपविधि का) प्रतिषेध किया गया है।

यदि आशङ्का की जाय कि तुमुन् प्रत्यय भाव में होता है, उसके साहचर्य से ल्युट् प्रत्यय जहाँ पर भाव में होगा वहीं पर "वासरूप विधि" का प्रतिषेध होगा, यहाँ पर तो ल्युट् प्रत्यय करण में है अतः प्रतिषेध नहीं होगा। घञ् प्रत्यय भी हो जायगा, तो इसका उत्तर है, ईषत्पीयते यः सः ईषत्पानः यहाँ पर कर्म में खल् प्रत्यय नहीं होता, अपितु उसका अपवाद "आतो युच्" करके युच् ही होता

तथाहि अजपोरवकाशः चयः, लव इत्यत्र स्त्रीप्रत्ययानामवकाशः कृत्तिः हृतिरित्यत्रेहोभयं-प्राप्नोति चितिः, स्तुतिरित्यादौ विप्रतिषेधेन स्त्र्यधिकारोक्तप्रत्ययाः भवन्ति। खलोऽवकाशः ईषद्भेदः सुभेद इत्यत्राजपोरवकाशः चयः, लवः, इत्यत्रेहोभयं प्राप्नोति, ईषच्चयः सुचयः, ईषल्लवः सुलवः विप्रतिषेधेन खलर्थकप्रत्ययाः भवन्ति। अनस्यावकाशः, इध्मप्रव्रश्चनइत्यत्रा-जपोरवकाशः चयः लव, इत्यत्रोभयं प्राप्नोति पलाशचयन इत्यत्र विप्रतिषेधेनानप्रत्ययो-भवति।

खलनाविति। स्त्र्यधिकारोक्तप्रत्ययं बाधित्वा विप्रतिषेधेन खलनौ भवतः। तद्यथा स्त्रीप्रत्ययानामवकाशः कृतिः हृतिरित्यत्र खलोऽवकाशः ईषद्भेद इत्यत्रेहोभयं प्राप्नोति सुभेदा, इत्यत्र विप्रतिषेधेन खलर्थकप्रत्ययाः भवन्ति। अनस्यावकाशः इध्मप्रव्रश्चन इत्यत्र स्त्रीप्रत्ययनामवकाशः कृतिः हृतिरित्यत्रेहोभयं सक्तुधानी, तिलपीडनीत्यत्रविप्रतिषेधेनान-प्रत्ययो भवति।

---

है, यदि साहचर्य का यहाँ पर आश्रवण होता तो तुमुन् साहचर्य से भावार्थक खल् विषय में ही "वासरूप विधि" निषेध होने से प्रकरण में कर्मार्थकत्वेन निषेध की अप्रवृत्ति होने से अपवादत्वेन युच् ही होता है, यह भाष्य असङ्गत हो जायगा। अतः साहचर्य का अनाश्रयण होता है।

क्लिष्टत्व का आशय शब्दरत्नकार लिखते हैं। गुणप्रधान की सन्निधि रहने पर प्रधान को विशेषण की आकाङ्क्षा रहने पर प्रधानातिरिक्त गुण में अन्वय अयुक्त है, किन्तु प्रधान में अन्वय हां उपयुक्त है। प्रकरण में विधेयतया प्रत्यय प्रधान है उसी का विशेषण प्रायेण होगा, सञ्ज्ञायाम्, का नहीं। विशेषण का विशेषण नहीं होता इत्यादि से भाष्यकार ने "प्रायेण सञ्ज्ञायाम्" इस अर्थ की अवहेलना की है।

भाष्यकृता यहाँ पर "कर्तृकर्मणोः" से षष्ठी क्यों नहीं होती, इसका उत्तर शब्दरत्नकार देते हैं "उभयप्राप्तौ कर्मणि" यह सूत्र नियमार्थ है, क्योंकि कर्तृ-कर्मणोः कृति" इससे कर्म में षष्ठी सिद्ध थी फिर "उभयप्राप्तौ कर्मणि" इस सूत्र की क्या अपेक्षा "सिद्धे सति आरभ्यमाणो विधि-र्नियमार्थः" नियम होगा "कर्मण्येवषष्ठी" अर्थात् एककृत् परे रहते कर्ता और कर्म में षष्ठी प्राप्त रहने पर कर्म में ही षष्ठी होती है। प्रकरण में कर्म जो, अस्यार्थ, है उसमें षष्ठी होगी, कर्त्ता में नहीं। चकार हेतु में है, विशेषण का विशेषण नहीं होता, इस कारण "प्रायेण सञ्ज्ञायाम्" इसका तिरस्कार है, अतः प्रायेण को संज्ञायाम् में विशेषण करना क्लिष्टता है।

"पुंसि सञ्ज्ञायाम् घः" इसका अपवाद तथा "कारणाधिकरणयोश्च" इसका अपवाद "हलश्च" करके घञ् यहाँ पर नहीं होगा, क्योंकि यहाँ पर भी सञ्ज्ञायाम् इसकी अनुवृत्ति आती है। 'अगतिक-गतिः' इसका आशय शब्दरत्नकार लिखते हैं।

यद्यपि "खनो घ च" इस सूत्र से घ विधान अन्यधातुओं से भी घ प्रत्यय हो इसलिए है, तथा च उपदेश यहाँ पर इससे घ प्रत्यय हो जायगा। इसका यह अभिप्राय है—खन् धातु से घ प्रत्यय हो जाने पर घित्व का फल कुत्वादि की यहाँ पर प्राप्ति ही नहीं, अतः व्यर्थ होने से खन् भिन्न धातुओं से भी घ प्रत्यय होगा, तथापि यह भी अगतिक की गति है, जहाँ पर घित्व का फल होता है, जैसे 'भगः पदम्' यहाँ पर घित्व का फल होने से घ प्रत्यय हो जायगा। पदम् में घञर्थ में कप्रत्यय होने पर भी इसका साधुत्व हो सकता है, अतः यह उदाहरण नहीं है, किन्तु कहीं का वाक्य है।

बाहुलकात् करण में घञ् हो जायगा यह नहीं कहना चाहिये, क्योंकि "उच्चार्यवर्णानाह" "उपदिष्टा इमे वर्णाः" इत्यादि भाष्य से उपदेश शब्द का उच्चारणार्थत्व निर्णय हो जाने से लौकिक व्यवहार की सङ्कीर्णता तो लक्षणा से दूर हो जायगी, अर्थात् उपदेश पद की उद्देश में

यत्तु—धातुसूत्रेत्यादि पठन्ति। यच्च व्याचक्षते करणव्युत्पत्त्यापूर्वार्धोपात्तानामुपदेशत्वम्, कर्मव्युत्पत्त्या त्वागमादीनाम्। उणादिलिङ्गानुशासनयोरपि सूत्रत्वात्सिद्धे पृथगुपादानं गोबलीवर्दन्यायेन। एवं गणत्वादेव सिद्धे धातोरपीत्यादि।

---

धातुसूत्रेत्यादीति।

धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम्।
आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिताः॥ इतीत्यर्थः।

उपदेशत्वमिति। उपदेशशब्दव्यवहार इत्यर्थः। धातोरपीति। प्रत्ययेभ्य उणादेरपीत्यपिशब्दार्थः वाक्यशब्देन वार्तिकम्, शीङ्, ल्यण्, चोरट्, उण्, आचारेऽवगल्भ, घुट्, अण्, अनङ्, इत्युदाहरणानि।

---

यत्तु पठन्ति-प्रक्रियाकौमुदीकारा इति शेषः। व्याचक्षते—प्रसादकारा इति शेषः। करणव्युत्पत्त्येति। उपदिश्यतेऽनेनेति उपदेशः, कर्मव्युत्पत्त्येति। उपदिश्यते यः सः।

---

लक्षणा हो जायगी। अपि शब्द का अभिप्राय है, शक्ति से सङ्कीर्णता दूर हो जायगी। क्योंकि शक्तिग्राहक वृद्धव्यवहार प्रबल होने से उपदेश पद की उपदेश उद्देश्य दोनों में शक्ति है अर्थात् उपदेश शब्द अनेकार्थक है। तथा च भाव में घञ् प्रत्यय होगा, इसका बाधक कोई नहीं है। लौकिक व्यवहार से, उपदेश शब्द का, यदि उभयार्थक ग्रहण किया जाएगा तो "आङोऽनुनासिकः" इस सूत्र से निहित जो अनुनासिक है, उसकी भी इत्संज्ञा होने लगेगी, यह अरुचि रहने पर शब्दरत्नकार लिखते हैं।

किञ्च, उपदेश शब्द भाव घञन्त स्वीकार करने पर यत्किञ्चित् समुदाय निरूपित अन्त्य की इत्संज्ञा होती है, यह अर्थ होगा तो "हलन्त्यम्" में अन्त्य ग्रहण करें या न करें दोनों समान ही है। अतः अन्त्य ग्रहण सामर्थ्य से व्यवसितों का ग्रहण होगा व्यवसित कौन है, धातु प्रातिपदिक, प्रत्यय आदेश, उनकी इत्संज्ञा होती हैं, यह भाष्याकार ने कहा है, यदि उपदेश को यहाँ पर करण घञन्त माना जाय तो उपदेश पद प्रत्ययादि परक होगा, उसका ही "हलन्त्यम् से सम्बन्ध होने से यत्किञ्चित् समुदायान्त्य को इत्सञ्ज्ञा नहीं होगी ! यत्किञ्चित् समुदायान्त्य की इत्संज्ञा वारण करने के लिए अन्त्य ग्रहण सामर्थ्यांद वर्णन क्लेश भाष्याकार का व्यर्थ हो जायगा। "उद्देशश्च प्रतिपदिकानां नोपदेशः" यहाँ पर, "आदेच उपदेशेशिति" यहाँ पर भाष्य में उपदेश शब्द को भाव घञन्त ही स्वीकार किया गया है। यह दिशा प्रदर्शन मात्र है, भाष्योक्त बाहुलकात् करण में घञ् ही सिद्धान्त है अर्थात् उपदेशशब्द करण घञन्त भाष्यसम्मत है, जो शेखर में स्पष्ट है।

प्रक्रियाकौमुदीकार धातु सूत्र इत्यादि पढ़ते हैं, प्रसादकार उसकी व्याख्या करते हैं उपदिश्यतेऽनेन इस करण व्युत्पत्ति से, पूर्वार्धोपात्त "धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम्" में उपदेशत्व है "उपदिश्यते यः सः" इस कर्मव्युत्पत्ति से आगमादि में उपदेशत्व है। उणादि लिङ्गानुशासन तो सूत्र हैं, अतः सूत्रत्वात् ही उपदेशत्व सिद्ध रहा 'गोबलीवर्दन्याय से पृथक् उपादान किया, जैसे "सर्वेगावः समागच्छन्ति बलीवर्दोऽपि" सभी बैल आते हैं सांड़ भी आ रहा है, वृषभों के अन्तर्गत साड़ का भी ग्रहण हो जायगा, तथापि सम्मानार्थ कहा जाता है। उसी प्रकार सूत्र से उणादि लिङ्गानुशासन गतार्थ थे, तथापि सम्मानार्थ पृथक् ग्रहण किया। गण से ही धातुओं का ग्रहण हो जायगा पृथक् उपादान ब्राह्मणवसिष्ठ न्यायेन है। यह प्राचीनों ने कहा, इस पर मनोरमाकार लिखते हैं।

अत्रेदं वक्तव्यम्—किमेषामुपदेशसञ्ज्ञा, उत योगमात्रम् । नाद्यः, संज्ञायाः शास्त्रकारैरनुक्तेः, असंज्ञात्वाद् घप्रत्ययो नेति भाष्योक्तेश्च । अस्मदादिकृतसंज्ञायाः शास्त्रव्यवस्थापकत्वेऽतिप्रसङ्गाच्च, आमोऽमित्वमदन्तत्वादिति स्वपरग्रन्थ-विरोधाच्च, नह्युत्सृष्टानुबन्धस्यामो न प्रत्ययत्वं येन मित्वं न भवेत् ।

किं चैवं प्रत्ययविधौ पञ्चम्याः षष्ठीप्रकल्पकत्वे सनः सनेवादेशोऽस्त्वित्या-शङ्क्योपदेशाभावादित्सञ्ज्ञा न स्यादिति भाष्यकैयटोक्तं व्याकुप्येत ।

किञ्च "न धातुलोपः" ( पा० सू० १।१।४ ) इति सूत्रे "धातुग्रहणं किम् ? लूञ् लविता पूञ् पविता" इति भाष्यम्, उपदेश एवानुबन्धलोपे कृते ततो-धातुसञ्ज्ञेत्येवम्परः कैयटग्रन्थश्च विरुध्येत ।

---

उपदेशसंज्ञेति । उपदेशपदं योगरूढमेष्विति भावः । ननु सञ्ज्ञाशब्देन व्यवहार-एवाभिमतोऽत आह—आम इत्यादि । न चाकारोच्चारणं व्यर्थम् । तेनास्मत्पक्षज्ञापनस्यै-वौचित्यादिति भावः । आदिना यकारादौ चुञ्चुप्चणपावित्यादिसंग्रहः । उपदेशाभावादिति । आदेशस्योपदेशाभावादित्यर्थः । ततो धातुसञ्ज्ञेति । लूशब्द एव धातुसञ्ज्ञकः केवलमसौ ञित्कार्यं लभते इति भावः ।

---

ननु प्राचीनैः योग एव प्रदर्शितः 'किमेषामुपदेशसञ्ज्ञा, उत योगमात्रम् इति, विकल्पं प्रदर्श्य तन्मतखण्डनमयुक्तमत आह—उपदेशपदमिति । योगरुढमेष्विति = धात्वा-दिषु तथाच भवत्कृतं योगार्थवर्णनम्पङ्कजादिशब्दार्थवर्णनसदृशमुत पाठकादिशब्दार्थ-वर्णनसदृशमित्यत्रविकल्पप्रदर्शनतात्पर्यमितिभावः । शास्त्रकृत् कृतसंज्ञाभावेऽपि, अस्मत्कृ-तैव सास्त्वित्यत आह—मूले अस्मदादीति अतिप्रसङ्गादिति । रघुनाथादिशब्दे बालक-विशेषसञ्ज्ञेतिते "पूर्वपदादिति" णत्वापत्तिरूपातिप्रसङ्गात् । न भवेदिति । अकारस्येत्सञ्ज्ञा-

---

उपदेश योगरूढ़ संज्ञा है या उपदेश यौगिक शब्द है, उपदेश को सञ्ज्ञा नहीं कह सकते, क्योंकि शास्त्रकारों ने उपदेश सञ्ज्ञा नहीं की, भाष्यकार ने स्पष्ट कहा कि संज्ञा न होने से घ प्रत्यय नहीं होता । अस्मदादिकृत सञ्ज्ञाओं से शास्त्र व्यवस्था करने पर अतिव्याप्ति हो जायगी, रघुनाथादि शब्दों में भी "पूर्वपदात्सञ्ज्ञायामगः" से णत्व होने लगेगा । "इजादेश्च गुरुमतोऽनृच्छः" इस सूत्र पर जो प्रक्रियाकौमुदीकार ने लिखा है ।

आमोभित्त्वमदन्तत्वादगुणत्वविदेस्तथा ।
आस्कासोराम्विधानाच्च पररूपं कतन्तवत् ॥

आम अमित् है अदन्त होने से । मकारान्त रहने पर ही इत्सञ्ज्ञा होगी आम मकारान्त नहीं है अकारान्त है । अतः अकार इत्संज्ञा का अनुभव करता हुआ मकार की इत्सञ्ज्ञा का प्रतिबन्धक हो जायगा, इत्यादि जो स्वकीय उत्तर ग्रन्थ है, इसका विरोध होगा, उत्सृष्टानुबन्ध में प्रत्ययत्व नहीं है, इस कारण मित् नहीं होगा, यह नहीं कह सकते, क्योंकि अकार की इत्संज्ञा होने पर भी आम में प्रत्ययत्व होने से मकार की भी इत्सञ्ज्ञा हो जायेगी अतः स्वकीय पूर्वापर विरोध स्पष्ट है ।

पञ्चमी से परे षष्ठी की कल्पना होती है, इस पक्ष में "गुप्तिज्किद्भ्यः सन्" इत्यादि में सन् के स्थान पर सन् ही आदेश होगा, यह आशङ्का करके उपदेशाभाव होने से इत्सञ्ज्ञा नहीं होगी, यह भाष्य कैयट विरोध होगा । "न धातुलोप" इसका अर्थ है धात्ववयव का लोप रहने पर आर्ध-

अपि च, "ध्वसोरेद्धौ" ( पा० सू० ६।४।११९ ) इति सूत्रे लोपश्श्चेतिद्विशकारको निर्देशः, द्वितीयः शकार इदिति अलोऽन्त्यसूत्रस्थभाष्यकैयटादिकमपि विरुद्ध्येत । न द्वितीयः । योगस्यैव पुरस्कारे परिगणनस्य व्यर्थत्वात् । धात्वादिषु करणव्युत्पत्तिरागमादिषु नेति वैषम्यस्य दुरुपपादत्वाच्च । उपदेशताप्रयोजकधातुत्वादिरूपोपाध्यवच्छिन्नसमुदायान्त्यं हलिदित्यर्थ इति स्वग्रन्थविरोधाच्च । पक्षद्वयेऽपि लिङ्गानुशासनस्य प्रकृतानुपयोगात् । लोपश्श्चेतिशकारस्यासंग्रहाच्च । "आदेच उपदेशे" ( पा० सू० ६।१।४५ ) "उपदेशेऽत्वतः" ( पा० सू० ७।३।६२ ) इत्यादावाद्योच्चारणस्यैवोपदेशपदार्थतायाः सर्वसम्मतत्वाच्चेति दिक् ।

---

नन्वत्र सूत्रसाहचर्याद्धात्वागमप्रत्ययादिशब्देन तद्बोधकपाणिन्यादिपठितानुपूर्वीकाणां ग्रहणम् । तेषां धात्वादिव्यवहारस्तु भाविसञ्ज्ञाविषयघटितत्वेन धातुपाठइत्यादिव्यवहारवदिति चेन्न । आद्योच्चारणविषयाणामित्येव सिद्धे एतस्यानुपयोगात् । इत एव चाऽरुचेराह—अपिचेति ।

अलोऽन्त्यसूत्रेति । उपधासञ्ज्ञासूत्रेत्यर्थः । विरुद्ध्येतेति । तत्र हि लोपश् इति भिन्नं पदं श् इति च । पूर्वस्य श्चुत्वेन शः । असन्देहाय झल्परसंयोगादित्वेऽपि "स्कोः" [ पा० सू० ८।२।२९ ] इत्यस्य न प्रवृत्तिः । "झलां जश्" [ पा० सू० ८।४।५३ ] इत्यादौ जश्त्वस्येव । शकारस्य धात्वाद्यन्तत्वाभावः स्पष्ट एवेति भावः ।

---

यामपि मकारस्येत्संज्ञास्यादितिभावः अभिमतः = तस्येति शेषः, अस्मत्पक्षे = भावघञन्तपक्षे किमत्र विनगमकमिति चेत् क्लृप्तार्थबोधनेन लाघवात् । यकारादिति । चञ्चुवादिप्रत्ययादेः "चुटू" इति सूत्रेणेत्ववारणाय तेनेत्थमुक्तमिति भावः । लूशब्द इति । अनुबन्धोन धात्वेकदेशः यस्मादुपदेशे एवेत्संज्ञा, प्रयोगेत्वित्यादि शेषः । असौ लूशब्दः । ञित्कार्यम्— ञकारोच्चारणसामर्थ्यादिति भावः । साहचर्यात् = साहश्यात् । एतस्य = उक्तार्थलक्षणाकल्पनस्य । इतएवारुचेरिति = उक्तरीत्योक्तदोषपरिहाररूपारुचेः । उपधासञ्ज्ञेति । उपधासंज्ञाविधायकसूत्रेत्यर्थः ।

---

धातुक परे रहते गुण वृद्धि नहीं होती । लोप का विशेषण आर्धधातुक नहीं, किन्तु गुण वृद्धि का विशेषण आर्धधातुक है, धातुग्रहणाभाव में अर्थ होगा "लोपे सति आर्धधातुकनिमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवतः" अर्थात् लोप होने पर ( यहाँ पर ञकार का लोप हुआ है ) जो आर्धधातुक निमित्तक गुण वृद्धि प्राप्त होते हैं वे नहीं होते, लविता पविता में गुण नहीं होगा । धातुग्रहण करने पर उक्तार्थ होगा ।

अनुबन्ध धात्वेकदेश नहीं है, उपदेश में ही इत्संज्ञा होती है, प्रयोग में लू शब्द की ही धातु सञ्ज्ञा होती है, वही क्रियावाचक है, अतः धातु ग्रहण करने पर लविता पविता में दोष नहीं होगा । यह कैयट-मत भी विरुद्ध हो जायगा । "ध्वसोरेद्धावभ्यासलोपश्च" इस सूत्र में लोपश्श्च यह द्विशकारक उच्चारण है, द्वितीय शकार की इत्सञ्ज्ञा होती है, यह "अलोन्त्यात्पूर्व उपधा" इस सूत्र के भाष्य प्रदीप में स्पष्ट है यह विरुद्ध हो जायगा । यदि यौगिक मानो तो परिगणन ही व्यर्थ है, धात्वादि में करण व्युत्पत्ति आगमादि में कर्म व्युत्पत्ति यह वैषम्य ठीक नहीं । उपदेशता प्रयोजक धातुत्वादि रूप जो धर्म तदवच्छिन्न जो समुदाय धातुसूत्रगणउणादि उसके अन्त्य की इत्संज्ञा होती है, इस अर्थ में जो स्वग्रन्थ विरोध होगा, वह शब्दरत्न में स्पष्ट है । सञ्ज्ञापक्ष अथवा योगपक्ष

किं च "नमो वरिवश्चित्रङः" [ पा० सू० ३।१।१९ ] इत्यस्यासङ्ग्रहोऽत्र पक्षे इत्यपि बोध्यम् । एवञ्चैतस्य रूढिरित्युक्तेः परिगणनताया एव लाभात् । योगस्यैवेति । न तु रूढेरित्यर्थः । परिगणनस्येति । धात्वादिगणनस्येत्यर्थः । वैयर्थ्येति । भाष्यरीत्या करण-व्युत्पत्त्यैव सर्वसङ्ग्रहादितिभावः । उपदेशताप्रयोजकेति । योगमात्रस्वीकारे उपदेशता—उपदेशकरणता, नहि तत्प्रयोजकं धातुत्वादि भवतीति तद्विरोधः । सञ्ज्ञात्वे तु उपदेशता—उपदेशशब्दवत्त्वम्, उपदेशशब्दस्य शब्दपरत्वात् । तदवच्छिन्नस्य प्रयोजकं तु

---

ननु लोपरूपप्रातिपदिकादग्रे-श्प्रश्लेषेऽपि शान्तस्यासंज्ञात्वेनानर्थक्यात् सुविभक्ति-र्नस्यात्, उत्पत्तौ वा हलङ्यादिलोपाद् द्विशकारक इत्यनुपपन्नमेवेत्यत आह—तन्नहीति ।

ध्वसोरिति सूत्रेहीत्यर्थः । अन्यत्रेवात्रापि अन्तरङ्गत्वादित्वे विधीयमानो लोपः शित्वा-त्सर्वादेशः, एतेन लोपविधानकालेऽशित्वात् कथं सर्वादेश इत्यपास्तम् । इदञ्चानेकान्तपक्षे । अत्र पक्षे स्वसमीपेऽनुबन्धे स्वनिरूपितावयवत्वारोपेण लोपस्य शित्वम् । एकान्तपक्षस्यैव सिद्धान्तितत्वेन तस्यैकदेश्युक्तित्वम् । एवञ्च तद्विरोधो न दोषायाऽत आह—किञ्चेति ।

अत्र पक्षे = प्राचोक्तयोगरूढपक्षे । उपदेशकरणतेति । उच्चारणकरणता ताल्वादौ तथा च धातुत्वादिकं न करणप्रयोजकमितिभावः । तद्विरोध इति । शास्त्रे उपदेश-करणतास्वीकारे धात्वाद्यन्यतमत्वापेक्षयोपदेशकरणताया धात्वाद्यतिरिक्तप्रातिपदिकपदा दिष्वपि सत्त्वेनाधिकवृत्तितया प्रयोज्यप्रयोजकभावस्य च समनियतयोरेव नियतत्वेनो-पदेशताप्रयोजकधातुत्वादि—इत्यग्रिमग्रन्थो विरुध्येतेति । सञ्ज्ञात्वे तु उपदेशतेति ।

---

में लिङ्गानुशासन अनुपयोगी है । लोपश्च यहाँ पर शकार को इत्सञ्ज्ञा भी नहीं होगी । "आदेच उपदेशेऽशिति" "उपदेशेऽत्वतः" इत्यादि में आद्योच्चारण उपदेशपदार्थ ही सम्भव होने से धातु सूत्र इत्यादि उपदेशपदार्थ नहीं माना जा सकता यह मनोरमाकार का आशय है ।

शब्दरत्नकार लिखते हैं । धातु, सूत्र, गण, उणादि, लिङ्गानुशासन, आगम, प्रत्यय, आदेश में उपदेश शब्द का व्यवहार होता है । वाक्य शब्द से वार्तिकों का ग्रहण होगा । शीङ्-ल्ण् चोरट् उण्, आचारे अवगल्भ, इदन्तोमुच्च, थुट्, अण्, अनङ् ये उदाहरण हैं, लिङ्गानुशासन शब्द से, लिङ्गा-नुशासन प्रतिपादक ग्रन्थ लिया जाता है, अतः 'इदन्तोमुच्च' यहाँ पर भी तकार की इत्संज्ञा होती है । उपदेश सञ्ज्ञा का अभिप्राय है, उपदेश पद, धातु सूत्र इत्यादि में योगरूढि है । संज्ञा शब्देन व्यवहार ही इष्ट है इस अरुचि पर "आमोऽमित्वमित्यादि" कहा अकारोच्चारण से कल्पना करेंगे कि मकार की इत्संज्ञा नहीं होती इसकी अपेक्षा भाव घञन्त ज्ञापन करना ही उचित है, आदि पद से यकारादि चुञ्चुप् चणप् का भी संग्रह हो जायगा ।

"ततो धातुसंज्ञा", इसका अभिप्राय शब्दरत्नकार लिखते हैं, लू शब्द ही धातु संज्ञक हैं, केवल लू शब्द अकारोच्चारण सामर्थ्य से मित् कार्य प्राप्त करता है । धातु सूत्र गण यहाँ पर सूत्र के साहचर्य से "धात्वागमप्रत्ययादि" शब्दों में धात्वादि बोधक पाणिन्यादि पठित आनुपूर्वी का ही ग्रहण होगा, उनमें धात्वादि व्यवहार तो भाविसंज्ञाविषयविशिष्ट होने के कारण हो जायगा । जैसे धातुपाठ व्यवहार होता है, यदि कहो तो ठीक नहीं । क्योंकि भाव घञन्त से ही यह अर्थ हो जायगा । भावघञन्त सप्तम्यन्त उपदेश शब्द की आद्योच्चारणविषय में लक्षणा करना कर्मकरण-व्युत्पत्ति की कल्पना करना यह अनुचित है । उक्तरीति से उक्त दोषों का परिहार हो जायगा, यह अरुचि रहने पर मूलकार लिखते हैं "अपि च" इत्यादि । उपधा संज्ञा विधायक अलोन्त्य सूत्रस्थ

रूढ्यर्थतावच्छेदकतया धातुत्वादि वक्तुं शक्यमिति भावः। शकारस्येति। नह्यनेन किञ्चिदुपदिश्यत इतिभावः। ननूपदिश्यते ज्ञाप्यतेऽनेनेति तदर्थः, धात्वादिभिर्हि प्रयोगो ज्ञाप्यते तद्वदनेनापि शकारेण सर्वादेशत्वं ज्ञाप्यते, इत्यरुचेराह—आदेच इति। सर्वेति। भाष्यकारादीत्यर्थः। यत्र तु करणव्युत्पत्त्यर्थसङ्गतिः, तत्रागत्याऽस्तु "कृत्यल्युटः" [पा० सू० ३।३।११३] इति बाहुलकाल्ल्युडभावः। यथा "यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तौ" इत्यादाविति दिक्॥

यथा वृद्धिरादैजिति सूत्रे "अदेङ्गुण" इति सूत्रे च वृद्धिगुणसञ्ज्ञयोः सञ्ज्ञिविशेषे सङ्केतकरणेनान्यत्रोच्चारिताभ्यां ताभ्यां सञ्ज्ञिन एव प्रतीतेः, सञ्ज्ञाशास्त्रे सञ्ज्ञाशब्दस्य शब्दरूपबोधकत्वेऽपि ततोऽन्यत्र सञ्ज्ञित्वमेव। अनुवर्तमानञ्च सञ्ज्ञिबोधकमेव संज्ञाकरणेनान्यत्रसञ्ज्ञिबोधकत्वात्। तथा च वृद्धिपदस्य सङ्केतसम्बन्धेन वृद्धिपदवानित्यर्थो भवति तथैवोपदेशपदस्य सङ्केतसम्बन्धेनोपदेशपदवानित्यर्थः स्वीकर्तव्यस्तथाच उपदेश इति अर्शआद्यजन्तः उपदेशता = उपदेशशब्दवत्ता, उपदेशशब्दस्य शब्दतत्परत्वादिति श्रीमतां गुरुचरणानां श्रीराघवेन्द्रानन्दसरस्वतीमहाभागानां वाणीं स्मारं स्मारं लिखामि। प्रयोजकपदन्तु रुढ्यर्थतावच्छेदके लाक्षणिकमित्याशयेनाह रुढ्यर्थतेति। ज्ञाप्यते=बोध्यते। तदर्थः = उपदेशशब्दार्थः। दिगर्थस्तु प्रागुक्तभाष्यस्वारस्येन "लृटः सद्वा" इत्यादिसङ्ग्रहानुरोधेन सकललक्ष्यसाधनानुरोधेन बाहुलकाश्रयणमेवोचितम्।

भाष्य कैयटादि भी विरुद्ध हो जायगा। "घ्वसोरेद्धावभ्यासलोपश्च" इस सूत्र में लोपश् भिन्न पद है, शकार भिन्न पद है, लोपसश् इस अवस्था में श्चुत्व हो जाने से लोपश्च यह सिद्ध होता है, यहाँ पर सन्देह न हो, इसलिए झल्परसंयोगादि रहने पर भी "स्कोः" इसकी प्रवृत्ति नहीं होती, जैसे झलांजशझशि" में शकार को जकार नहीं होता। लोपश्च के शकार में धात्वादि अन्तत्वाभाव स्पष्ट है। और भी उपदेश पद का यदि धातु सूत्र इत्यादि अर्थ किया जाय तो "नमोवरिवश्चित्रङः क्यच्" इसका भी असंग्रह हो जायगा, ङकार की इत्संज्ञा नहीं होगी। उपदेश शब्द धात्वादि में रुढि है यह कहने से परिगणन का ही लाभ होता है। तथा च "घ्वसोरेद्धावभ्यासलोपश्च" में शकार की "नमोवरिवश्चित्रङः" में ङकार की इत्संज्ञा नहीं होगी प्रातिपदिक होने से, क्योंकि "धातुसूत्र" इसमें प्रातिपदिक ग्रहण नहीं है। यदि यौगिक ही उपदेश शब्द माना जाय रुढि न माना जाय तो धात्वादि परिगणन व्यर्थ है। भाष्यरीति से अर्थात् करण व्युत्पत्ति से सर्वसंग्रह हो जायगा।

यदि उपदेश शब्द को यौगिक स्वीकार किया जाय तो उपदेशता का अभिप्राय होगा उपदेशकरणता वह ताल्वादि में रहेगी, उसका प्रयोजक धात्वादि नहीं हो सकता अथवा धात्वाद्यन्यतमत्वापेक्षया उपदेशकरणता धात्वाद्यतिरिक्त प्रातिपदिकों में भी है, अतः धत्वाद्यन्यतमत्व उपदेशकरणता का न्यूनवृत्ति धर्म हो गया। तथा च समनियतभाव होने से धातुत्वादि उपदेशकरणता का प्रयोजक नहीं हो सकता "समनियतत्वञ्च व्याप्यत्वेसतिव्यापकत्वम्"। योगरुढि स्वीकार करने पर भी उपदेशता का अभिप्राय उपदेशशब्दवत्व क्योंकि उपदेशशब्द शब्दवान् का बोधक है। उपदेशशब्दवत्वावच्छिन्न का प्रयोजक तो रुढ्यर्थतावच्छेदकतया धात्वादि हो सकता है। "लोपश्च" में शकार का संग्रह नहीं होगा क्योंकि शकार से कुछ उपदेश नहीं करते, यदि कहा जाय कि "उपदिश्यते = ज्ञाप्यते अनेन इति तदर्थः" जैसे धात्वादि से प्रयोग का बोध होता है, उसी प्रकार शकार से

"उपदेशेऽजनुनासिक इत्" (पा० सू० १।३।२)॥ यद्यप्यत्रोपजीव्यत्वादनुनासिकसञ्ज्ञा प्रथमं वक्तुमुचिता, तथापि नासिकामनुगत इति योगाश्रयणेनैव गतार्थत्वाद् "अनुनासिकसञ्ज्ञासूत्रं मन्दप्रयोजनम्" इति ध्वनयितुं नेहोपन्यस्तम्। उपदेशे किम्? अभ्र आँ अपः। यद्यपीह "उञः" "ऊँ" (पा० सू० १।१।१७-१८) इत्यत्रैव विधानसामर्थ्यान्नेत्त्वमिति सुवचम्, तथाप्युत्तरार्थमवश्यं कर्त्तव्यमुपदेशग्रहणं स्पष्टप्रतिपत्तये इहैव कृतम्। अच् किम्? मनिनो मकारस्य मा भूत्।

---

नासिकामनुगत इति। नासिकामभिहत्य वायुनाभिव्यञ्जित इत्यर्थः। प्रातिशाख्यशिक्षादौ लोके च तद्व्यवहारस्य तथैवोपपादनमावश्यकमिति तात्पर्यम्॥

अत एव मुखग्रहणप्रत्याख्यानभाष्यध्वनितो यमानुस्वारयोरनुनासिकव्यवहारः सूत्रमते सङ्गच्छते। "यरोऽनुनासिके [पा० सू० ८।४।४५] इत्यादौ स्वरूपग्रहणाभावस्तु "पशुः" "अपत्यम्" इत्यादिवदिति ध्येयम्। मन्दप्रयोजनमिति। मन्देषु प्रयोजनमस्येति बहुव्रीहिः। एवंविधयोगलोकप्रातिशाख्याद्यनभिज्ञं प्रति सप्रयोजनमित्यर्थः। अभ्र आँ अप इति। अत्रेत्सञ्ज्ञायां लोपः स्यादिति भावः। विधानेति। इदिति वक्तव्येऽनुनासिकविधानसामर्थ्यादित्यर्थः। नेत्त्वमिति। तत्फललोपस्य सामर्थ्यादभावे इत्त्वमपि फलाभावान्नेत्यर्थः।

---

ननु, अनुनासिकपदादनुपश्चान्नासिकाङ्गतः इति, नासिकापश्चाद् व्याप्रियते यस्मिन्निति वार्थः सम्भवस्तथाचानुनासिकाकारादीनामनुनासिकत्वगुणरहितानां स्वरूपोपलम्भादकारादिविषये मतभेदेन यद्यप्युक्तस्यार्थस्य सम्भव इति तथापि आदीनां तद्गुणरहितानामनुपलम्भात् युगपदेवोभयावच्छेदेनोत्पन्नाभ्यां वायुसंयोगाभ्यामुत्पत्तिरिति विनिगमनाविरहेणोभयोः स्थानत्वमतः कथं योगाश्रयणेन गतार्थता अत आह—नासिकामभिहत्येति। नासिकाशब्देन काकलकोपान्तभागः तदभिघातिना मुखवायुना प्रकाशिता इत्यर्थः। ततश्चाभिव्यञ्जकवायुधर्मेण वर्णो व्यवह्रियते इति भावः। अत्राऽभिव्यञ्जित इत्यनेन नित्यत्वसूचनात् वर्णाभिव्यक्तेरेवग्रहणन्नतूत्पत्तेरिति।

---

भी सर्वादेशत्व बोध होता है, इस अरुचि पर लिखते हैं "आदेच" इति। "आदेच" उपदेशे "उपदेशेत्वतः" इत्यादि में आद्योच्चारण, उपदेश पदार्थता भाष्याकारादि को सम्मत है। यत्र करणव्युत्पत्त्यैवार्थसङ्गतिः तत्रागत्या बाहुलकात् ल्युट् का अभाव होने से घञ् प्रत्यय होता है। जैसे "यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिः" तथा—"यस्य सन्ध्यक्षरेषु तपरोपदेशश्च चेत् तपरोच्चारणम्" यहाँ पर बाहुलकात् ल्युट् का अभाव करके करण में घञ् प्रत्यय करते हैं।

यद्यपि कारण होने से अनुनासिक सञ्ज्ञा पहले करना चाहिये तथापि "नासिकामनुगतः" अर्थात् नासिका से टकराकर वायु द्वारा अभिव्यक्त जो वर्ण वह अनुनासिक कहलाता है, यह अक्षरार्थ स्वीकार कर लेने पर गतार्थ है। अनुनासिक सञ्ज्ञा विधायक सूत्र का फल मन्दों में हो सकता है, बुद्धिमान तो अक्षरार्थ से समझ लेगें अतः अनुनासिक सञ्ज्ञा विधायक सूत्र की आचार्यों ने पहले व्याख्या नहीं की "उपदेशेऽजनुनासिकइत्" इस सूत्र में उपदेश ग्रहणाभाव में अभ्र आं अपः यहाँ पर आँ की इत्संज्ञा होने लग जायगी। यद्यपि "उञः ऊँ" की तरह विधान सामर्थ्य से इत्संज्ञा नहीं होगी, यह कह सकते हैं, तथापि "हलन्त्यम्" इत्यादि में अनुवृत्ति के लिए उपदेश ग्रहण आवश्यक है। स्पष्ट ज्ञान के लिए यहाँ पर उपदेश ग्रहण किया गया है। अच् ग्रहणाभाव में

तथैवेति = तत्रवचनाभावादितिभावः। आवश्यकमिति। तत्र सञ्ज्ञाया अनुक्तेरिति-भावः। अतएव = मदुक्तयोगाश्रयणादेव। प्रत्याख्यानेति। मुखग्रहणप्रत्याख्यानञ्च प्रासादवासिन्यायेनेति बोध्यम्—तथाहि—केचित्प्रासादवासिनः केचिद्भूमिवासिनः केचिदुभयवासिनः। तत्र ये प्रासादवासिनः गृह्यन्ते ते प्रासादग्रहणेन। ये भूमिवासिनः, गृह्यन्ते ते भूमिवासिग्रहणेन। ये तूभयवासिनः, गृह्यन्ते ते प्रासादवासिग्रहणेन भूमिवासिग्रहणेन च। इति दृष्टान्तप्रदर्शनेन ये मुखवचनाः नासिकावचनाश्च वर्गान्त्याः ङञणनमास्ते नासिकावचनग्राह्या अपि भवन्ति। मुखग्रहणं प्रत्याख्यानाय तत्रपक्षे केवलं नासिका-वचनानां यमानुस्वाराणामनुनासिकसंज्ञामापाद्य नैव दोषो न प्रयोजनमिति भाष्येणेष्टा-पत्तिर्ध्वनिता।

फलैक्याय चारम्भपक्षेऽपि यमानुस्वाराणामनुनासिकसञ्ज्ञाऽवश्यमाश्रयणीया। सा च योगार्थपुरस्कारेणानुनासिकपदस्य बोधकता पक्षे सङ्गच्छते, सूत्रे तु अवयुत्यानुवादकम्।

नन्विदं सूत्रमारभ्यते तदा शब्दसञ्ज्ञेति निषेधात् "यरोऽनुनासिके" इत्यादौ स्वरूप-ग्रहणाभावो भवति। सूत्रानारम्भे तु स्वरूपग्रहणं प्राप्नोतीत्यत आह "यरोऽनुनासिके-इत्यादाविति।" हरतेर्दृतिनाथयोः पशौ—इत्यत्र पशुपदेन तस्यापत्यमित्यत्रचापत्यपदेन व्याख्यानान्न स्वरूपग्रहणमिति तद्भावः। मन्दप्रयोजनशब्दो न क्रियाविशेषणमन्दशब्द-विशिष्टः समानाधिकरणपदको बहुव्रीहिः, उक्तरीत्याप्रयोजनालाभात्। किन्तु "सप्तमी विशेषणे" इति ज्ञापकाद् व्यधिकरणपदक इत्याशयेनाह मन्देष्विति।

---

सुशर्मा इत्यादि में "अन्येभ्योऽपि दृश्यन्ते" इस सूत्र से विहित जो मनिन् प्रत्यय का मकार उसकी भी इत्संज्ञा हो जायगी। प्रातिशाख्य, शिक्षा तथा लोक में अन्वर्थ अनुनासिक व्यवहार होता है। "नासिकामभिहत्य वायुनाभिव्यञ्जितः। यह अनुनासिक का अन्वर्थ है, इसे स्वीकार करने पर ही, मुख ग्रहण प्रत्याख्यान भाष्यध्वनित जो यम और अनुस्वार को अनुनासिक व्यवहार, वह प्रत्या-ख्यानाभावपक्ष में यम और अनुस्वार को अनुनासिक व्यवहार होता है। अन्यथा फलैक्य में प्रत्या-ख्यान होता है, फल भेद में नहीं। यदि सूत्र सत्ता में यह अर्थ स्वीकार करें कि मुखसहितनासिका से उच्चार्यमाण वर्ण की अनुनासिक सञ्ज्ञा होती है तो यम और अनुस्वार की अनुनासिक सञ्ज्ञा नहीं होगी, फल भेद स्पष्ट है। अतः अन्वर्थ संज्ञा माननी चाहिये।

अनुनासिक संज्ञा विधायक सूत्र सत्ता में "यरोऽनुनासिके" इत्यादि में "अशब्द संज्ञा" यह निषेध होने से स्वरूप ग्रहण नहीं होगा, सञ्ज्ञाविधायक सूत्राभाव में तो "अनुनासिक" इस आनुपूर्वी का ग्रहण होगा। इस अरुचि पर शब्दरत्नकार लिखते हैं। "यरोऽनुनासिके" इत्यादि में स्वरूप ग्रहण नहीं होगा जैसे "हरतेर्दृतिनाथयोः पशौ" में पशु यह स्वरूप ग्रहण नहीं होता, अपितु अर्थ का ग्रहण होता है। इसी प्रकार 'तस्यापत्यम्' में अपत्यम् यह स्वरूप नहीं होता व्याख्यानात्, तथैव यहाँ भी स्वरूप ग्रहण नहीं होगा। अनुनासिक संज्ञा विधायक सूत्र का मन्दों में फल है, अर्थात् जो अन्वर्थ नहीं समझने व्यवहारप्रातिशाख्यादि से अनभिज्ञ हैं, उनके लिए प्रयोजक है। उपदेश ग्रहणाभाव में 'अभ्र आँ अपः' यहाँ पर आँ की इत्संज्ञा होने लगेगी. इसका उत्तर है "आङश्छन्दसि" यह कहना चाहिये अनुनासिक विधान सामर्थ्यात् इत्संज्ञा नहीं होगी।

नेत्वम्, का अभिप्राय है—इत्संज्ञा का फल लोप है उसका अभाव होने से इत्संज्ञा भी नहीं होती। "अभ्र आँ अपः" यहाँ पर "अनेकान्ता अनुबन्धाः" इस पक्ष में स्व समीप अनुबन्ध में स्व

प्रतिज्ञायते इति प्रतिज्ञा । "आतश्चोपसर्गे" ( पा० सू० ३।३।१०६ ) इति कर्मण्यङ् । प्रतिज्ञा आनुनासिक्यंयेषामिति विग्रहः । एवं च 'प्रतिज्ञासमाधिगम्ये प्रतिज्ञाशब्दस्य लक्षणा' इति क्लिष्टं व्याख्यानं नाश्रयणीयम् । "पाणिन्युपज्ञं व्याकरणम्' इत्यादिष्विव लक्षणां विनैव निर्वाहात् । यद्यपि सूत्रकारकृतोऽनुनासिकपाठ इदानीं परिभ्रष्टस्तथापि वृत्तिकारादिव्यवहारबलेन यथाकार्यं प्राक् स्थित इत्यनुमीयत इति भावः ।

---

ननु 'अञ्ज औँ अटितः' इत्यत्र "अनेकान्ता अनुबन्धाः" इति पक्षे "आदितश्च" [ पा० सू० ७।२।१६ ] इतीट्प्रतिषेधः फलम् । न च लोपाभावे इदितिमहासञ्ज्ञाकरणात्संज्ञाऽपि नेति वाच्यम् । महासञ्ज्ञयैव लोपसिद्ध्या "तस्य लोपः" [ पा० सू० १।३।९ ] इत्यस्य वैयर्थ्यापत्तेः "इक्" इत्यादौ ककारादिश्रवणानापत्तेश्च; इति चेन्न । "अनुबन्धानामेकान्तत्वमेव" इति मुख्यपक्षे दोषाभाव इत्याशयात् । तदा हि मुख्येऽवयविन्यन्यपदार्थे बहुव्रीहिः । न चायमाकारोऽट्धातोरवयव इत्यदोषात् । प्रतिज्ञेति । प्रतिज्ञानविषय इत्यर्थः ।

प्रतिज्ञाशब्दस्येति । भावाङन्तस्येत्यर्थः । क्लिष्टेति । शक्तिग्राहक व्याकरणसत्त्वाच्छक्त्यैव तदर्थबोधसम्भवे लक्षणाश्रयणं क्लेश इति भावः । लक्षणां विनैवेति । अत्र लक्षणया व्याख्यानं कुर्वताऽपि तत्र लक्षणां विना मधुकरीत्यैव व्याख्यातम् । एवं च पूर्वापरविरोधस्तस्येति भावः । न चोभयोर्विधानेऽपि लाघवाङ्गावे शक्तिः, कर्मणि लक्षणा, अनुशासनमपि लाक्षणिकार्थानुशासनमेवेति वाच्यम् । "लः कर्मणि" [ पा० सू० ३।४।६९ ] इत्यादीनामपि तथात्वापत्तौ 'तिङां कर्त्रादौ शक्तिः' इतिसिद्धान्तासङ्गत्यापत्तेः । व्याकरणस्याभियुक्तोक्तशक्तिग्राहकत्वस्य भङ्गापत्तेश्च ॥

---

सप्रयोजनमिति । परमकारुणिको भगवानाचार्यः—प्रकृतसञ्ज्ञां मन्दाधिकारिण उपलालयितुमुपक्रान्तवानितिशास्त्रवैयर्थ्यंशङ्कावकाश इति ।

इति पक्षे इति । इत्सञ्ज्ञकानाम्–अनेकान्ता अनुबन्धा इति पक्षे "स्वसमीपेऽनुबन्धे स्वनिरूपितावयवत्वारोपेण षष्ठीबहुव्रीहिस्वीकारादाकार इत्सञ्ज्ञकः समीपे यस्य इत्यर्थकेन" आदितश्चेति सूत्रेण इत्सञ्ज्ञकाकारस्य समीपे सत्त्वादट्धातोर्विहितस्य क्तस्येडागम-निषेध इति भावः । महासञ्ज्ञेति । एति गच्छतीति, अर्थात् प्रयोगे न तिष्ठतीति इदिति महासञ्ज्ञया लोप सिद्धावपि तस्य साधुत्वायसूत्रस्यावश्यकत्वमिति न वैयर्थ्यमित्यरुचेराह इक इतीति । मुख्य पक्षे इति । "उभयमिदमनुबन्धेषु, एकान्ता अनेकान्ता इति किमत्र न्याय्यम्, एकान्ता इत्येव" इति भाष्येण एकान्तपक्षस्यैवानुबन्धविषये मुख्यत्वबोधनादिति ।

---

निरूपित अवयवत्व का आरोप होने से "आदितश्च" इस सूत्र से इट् निषेधफल है, यदि यह आशङ्का की जाय कि लोप न करने पर 'इत्' [ एति = गच्छतीति इत्, अर्थात् जो हट जाये उसको इत् कहते हैं ] यह महासञ्ज्ञा होने के कारण 'इत्' सञ्ज्ञा भी नहीं होगी तो —यह नहीं कहना चाहिये क्योंकि महासञ्ज्ञा से ही लोप सिद्ध रहा "तस्य लोपः" यह सूत्र व्यर्थ हो जायगा "इक्" इत्यादि में ककारादि का श्रवण भी नहीं होगा । इसका समाधान करते हैं अनुबन्ध अवयव होता है इस मुख्य पक्ष में दोषाभाव है । अनेकान्तपक्ष में स्वसमीप अनुबन्ध में स्वनिरूपित अवयवत्व का आरोप करते हैं । अर्थात् सामीप्य में षष्ठ्यर्थत्व का बाध होने से "आदितश्च" इत्यादि में बहुव्रीहि नहीं प्राप्त है ।

प्रतिज्ञेति। प्रतिज्ञा चात्र—इदमेवम् इति बोधनरूपा न तु न्यायनिकायप्रसिद्धा न्याये तु साध्यवत्तया पक्षवचनं-प्रतिज्ञा यथा अयं वह्निमानिति। बोधनञ्च 'क्वचित्' अयमनुनासिकः 'इतिभाष्यकारादीनां साक्षात्कथनेन प्रत्ययः इत्यादिनिर्देशादिव्यवहारेण च, प्रतिज्ञानुनासिक्या 'इत्यत्र' प्रतिज्ञाशब्दः कर्मबोधकाङन्त इत्याशयेनाह प्रतिज्ञानेति। लक्षणेति। भावाङन्तपक्षे प्रतिज्ञाशब्दार्थस्य क्रियारूपत्वेन आनुनासिक्यस्य च गुणत्वेन सामानाधिकरण्यासम्भवात् प्रतिज्ञाशब्दस्य प्रतिज्ञा समधिगम्ये=प्रतिज्ञानप्रयोज्यज्ञानविषये लक्षणया सामानाधिकरण्येन बहुव्रीहिरिति तत्त्वम्।

मदुक्तेति। उपशब्दस्याद्यर्थकत्वाज्ज्ञाधातोश्चज्ञानार्थकत्वात् कर्मण्यङश्चविषयार्थकत्वात् पाणिनेरिति कर्तरिषष्ठ्या समासे पाणिनिकर्तृकाद्यविषयो व्याकरणम्। इत्येवं रूपेण शक्यार्थमादायैव व्याख्यातमितिभावः। असङ्गत्यापत्तेरिति। विरोधापत्तेरित्यर्थः।

व्याकरणस्येति।

> शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च।
> वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥

अभियुक्तोक्तेति। अभियुक्तत्वञ्च—सकलतन्त्रसिद्धान्तपरिज्ञानजन्यव्यहारप्रवर्तकत्वम्।

---

उसकी सिद्धि के लिए सामीप्यमूलकावयवत्व का आरोप करते हैं। एवञ्च आरोपितावयवषष्ठ्यर्थ में बहुव्रीहि है। एकान्तपक्ष में तो वास्तविकावयवत्वरूप षष्ठ्यर्थ में बहुव्रीहि है। अर्थात् अनेकान्तत्व पक्ष में समास करने को अर्थात् षष्ठ्यर्थ बहुव्रीहि करने को सामीप्य मूलक अध्यारोपित अवयवत्व लाना पड़ता है, अतः गौण है। एकान्त पक्ष में षष्ठ्यर्थ बहुव्रीहि करने को आरोप नहीं करना पड़ता अतः मुख्य है, मुख्य पक्ष में मुख्य अवयवी अन्य पदार्थ होने से "अत्र आँ अटितः" यहाँ पर दोष नहीं है। क्योंकि आकार अट् धातु का अवयव नहीं है।

इदमित्थम् कथन ही प्रतिज्ञा है। "आतश्चोपसर्गे" इस सूत्र से कर्म में अङ् प्रत्यय होने पर साधुत्व होता है। "प्रतिज्ञाविषयीभूतमानुनासिक्यं येषान्ते प्रतिज्ञानुनासिक्याः पाणिनीयाः।" अर्थात् पाणिनि प्रभृति प्रोक्त वर्णों का आनुनासिक्य प्रतिज्ञासमधिगम्य है। अतः भाव में अङ् प्रत्यय-करके प्रतिज्ञाशब्दकी प्रतिज्ञा समधिगम्य में लक्षणा करना ठीक नहीं। जैसे "पाणिन्युपज्ञं व्याकरणम्" यहाँ पर आद्यर्थक उपशब्द पूर्वक ज्ञाधातु से कर्म में अङ् प्रत्यय होने से इसका अभिप्राय होता है, पाणिनि कर्तृकाद्यज्ञानविषयीभूत व्याकरण, शक्यार्थ ग्रहण करके ही व्याख्यान किया गया है। उसी प्रकार कर्म में अङ् प्रत्यय करके प्रतिज्ञा शब्द का भी व्याख्यान हो जायगा।

यद्यपि सूत्रकार कृत अनुनासिक पाठ इस समय नष्ट हो गया तथापि वृत्तिकारादि के व्यवहार के बल से परिभ्रष्ट पाठ का अनुमान करेंगे कि यथा कार्यं प्राक् (कार्यानुसार पहले) सूत्रकार कृत अनुनासिक पाठ स्थित था। क्लिष्टता का अभिप्राय शब्दरत्नकार लिख रहे हैं। शक्ति बोधक व्याकरण होने से शक्ति से प्रतिज्ञार्थ बोधन सम्भव रहने पर लक्षणाश्रयण क्लेश है। प्रतिज्ञा शब्द में लक्षणा करते हैं, किन्तु "पाणिन्युपज्ञं व्याकरणम्" का शक्यार्थग्रहण करके व्याख्यान करते हैं, अतः लक्षणावादी के मत में पूर्वापर विरोध होगा। भाव कर्म में विधान करने पर भी लाघव होने से भाव में शक्ति है कर्म में लक्षणा है अनुशासनलाक्षणिकार्थ का ही अनुशासन करता है शक्यार्थ का अनुशासन नहीं। इसका समाधान यह है कि "लः कर्मणि च" इसमें लाक्षणिकार्थ

ननु रलयोरिति न्यूनम् । टकारस्यापि मध्यगतत्वादित्यत आह—प्रत्याहारेष्विति । व्यवह्रियन्ते इति । प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा यत्रेति बाहुलकादधिकरणे घञ् । यद्यपि योगमात्रमकारादिसञ्ज्ञास्वतिप्रसक्तं तथापि योगरूढिरिति भावः । प्रत्याहाराश्चैकचत्वारिंशदिति प्राञ्चः । चतुर्दशसूत्रीस्थैर्हल्भिरिद्भिः कृता अष्टाध्याय्यां व्यवहृता एकचत्वारिंशदिति तस्यार्थः । तेन सुप्तिङादीनां, रप्रत्याहारस्य, "चयो द्वितीया" इतिवार्तिकस्थचय्प्रत्याहारस्य चाधिक्येऽप्यदोषः ।

यत्तु "ञमन्ताड्डः" इति, "यमिर्ञमन्तेष्वनिडेक इष्यते" इति च ञम् वार्तिककृता व्यवहृत इत्याहुः, तद्भ्रमसाभिधानम् । आद्यस्योणादिसूत्रत्वात्, द्वितीयस्य व्याघ्रभूतिकारिकास्थत्वात्; इत्यास्तां तावत् । एष च सङ्ख्यानियमो नातीवोपयुज्यत इत्युपेक्षितः ।

---

टकारस्यापीति । अत्र यद्वक्तव्यं तदन्यत्रोक्तम् । बाहुलकादिति । भावघञन्तादर्शआद्यजित्यपि बाहुलकादविशिष्टमिति भावः । एकचत्वारिंशदिति ।

"एकस्मान् ङञणवटा, द्वाभ्यां ष, स्त्रिभ्य एव कणमाः स्युः ।
ज्ञेयौ चयौ चतुर्भ्यो, रः पञ्चभ्यः शलौ षड्भ्यः ॥

इति तदुक्तेरिति भावः ॥

---

अत्र रप्रत्याहारविषये । अन्यत्र बृहच्छब्दरत्ने लघुशब्देन्दुशेखरे वा । लण् सूत्रस्थाकारो यद्यनुनासिकः स्यात्तदा "अतोलरान्तस्येति" सूत्रे पाणिनिर्लकारन्नोच्चारयेत् रप्रत्याहारेणैव व्यवहरेत् । एवं यण्घटितसूत्रेषु = इको यणचीत्यादिसूत्रेषु लाघवाय यप्रत्याहारनिर्देशमेव कुर्यात् । तस्मादस्यानुनासिकत्वमप्रामाणिकम् इत्यादि तत्रोक्तम् । एकस्मादिति—ङञणवटा अनुबन्धवर्णा एकस्मादेवादिवर्णात्परे उच्चरिता एकैकमेव प्रत्याहारं जनयन्ति नानियमेनेत्यादिरर्थः । क्रमेणोदाहरणानि एङ्ग्रहणं यथा "एङः पदान्तादति" । यञ्ग्रहणं–यथा "अतोदीर्घोयञिति" अण्ग्रहणं यथा "ढ्रलोपे पूर्वस्यदीर्घोण इति" छव्ग्रहणं यथा–"नश्छव्यप्रशानिति" अट्ग्रहणं यथा "शश्छोटीति" । द्वाभ्यामादिवर्णाभ्यां परः षः जष्भष् इति द्वौ प्रत्याहारौ जनयति तद्यथा "एकाचोबशोभष्झषन्तस्यस्ध्वोर्"

---

अनुशासनत्वापत्ति होने से लिट् की कर्त्रादि में शक्ति है, यह सिद्धान्त असङ्गत हो जायगा । क्योंकि प्रयोगदशा में तिबादि का ही श्रवण होता है । अतः तिबादिनिष्ठ अर्थ बोधकता रूपाशक्तिप्रक्रिया निर्वाहार्थ तथा लाघवार्थ तिबादि स्थानित्वेन कल्पित लकार में आरोप करके कर्त्ता कर्म में लकार का विधान होता है यह असङ्गत हो जायगा । तथा आप्त पुरुष, जो, व्याकरण को शक्ति ग्राहक मानते है यह भी सिद्धान्त असङ्गत हो जायगा । अतः कर्म में अङ् प्रत्यय करना चाहिये ।

लण् सूत्रस्थ अवर्ण के साथ उच्चार्यमाण रेफ र ल का बोधक होता है, यह कहना न्यून है क्योंकि टकार भी मध्यगत है, यह कहो तो नहीं कह सकते, क्योंकि प्रत्याहार में इत्संज्ञक वर्णों का ग्रहण नहीं होता "अनुनासिकः" इत्यादि निर्देश से । जिसमें वर्णों का संक्षेप हो वह प्रत्याहार कहलाता है, प्रत्याहार शब्द में बाहुलकात् अधिकरण में घञ् प्रत्यय होता है ।" करणाधिकरणयोश्च से प्राप्त ल्युट् प्रत्यय का बाध होता है ।

रत्रोभयोरपि प्रत्याहारयोरेकत्रैव ग्रहणम् । त्रिभ्य आदिवर्णेभ्यः परः कः 'अक्, इक्, उक्,-प्रत्याहाराञ्जनयति । अक्ग्रहणं यथा "अकः सवर्णे दीर्घं इति", इक्ग्रहणं यथा "इको यणचीति" उक्ग्रहणं यथा "उगतिश्चेति" । त्रिभ्यः आदिवर्णेभ्यः परः णकारः, अण्इण्यण् प्रत्याहाराञ्जनयति । अण्ग्रहणं यथा "अणुदित्सवर्णस्य चाप्रत्ययः" इण् ग्रहणं यथा— "इणः षीध्वं लुङ्लिटोधोऽङ्गात्" इति, यण्ग्रहणं यथा "इकोयणचीति" त्रिभ्य आदिवर्णेभ्य परो मकारः अम्, यन्, ङम् प्रत्याहाराञ्जनयति । अम्ग्रहणं यथा "पुमः खय्यम् परे" इति, यम्ग्रहणं यथा, "हलोयमां यमि लोपः" इति ङम्ग्रहणं यथा "ङमो-ह्रस्वादचि ङमुण्नित्यमिति ।" चतुर्भ्यः आदिवर्णेभ्यः परश्चकारः अच्, इच्, एच्, ऐच् प्रत्यहाराञ्जनयति, अच्ग्रहणं यथा, अचोरहाभ्यां द्वे, इति । इच्ग्रहणं यथा "इजादेश्च गुरुमतोऽनृच्छः" इति, एच् ग्रहणं यवा "वृद्धिरेचीति" ऐचग्रहणं यथा "वृद्धिरादैजति ।"

चतुर्भ्यः आदिवर्णेभ्यः परः यः यय् मय् झय् खय् प्रत्याहारञ्चनयति, यय्-ग्रहणं यथा "अनुस्वारस्य ययि परसवर्णे इति । मय्ग्रहणं यथा, "मय उञोवोवा इति ।" झय् ग्रहणं यथा "झयो होन्यतरस्याम्" इति । खय्ग्रहणं यथा "पुमः खय्यम् परे" इति । पञ्चम्य आदिवर्णेभ्यः परः रेफः यर्, झर्, खर्, चर्, शर् प्रत्याहारञ्जनयति । यर्ग्रहणं-यथा" यरोऽनुनासिकेऽनुनासिको वा, इति । झर्ग्रहणं यथा "झरो झरि सवर्णे" इति खर्ग्रहणं यथा खरिचेति चर्ग्रहणं, यथा, "अभ्यासे चर्च" इति । शर्ग्रहणं यथा, "शरोऽचीति" षड्भ्यः आदिवर्णेभ्यः परः शः अश्, हश्, वश्, झश्, जश्,वश् प्रत्या-हाराञ्जनयति । 'अश्ग्रहणं यथा "भोभगाऽघोऽपूर्वस्य योऽशीति" हश्ग्रहणं यथा "हशि-चे"ति । वश्ग्रहणं यथा "नेड्वशिकृतीति", झल्ग्रहणं यथा 'झलां जश् झशीति' । जश्-ग्रहणं यथा झलां जश् झशीति । बश्ग्रहणं यथा 'एकाचो बशो भष् झषन्तस्यध्वोरिति ।'

षड्भ्यः आदिवर्णेभ्यः परो लोऽल् हल् वल् रल् झल् शल् प्रत्याहारञ्चनयति । अल्ग्रहणं यथा "अलोन्त्यस्येति", हल्ग्रहणं यथा "हलोऽनन्तराः", वल्ग्रहणं यथा "आर्ध-

---

यद्यपि अन्वर्थ सञ्ज्ञा मानने पर अकारादि भी प्रत्याहार कहलाने लगेंगे तथापि योगरूढि मानने पर दोषाभाव है । प्रत्याहार ४१ हैं, यह प्राचीन विद्वानों ने कहा है । उसका अभिप्राय है वर्णसामाम्नायस्थ इत्संज्ञक हल् से अष्टाध्यायी में व्यवहृत ४१ प्रत्याहार हैं तथा च सुप् प्रत्याहार, तिङ् प्रत्याहार र प्रत्याहार "चयोद्वितीयाः" इति वार्तिकस्थ चय् प्रत्याहार के अधिक रहने पर भी कोई दोष नहीं हैं । जो यह कहते हैं कि, वार्तिककार ने ञम् प्रत्याहार का भी व्यवहार किया है "ञमन्ताड्डः" "यमिर्ञमन्तेष्वनिडेकइष्यते" में उनका कहना उचित नहीं, क्योंकि प्रथम उणादि सूत्र है, द्वितीय व्याघ्रभूति कारिकास्थ है । संख्या नियम अत्यन्त उपयोगी नहीं है, यह मनोरमा-कार का अभिप्राय है ।

शब्दरत्नकार कहते हैं, र प्रत्याहार के विषय में जो कहना है वह अन्यत्र अर्थात् शब्देन्दुशेख-रादि में कह दिया गया है, बाहुलकात् कहने से यह भी शेष है कि प्रत्याहार शब्द में प्रति आङ् पूर्वक हृ धातु से भाव में घञ् प्रत्यय करके फिर आर्श आद्यच् होगा । एक आदि वर्ण से परे ङ्मण-

"ऊकालोऽज्झ्रस्वदीर्घप्लुतः" ( पा० सू० १।२।२७ ) ह्रस्वदीर्घप्लुत इति समाहारद्वन्द्वः। सौत्रं पुंस्त्वम्। वां काल इवेति ॥ फलितार्थकथनमिदम्। विग्रहस्तु वः कालो यस्येति बोध्यः। ऊशब्देन स्वोच्चारणकालो लक्ष्यते। आये इति। "निपाता आद्युदात्ता" ( फि० सू० १२ पा ४ ) इत्याकार उदात्तः। यच्छब्दस्तु फिट्सूत्रेण। अर्वाङ् इति। अकारोऽनुदात्तः।

---

सौत्रं पुंस्त्वमिति। यद्यपि इतरेतरयोगेऽपि सौत्रमेकवचनं वक्तुं शक्यं, तथापि "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इति तत्र तत्र वार्त्तिकोक्तेर्लिङ्गस्य लौकिकत्वात्तद्व्यत्ययकल्पनमेवोचितं, न तु शास्त्रीयवचनव्यत्ययकल्पनमिति भावः। फलितार्थेति। ऊपदेन स्वोच्चारणकालसदृशलक्षणया कालशब्देन समानाधिकरणबहुव्रीहौ तद् फलतीति भावः। वां काल इति तु न विग्रहो व्यधिकरणत्वादत आह—विग्रहस्त्विति। काल इति जात्याश्रयायामेकवचनम्। स्वोच्चारणकाल इति। स्वोच्चारणकालसदृश इत्यर्थः। सादृश्यमूलके कालयोरभेदाध्यवसाये तु यथाश्रुतमेव साधु।

---

धातुकस्येड्वलादेरिति"। रल्ग्रहणं यथा "रलो व्युपधाद्धलादेः संश्चेति।" झल्ग्रहणं यथा झलां जश् झशीति। शल्ग्रहणं यथा "शल इगुपधादनिटः" क्स इति। एवमेकचत्वारिंशत् संख्याकाः। सुवादिग्रहणे तु चतुश्चत्वारिंशत् प्रत्याहाराः सन्ति।

पुंस्त्वैकवचनयोरेकस्य सौत्रत्वाश्रयणं न विशेष इत्याशयेनाह—यद्यपीति। व्यत्ययकल्पनमिति। सौत्रत्वात् साक्षाच्छास्त्रबाधकल्पनापेक्षया लौकिकलिङ्गबाधकल्पनस्योचितत्वादितिभावः। सदृश इत्यर्थ इति। मूलकृता ऊपदस्य उकाराद्युच्चारणाधिकरणकाले लक्षणास्वीकारेऽपि तस्य कालपदेन सामानाधिकरण्यान्वयानुपपत्तिस्तदवस्थैवेति सदृशपर्यन्तं लक्षणाङ्गीक्रियते। अकाराद्युच्चारणाधिकरणकाले उकाराद्युच्चारणाधिकरणकाल सदृशत्वं सम्भवति इति न सामानाधिकरण्येनान्वयानुपपत्तिः। अभेदाध्यवसाये-देवदत्त सादृश्यत्वेऽदेवदत्तेऽपि "देवदत्तोऽयम्" इतिवत्भिन्नेऽपि काले मात्राकृतसाम्येनाभेदारोपे तु "स्वोच्चारणकालो लक्ष्यते" इति मूलोक्तमेव युक्तम् सादृश्यविशिष्टे लक्षणायानोपयोग इति भावः।

---

वट अनुबन्ध वर्णों से एक-एक प्रत्याहार बनता है। दो आदि वर्णों से पर में उच्चारित अनुबन्ध षकार से दो प्रत्याहार बनते हैं। तीन आदि वर्ण से पर में उच्चारित अनुबन्ध क ण म से तीन-तीन प्रत्याहार बनते हैं चार आदि वर्णों से पर उच्चारित अनुबन्ध च य से चार-चार प्रत्याहार बनते हैं। पाँच आदि वर्णों से पर में उच्चारित रेफ से पाँच प्रत्याहार बनते हैं। छः आदि वर्णों से पर में उच्चारित अनुबन्ध श ल से ६-६ प्रत्याहार बनते हैं यह प्रक्रियाकौमुदी में स्पष्ट है।

एक मात्रिक द्विमात्रिक त्रिमात्रिक उकार का समाहार द्वन्द्व करने पर "स नपुंसकम्" इससे नपुंसकलिङ्ग होना चाहिये, किन्तु सौत्रत्वात् पुंलिङ्ग हो गया। यद्यपि इतरेतर योग में भी सौत्रत्वात् एक वचन हो गया, यह कह सकते थे, तथापि लिङ्ग को लोकप्रसिद्ध होने से लिङ्ग शासनार्ह नहीं है। यह वार्तिककार ने स्थान-स्थान पर कहा है, अतः लिङ्ग लौकिक होने से उसके

तस्यादितः ( पा० सू० १।२।३२ )। अतन्त्रमिति। "उपेयिवान्" इत्यत्रोपसर्ग-इवाविवक्षितमित्यर्थः।

ननु तत्र "ईयिवांसमतिस्रिध" इत्यादिप्रयोगदर्शनादविवक्षाऽस्तु। इह त्वविवक्षाय. प्रमाणं किम्? इति चेल्लक्ष्यदर्शनं प्रातिशाख्यादिकं चेति गृहाण।

---

फिट्सूत्रेणेति। अन्तोदात्त इत्यर्थः। जसः सुप्त्वादनुदात्तत्वम्। "एकादेश उदात्तेन" [ पा० सू० ८।२।५ ] इत्येकार उदात्त इति भावः। अनुदात्त इति। फिट्स्वरेणान्तस्योदात्तत्वे शेषनिघातेनेति भावः। अभिमुखवाच्यव्युत्पन्नं प्रातिपदिकमर्वाङिति। अविवक्षितमित्यर्थं इति। इदं च वक्ष्यमाणं प्रातिशाख्यं यच्छाखायां, तच्छाखास्थवैदिकोदाहरणविषयम्।

---

अर्धंश्च तद्ध्रस्वमर्धह्रस्वमिति कर्मधारये ह्रस्वशब्दस्य सङ्केतविषयमात्राकालिका-उवर्णपरत्वेन लक्ष्यासम्भवः। ह्रस्वस्यार्धमित्येकदेशिसमासे च ह्रस्वस्वरिते एवाद्यखण्ड-स्योदात्तत्वमन्यत्र नेति लक्ष्यासिद्धिः। सूत्रे तस्येति षष्ठीनिर्देशानुपपत्तिश्चेति। तथाहि सति तत्रेति वक्तव्यम्! अर्थान्तरपरत्वं तु न युक्तं 'कृत्रिमाकृत्रिमन्यायविरोधादतोऽत्र ह्रस्व-ग्रहणमदृष्टार्थमित्याशयेनाह।' उपसर्ग इवाविवक्षितम्। इदञ्चेति। ह्रस्वग्रहणविवक्षया समांशोदात्तत्वबोधनमित्यर्थः। प्रातिशाख्यमिति। शाखां शाखां प्रति, प्रतिशाखम् प्रति-शाखमधिकृत्य कृतो ग्रन्थः प्रातिशाख्यम्। दिगादित्वाद्यत् वेदतरोः शाखाः, ऋग्वेदादय-स्तत्रत्यशब्दानां स्वरवर्णसंहिताध्ययनक्रमलक्षणादिनिरूपको ग्रन्थविशेषः शौनकादिप्रणीतः प्रातिशाख्यमित्युच्यते।

---

व्यत्यत्य होने की कल्पना उचित है, शास्त्र के व्यत्यय होने की कल्पना उचित नहीं। वां काल इव यह फलितार्थ कथन है, विग्रह तो 'वः कालो यस्य' यह होता है। उ यह शब्द होने से गुण है, काल द्रव्य है, गुण और द्रव्य का समानाधिकरण ( अभेद ) नहीं हो सकता, अतः उ शब्द को स्वोचारण काल सदृश में लक्षणा कर देने पर काल शब्द के साथ समानाधिकरण बहुव्रीहि होता है। वां काल यह विग्रह नहीं है। व्यधिकरण होने से, अतः मूलकारने कहा विग्रहस्तु वः कालो-यस्येति। कालः इसमें जात्याख्या में एक वचन है। स्वोच्चारकाल का अभिप्राय स्वोच्चारणकाल-सदृश में लक्षणा है। अथवा स्वोच्चारण काल में ही लक्षणा कीजिये। जैसे देवदत्त का सादृश्य रहने पर देवदत्तातिरिक्त में देवदत्तोऽयम् यह व्यवहार होता है। भिन्नकाल में भी मात्राकृत सादृश्येन अभेदारोप करने पर। स्वोच्चारण काल सादृश्य में लक्षणा की आवश्यकता नहीं। मूलोक्त स्वोच्चारण काल में लक्षणायुक्त है। इसी बात को शब्दरत्न में लिखा है सादृश्यमूलक कालों का अभेदारोप रहने पर तो यथाश्रुत ही साधु है।

"निपाता आद्युदात्ताः" इस सूत्र से 'आये' का आकार उदात्त होता है। फिट् स्वर विधायक "फिषोऽन्तः उदात्त" इस सूत्र से यच्छब्द अन्तोदात्त है। जस् सुप् है अतः "अनुदात्तौ सुप्पितौ" इससे अनुदात्त हो जायगा। "एकादेश उदात्तेनोदात्तः" इससे एकार उदात्त है। अर्वाङ् "फिषोऽन्त-उदात्तः" इससे अन्त उदात्त हो जाने पर "अनुदात्तपदमेकवर्जम्" इस सूत्र से शेष अर्थात् अकार अनुदात्त होता है। अभिमुखवाची अव्युत्पन्न प्रातिपादिक अर्वाङ् है। अर्वाङ् अभिमुखे" यह वेद भाष्य है।

तथा हि—येऽरा इत्यत्रैकारः, 'तनूनपात्' 'शचीपतिम्' इत्यत्र पदपाठे ऊदीतौ चार्थोदात्तौ इति सकलवह्वृच्प्रसिद्धम्। तनूनपाच्छचीपतिशब्दयोः "उभे वनस्पत्यादिषु युगपत्" इति पूर्वोत्तरपदयोराद्युदात्तत्वे कृते "अनुदात्तं पदमेकवर्जम्" (पा० सू० ६।१।१५८) इति शेषनिघातः। पूर्वपदभूतयोस्तनूशची एतयोरन्त्यस्य पाक्षिकं स्वरितत्वं प्रातिशाख्ये उक्तम्।

"जात्यवद्वा तथा वाऽन्तौ तनूशचीति पूर्वयोः" इति।

तथा स्वरितार्द्धस्योदात्तत्वे प्रातिशाख्यमपि—

एकाक्षरसमावेशे पूर्वयोः स्वरितः स्वरः।
तस्योदात्ततरोदात्तादर्धमात्राऽर्द्धमेव वा॥
अनुदात्तः परः शेषः, स उदात्तश्रुतिर्न चेत्।
उदात्तं वोच्यते किञ्चित्स्वरितं वाऽक्षरं परम्॥ इति।

---

तनूनपाच्छचीपतिशब्दयोरिति। अस्य यद्यपीत्यादिः शेषनिघात इति। अस्य तथापीतिशेषः। तेनोदीतौ अनुदात्तौ प्राप्नुत इति भावः। जात्यवद्वेति। पूर्वपदभूतयोस्तनूशचीशब्दयोरन्तौ जात्यवदिति।

अतोऽन्यत्स्वरितं स्वारं जात्यमाचक्षते पदे।

इति लक्षितो जात्यः। उदात्तस्वरितपूर्वस्वरितादन्य एकपदे स्थितः स्वरितो जात्य इति तदर्थः। तेन तुल्यं तद्वत्, अस्यान्त उदात्तश्रुतिक इत्यर्थः। तथा वा असंहितवद्वा—संहितवद्वेत्यर्थः।

पद्यादींस्तु द्व्युदात्तानामसंहितवदुत्तरान्।

इत्युत्तरमस्य पाठात्। असंहितवदित्यनेन केवलमनुदात्तत्वम्। संहितवदित्यनेनार्द्धानुदात्तस्वरितत्वमिति तद्भाष्ये स्पष्टम्। तथेति। लक्ष्यदर्शनवत्प्रातिशाख्यमपि प्रमाणमस्तीत्यर्थः।

---

आद्युदात्तत्वे कृते इति। वनस्पत्यादिगण एव उप्रत्ययान्तस्तनूशब्द आद्युदात्तो निपात्यते "नभ्राडिति" सूत्रे निपातितः "तत्पुरुषे तुल्य" इत्याद्युदात्तो नपाच्छब्दः, एतयोः समासे समासान्तोदात्तत्वे प्राप्ते "उभे वनस्पत्यादिषु युगपत्" इत्यनेन पूर्वोत्तरपदयोः प्रकृतिस्वरे सति द्वयोरप्याद्युदात्तत्वप्राप्तिरितिभावः। एवं शचीशब्दः शार्ङ्गरवादिङीनन्त्वादाद्युदात्तः। पदे = अखण्ड पदे। उपात्तेति। उदात्तश्चस्वरितश्चोदात्तस्वरितौ, उदात्तस्वरिताभ्यां पूर्वं उदात्तस्वरितपूर्वः, उदात्तस्वरितपूर्वश्चासौ स्वरितः, उदात्तस्वरितपूर्वस्वरितादन्यः। जात्य इति। स्वरान्तरसम्बन्धं विनैव जातो जात्या इति दिगादित्वाद्य-

---

यथा "उपेयिवाननाश्वाननूचानश्च" इस सूत्र में उप उपसर्ग की अविवक्षा करते हैं तथैव "तस्यादित उदात्तमर्धह्रस्वम्" इस सूत्र में भी ह्रस्व ग्रहण अविवक्षित है, यदि कहो कि "उपेयिवाननाश्वाननूचानश्च" इस सूत्र घटक उप की अविवक्षा में "ईयिवांसमतिस्रिधः" इत्यादि प्रयोग प्रमाण हैं। ह्रस्व की अविवक्षा में कुछ प्रमाण नहीं, यह नहीं, क्योंकि इसकी अविवक्षा में लक्ष्यदर्शन तथा प्रातिशाख्यादि प्रमाण हैं। पद पाठ में "येऽराः इसमें एकार, तनूनपात्" में ऊकार 'शचीपतिम्' में

अस्यार्थः—पूर्वयोरुदात्तत्वानुदात्तत्वयोरेकत्र समावेशे सति स्वरितो बोद्ध्यः। तस्य = स्वरितस्य, स्वतन्त्रोदात्तापेक्षयोदात्ततराऽर्द्धमात्रा बोद्ध्येति। "क्वोऽश्वाः" इत्यादि ह्रस्वाभिप्रायम्। "अर्द्धं वा" इति दीर्घाभिप्रायम्। अनेनैव ह्रस्वस्यापि सङ्ग्रहाद्व्यापकत्वादिदमेवादर्तव्यमिति सूचयितुमेवकारः। "अनुदात्त" इत्यादि परिशेषसिद्धार्थकथनम्। सः=शेषः, उदात्तश्रुतिः स्यात्। किमविशेषेण ? नेत्याह— न चेदित्यादि। उदात्तस्वरितपरं विहायेत्यर्थः। शाकल्योऽप्याह—

"अप्राकृतस्तु यः स्वारः स्वरितोदात्तपूर्वगः।
उदादायार्द्धमस्याथ शिष्टं निघ्नन्ति कम्पितम् ॥ इति।

स्वतन्त्रोदात्तापेक्षयेति। श्लोके "उदात्तात्" इति स्वतन्त्रोदात्तादित्यर्थकमिति भावः। एवकार इति। तच्छाखायां दीर्घादिष्वपि समांशोदात्तकस्वरितस्यैव पाठादिति भावः। एतेनैतौ पक्षौ वैकल्पिकावित्यपास्तम्। वाशब्दस्तु पादपूरणायेति बोद्धयम्। अप्राकृत-

तिसाधुः यथा क्व, स्वः इत्यत्र "तित्स्वरितम्" न्यङ्स्वरौ स्वरितौ "इति विहितं-स्वरितत्वं नहि स्वनिमित्तत्वेन" "उदात्तादनुदात्तस्य स्वरितः" इत्यादिवत्स्वरान्तरमपेक्षते। जात्यवद्भावस्य वैकल्पिकतया पक्षे वैकल्पिकं स्वरान्तरमाह तथावेति। पूर्वकारिकयाऽसंहितवत्स्वरस्य विधानात्, तथा शब्देनासंहितवदित्यस्य परामर्शस्तथा च जात्यवदसंहितवद्भावयोर्विकल्पेन विधानात्पक्षे संहितवद्भावस्यापि सिद्धया स्वरत्रयं लभ्यते।

द्व्युदात्तानामिति। उदात्तद्वयघटितपदसमुदायरूपाणाम्। समस्तपदविभागोऽ-

ईकार अर्धोदात्त होता है, यह सम्पूर्ण ऋग्वेदियों में प्रसिद्ध है। यद्यपि वनस्पतिगण में उक्त प्रत्ययान्त तनू शब्द को आद्युदात्त निपातन करते हैं। नपात् शब्द में "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः" इस सूत्र से आद्युदात्त होता है। इन दोनों का समास हो जाने पर समास को अन्तोदात्त प्राप्त रहता है, उसको बाधकर "उभे वनस्पत्यादिषु युगपत्" इस सूत्र से पूर्वोत्तर दोनों पदों को आद्युदात्त होगा। शची शब्द आद्युदात्त है, पति शब्द भी आद्युदात्त है, दोनों का समास होने पर "समासस्य" करके अन्तोदात्त प्राप्त रहेगा उसे "वनस्पत्यादिषु" करके पूर्वोत्तर दोनों पदों को आद्युदात्त होता है, तथापि प्रातिशाख्य में शेष को अनुदात्त प्राप्त होने पर पूर्वपद भूत तनू और शची के अन्त्य को स्वरित कहा है।

प्रातिशाख्य को मूलकार ने लिखा है। उसका अभिप्राय है पूर्वपदभूत तनू शची का अन्त्य जात्यवत् होता है विकल्प से, जात्येन तुल्यं जात्यवत् अर्थात् स्वरितवत् होता है। अभिनिहित, क्षैप्र, प्रश्लिष्ट ये स्वरित के अवान्तर्भेद हैं। स्वरित का आधा उदात्त होता है, इसको प्रातिशाख्य भी कहता है, प्रत्येक शाखा का आश्रयण करके जो ग्रन्थ बनाया गया हो, उसको प्रातिशाख्य कहते हैं। उदात्तत्व अनुदात्तत्व को एक में समावेश कर देने पर स्वरित स्वर होता है। स्वरित की स्वतन्त्रोदात्त की अपेक्षा अर्धमात्रा उदात्ततरा होती है यह "क्व वोऽश्वाः" इत्यादि के ह्रस्व स्वरित के अभिप्राय से कहा गया है। 'अर्धं वा' यह दीर्घस्वरित के अभिप्राय से कहा गया है। आधा उदात्त होता है, इस कथन को व्यापक होने से ह्रस्वस्वरित का भी संग्रह हो जायगा, इसका ही आदर करना चाहिये, इसको सूचित्त करने के लिए एवकार दिया गया। अवशिष्ट पर भाग अनुदात्त होता है। वह पद कहीं पर उदात्त होता है, क्या सर्वत्र उदात्त होता है ? नहीं, उदात्त

उदादाय = उदात्तं कृत्वा। अर्द्धह्रस्वशब्देनार्द्धमात्रा लक्ष्यते' इति हरदत्तादि-ग्रन्थास्तु मतान्तरपरतया कथंचिन्नेयाः। क्वेति। किमोऽत्। तित् स्वरितम्। व-इति। "अनुदात्तं सर्वमपादादौ" (पा० सू० ८।१।१८) इत्यधिकारादनुदात्तम्। अश्वा इति। अशेः क्वनि नित्स्वरेणाद्युदात्तम्। संहितायां तु "एकादेश उदात्तेनोदात्तः" (पा० सू० ८।२।२५) इत्योकार उदात्तः। ये अरा इति। द्वयमपि फिट्सूत्रेणान्तोदात्तम् एकादेशस्तु पक्षे स्वरितः। "स्वरितो वाऽनुदात्ते पदादौ" (पा० सू० ८।२।६) इत्युक्तेः।

---

इति। स्वरित इत्यर्थः। स्वार इति। स्वर एव स्वारः स्वार्थेऽण्। स्वरितोदात्ताभ्यां पूर्ववर्णग-इत्यर्थः। लक्ष्यते इति। तदुक्तं भाष्ये-"अर्द्धह्रस्वशब्दोऽर्द्धमात्रायां रूढः इति। हरिरप्याह-"प्रमाणमेव ह्रस्वादावनुपात्तं प्रतीयते" इति।

अनुपात्तमपि अर्द्धमात्रारूपं प्रमाणमेवोपलक्ष्यत इत्यर्थं तस्य हेलाराज आह। एवं च लोकेऽन्यशाखासु च दीर्घादिष्वप्यर्धमात्रैवोदात्तेति भावः। मतान्तरेति। प्रातिशाख्योक्त-मतापेक्षयेतरचेदलोकसाधारणमतान्तरेत्यर्थः। कथञ्चिदिति। लक्ष्यते इत्यंशपरमिदम्। भाष्यतोरूढिशक्तेरेव प्रतीतेरिति भावः। इत्युक्तेरिति। "नोदात्तस्वरितोदयम्" [पा० सू० ८।४।६७] इति निषेधस्तु "उदात्तादनुदात्तस्य" [पा० सू० ८।४।६६] इत्यस्यैव, "अनन्तरस्य" इति न्यायादिति भावः॥

---

वग्रहस्तद्विषयस्य पदद्वयघटितसमूहस्यार्द्धपूर्वमुत्तरञ्च पद्यमित्युच्यते। उत्तरान् पद्यादीन्-उत्तरार्द्धादीन्स्वरान्। असंहितवत् केवलोऽनुदात्तश्रुतिकाञ्जानीयात्। यथा अन्वेतवै 'अत्र' अनु इति 'निपाता आद्युदात्ताः' इत्याद्युदात्तः। 'एतवै' इति प्रत्ययस्वरेण मध्योदात्त, तथा चोदात्तद्वयघटितपदसमूहः 'अनु एतवै' इति अस्योत्तरं पद्यम् 'एतवै' इति तत्र एकारस्य पद्यादेः केवलानुदात्त श्रुतिकस्वरितत्वमितिभावः ननु लौकिकप्रयोगे, इतरशाखायाञ्च समांशोदात्तत्वं नास्तीति नियमानुपपत्तिरत आह तच्छाखायाम् = ऋक्शाखायाम्। एतेन =

---

अथवा स्वरित परे न हो तो। अभिप्राय हुआ मनोरमाकार का मत है, उदात्त अथवा स्वरित परे रहते अनुदात्त का श्रवण होता है, अन्यत्र उदात्त श्रुति होती है। शाकल्याचार्य ने भी कहा है। स्वरित और उदात्त से पूर्व अप्राकृत अर्थात् स्वरित विशेष स्वर आधा उदात्त होता है, उत्तर भाग अनुदात्त होता है। "उदात्तादनुदात्तस्य स्वरितः" इस सूत्र से विहित जो स्वरित है, वह प्राकृत स्वर कहलाता है। "उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य", "स्वरितोवानुदात्ते पदादौ, तित्स्वरितम्" इन सूत्रों से विहित जो स्वर है, वह अप्राकृत स्वर कहलाता है। अर्ध ह्रस्व शब्द से अर्धमात्रा प्रतीत होती है, यह हरदत्तादि ग्रन्थ मतान्तर का बोधक होने से किसी प्रकार लग सकता है।

"अर्धमात्राशब्दोर्धमात्रायांरूढः" यह भाष्य विरोध वारण करने को शब्दरत्नकार लिखते हैं "अविवक्षितम्" इत्यादि कथन वक्ष्यमाणप्रातिशाख्य जिस शाखा का है, तच्छाखास्थ विषयक है। "तनूनपाच्छचीपतिशब्दयोः" इसके आदि में यद्यपि अवशिष्ट है "शेषनिघातः" का अवशिष्ट तथापि है। तथा च शचीपति में ईकार को, तनूनपात् में ऊकार को "अनुदात्तपदमेकवर्जम्" करके अनुदात्त प्राप्त रहता है तथापि इत्यादि से उसका समाधान होता है। पूर्वपदभूत तनू और शची शब्द का अन्त ऊकार तथा ईकार जात्यवत् होता है, यह मनोरमाकार ने कहा। जात्यपदार्थ क्या है इसको शब्दरत्नकार स्पष्ट करते हैं, स्वरान्तरसम्बन्ध बिना ही जो स्वर होता है वह जात्य कह-

एवकारस्योक्तार्थसूचनफलकत्वेन । एतौपक्षौ = अर्द्धमात्रार्द्धमेववेति पक्षौ । अनुदात्त इति । स्वरितेपूर्वभागस्योदात्तत्वे सति परः शेष उत्तरभागोऽनुदात्तः प्रत्येतव्यः सः परः शेषः उदात्तश्रुतिः क्वचिद्भवति किं सर्वत्र एवम् नेत्याह न चेत्यादिना, उदात्तं स्वरितं वा किञ्चिदक्षरं परं नोच्यते चेदिति योजना ।

अप्राकृत इति । स्वरितो द्वेधा, अप्राकृतः प्राकृतश्च आद्यः "उदात्तस्वरितयोर्यणः" इति "स्वरितो वाऽनुदात्ते" इति, "तित्स्वरितम्" इतिसूत्रैर्विहितोऽप्राकृतः स्वरितः । द्वितीयः "उदात्तादनुदात्त" इति विहितः प्राकृतः स्वरितः । स्वरशब्दो न स्वरभक्तिपर- इत्याशयेनाह—स्वर एवेति । न च सौवर्यः सप्तम्यस्तदन्तसप्तम्य इत्यत्र यथा स्वर-

---

लाता है । जैसे क्व 'यहाँ' पर "तित्स्वरितम्" से स्वरित हुआ है, 'तित्स्वरितम्' से होने वाले स्वरित में "उदात्तादनुदात्तस्य स्वरितः" की तरह स्वरान्तर की अपेक्षा नहीं होती । अतः वह जात्य है । उदात्त अथवा स्वरित पूर्व में है जिसके, ऐसा जो स्वरित है उस स्वरित से भिन्न एकपद अर्थात् अखण्डपद में स्थित स्वरित जात्य कहलाता है । "तेन तुल्यं तद्वत्" अर्थात् जात्य के सदृश को जात्यवत् कहा जाता है । जात्यवत् का अन्त उदात्तश्रुतिक होता है ।

तथा वा का अभिप्राय हैं 'असंहितवत्' अर्थात् अनुदात्त । संहितवत् अर्धानुदात्तस्वरित विकल्प से होता है । दो विकल्प होने से तीन स्वर होते हैं । जात्यवत् अर्थात् स्वरित विशेष, असंहितवद्- भाव अर्थात् अनुदात्तत्व । संहितवद्भाव अर्थात् अर्धानुदात्तस्वरितत्व । अर्थात् पूर्वकारिका "पद्या- दींस्तु" इससे असंहितवत् का विधान हैं । 'पद्यादीन्' के उत्तर "जात्यवद्वा तथा वाऽन्तौ तनूश्चनौ पूर्वयोः ।" यह कारिका पढ़ी हुई है । तथा च तथा वा शब्द का भाव असंहितवद्वा यह हो जायगा । समस्त पद का जो विभाग वह अवग्रह कहलाता है । समस्त पद विभाग का विषय पदद्वय विशिष्ट समूह उसका आधा जो पूर्वभाग और उत्तरभाग वह पद्य कहलाता है । उदात्तद्वयघटित पद समु- दाय के उत्तर पद्य के आदि को अनुदात्तश्रुतिक समझो । जैसे 'अन्वेतवै' यहाँपर अनु "निपाता- आद्युदात्ताः" इससे आद्युदात्त है । 'एतवै' यह—प्रत्ययस्वर से अन्तोदात्त है एवम् उदात्तद्वय घटित पद समूह 'अनुएतवै' यह हैं इसके उत्तर पद्य हैं 'एतवै' यहाँपर एकार पद का आदि है, अतः उसको अनुदात्तश्रुतिक समझो ।

पद्यादींस्तु इसके उत्तर जात्यवद्वा इसका पाठ होने से तथा शब्द से, असंहितवत् का परामर्श हो जायगा । असंहितवत् का अभिप्राय होता हैं अनुदात्त और संहितवत् का अभिप्राय होता है, अर्द्धानुदात्तस्वरित । यह उसके भाष्य में स्पष्ट है । जिस तरह लक्ष्य दर्शन प्रमाण है, उसी प्रकार प्रातिशाख्य भी प्रमाण है ।

तस्योदात्तरोदात्तात् इसमें उदात्तात् यह स्वतन्त्रोदात्त इत्यर्थक हैं । अर्थात् स्वतन्त्रोदात्त की अपेक्षा उदात्ततरा अर्धमात्रा होती है । "एवकार इति" इस प्रतीक को देकर शब्दरत्नकार कहते हैं । जिस शाखा का यह प्रातिशाख्य हैं, उस शाखा में समभागोदात्तक स्वरित पाठ है, अतः वे परास्त हो गये, जो कहते थे कि अर्द्धमात्रा या अर्द्ध यह वैकल्पिक पक्ष है । वा शब्द पादपूरणार्थक है । अप्राकृत का अर्थ होता है स्वरित विशेष । स्वर को स्वार कहते हैं स्वार्थ में अण् प्रत्यय हुआ हैं । स्वरित या उदात्त से पूर्व वर्ण को होने वाला स्वर अप्राकृत कहलाता है । लक्ष्यते का अभिप्राय निम्नलिखित है, भाष्यकार ने लिखा है "अर्द्धह्रस्वशब्दोऽर्द्धमात्रायां रूढः" अर्थात् अर्धह्रस्व शब्द अर्धमात्रा में रुढि है । वाक्यपदीयकार ने कहा है—शब्दशक्ति से अप्रतिपाद्य रहने पर भी अर्धमात्रा

मुखं च नासिका चेति विग्रहे प्राण्यङ्गत्वादेकवद्भावे 'मुखनासिकम्' इति स्यादत आह—मुखसहितेति ॥

तुल्यास्य ( पा० सू० १।१।९ )। आस्ये भवमास्यं, "शरीरावयवाद्यत्"। इत्यभिप्रेत्याह–ताल्वादीति। आभ्यन्तरेति। एतच्च प्रशब्दबलाल्लभ्यते तुल्यास्यं-किम्। तर्प्ता। अत्र पकारस्य तकारे परे "झरो झरि" ( पा० सू० ८।४।६५ ) इति लोपो मा भूत्। प्रयत्नग्रहणं किम्। वाक् श्चोतति। शस्य लोपो न। ञमङणनानामिति। 'नासिका च' इति चकारेण स्वस्ववर्गानुकूलं ताल्वादि समुच्चीयते।

आस्यशब्देन कथं तदवयवताल्वादिग्रहणमत आह—आस्ये भवमिति। प्रशब्दबलादिति। प्रकृष्टो यत्नः प्रयत्नः प्रकर्षश्च वर्णोत्पत्त्यव्यवहितप्राक्कालिकत्वरूप इति भावः। चकारेणेति।

शब्दस्य द्वारादिगणे पाठेनैजागमो भवति तथात्रापि स्यादिति वाच्यम् स्वरशब्दो द्वेधा—अव्युत्पन्नो व्युत्पन्नश्च व्युत्पत्तिश्चास्य, स्वयं राजन्ते इति स्वराः। द्वारादिगणे स्वग्राम-स्वाध्याययोः पाठो नियमार्थः स्वशब्दादेश्चैदेतयोरेवेति। अन्यथा स्वशब्दस्य द्वारादिगणे पाठेन सिद्धे तद्वैयर्थ्यं स्पष्टमेव एवञ्च योऽव्युत्पन्नस्तस्य स्वार इति रूपम्। तेनार्थवत्स्व-शब्दघटितनियमेनैचः प्राप्त्यभाव इत्याशयात्। अनुपात्तम् = अर्द्धह्रस्वशब्दनिष्ठशक्त्य-प्रतिपाद्यम्।

यद्यप्यास्य शब्दस्यास्यन्दतेऽन्नम्प्राप्य द्रवीभवतीत्यर्थे "आङ्पूर्वात्स्यन्दतेः" "अन्येष्वपि दृश्यते" इति ड प्रत्यये कर्तरि सति मुखपरत्वं तथापि सर्वेषां तत्तुल्यमितितदुपादानवैयर्थ्यमत-आस्यभवताल्वादिस्थानपरत्वमित्याशयेनाह ताल्वादीति। प्राक्कालिकत्वरूप इति।

की अर्द्धह्रस्व संज्ञा होती है। अर्धह्रस्व अर्धमात्रा रूप प्रमाण का ही उपलक्षण है। तथाच लोक में अन्य शाखाओं में दीर्घादि में अर्धमात्रा ही उदात्त होती हैं। अर्धमेव वा 'यह प्रागुक्त' ऋक्प्रातिशाख्योक्त मत की अपेक्षा इस मत में लोक वेद उभय साधारणत्व होने से मुख्यत्व है। अर्धमात्रावोधक अर्धह्रस्व शब्द यदि बहुसम्मत है तो उसको कथञ्चित् क्यों कहा, तो उसका उत्तर देते हैं। लक्ष्यते यह कथञ्चित् नेय है। अर्थात् लक्षणा करना अयुक्त है। भाष्य से रूढि शक्ति की ही प्रतीति होती है। 'क्वोऽश्वाः' यहाँ पर साधन दशा में किम् शब्द से अत् प्रत्यय होता है "किमोऽत्" सूत्र से, "क्वाति" करके क्वादेश है 'तित्स्वरितम्' से स्वरित होता है 'अनुदात्तं सर्वमपादादौ' इसका "बहुवचनस्य वस्नसौ" इसमें अधिकार आने से वस् यह अनुदात्त हैं। अश् धातु से क्वन् प्रत्यय होता है। वह 'ञ्नित्यादेर्नित्यम्' से आद्युदात्त होता है। संहिता में 'एकादेश उदात्तेनोदात्तः' से ओकार उदात्त होता है 'येऽराः' यह पदद्वय फिट् सूत्र से अन्तोदात्त है। एकादेश तो पक्ष में स्वरित है "स्वरितो वाऽनुदात्तेपदादौ" इस सूत्र से। यदि कहो कि "नोदात्तस्वरितोदयमगार्ग्यकाश्यप गालवानाम्" इससे स्वरित का निषेध हो जायगा तो यह नहीं कह सकते क्योंकि 'अनन्तरस्य विधिर्भवति प्रतिषेधो वा' इस न्याय से "उदात्तादनुदात्तस्य स्वरितः" इसका बाधक होगा "स्वरितो-वाऽनुदात्तेपदादौ" इसका बाधक नहीं होगा।

"मुखं च नासिका च" इस तरह का विग्रह करने पर "प्राण्यङ्गत्वादेकवद्भाव" हो जाने पर मुख नासिकम् यह होगा। अतः यहाँ पर 'मुखसहितया नासिकया' यह मध्यम पद लोपी समास होता है। यहाँ पर नासिकाशब्दसमभिव्याहार से मुख शब्द मुखावयव ताल्वादि स्थान परक है।

"अनुस्वारोत्तमा अनुनासिकाः" इति तैत्तिरीयाणां प्रातिशाख्यम्। "यमानुस्वार-नासिक्यानां नासिका, अनुनासिकाश्चोत्तमाः" इति कात्यायनप्रातिशाख्यम्। "वर्गोत्तमा ञमङणना अनुनासिका भवन्ति, चशब्दात्स्वस्थानाद्यपरित्यागेन नासिकास्थानं द्वितीयमेषामित्यर्थः" इति तद्भाष्यं च। "एदैतोः" इत्यादौ तपरत्व-मसंदेहार्थं न तु तत्कालग्रहणार्थम्। तेन प्लुतस्यापि सङ्ग्रहः॥

अत्र यथा नासिकायाः स्थानत्वं, तथाऽन्यत्र निरूपितम्। न तु तत्कालेति। एषां शिक्षा-द्युक्तार्थानुवादत्वेनात्र शास्त्रप्रवृत्त्यभावादिति भावः।

आत्मा बुद्धया समेत्यर्थान्मनो युङ्क्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्।
सोदीर्णो मूर्ध्न्यभिहितो वक्त्रमापाद्य मारुतः।
वर्णाञ्जनयते तेषां विभागः पञ्चधा स्मृतः॥

आत्मा = अन्तःकरणं कर्तृभूतम्। सांख्यमतेनेदम्। वेदान्तिनये तु जीव एव कर्त्ता अनुभवनष्टेऽपि सूक्ष्मवासनारूपेण स्वस्मिन् समवस्थितान् = स्वगतान् घटपटादिरूपान्, पदार्थान्। बुद्धया = अन्तःकरणपरिणामविशेषरूपया स्ववृत्त्या समेत्य एकीकृत्य विवक्षया = स्वस्मिन् संस्काररूपेणस्थितपदार्थबोधनेच्छया मनः = अन्तःकरणपरिणामविशेषरूपम् मननात्मकव्यापारकारकम् युङ्क्ते = युक्तं करोति। मनः कायाग्नि = जठराग्नि ताडयति। सः कायाग्निः मारुतम् = प्राणाख्यवायुं प्रेरयति। सोदीर्ण इत्यत्र "सोऽचि लोपे चेत्पादपूरणम्" इति सूत्रेण सोर्लोपे "आद्गुण इति" गुणे। सः कायाग्निनाप्रेरितः। उदीर्णः = ऊर्ध्वं प्रवृत्तः। मारुतः वायुः मूर्ध्नि = शिरसि तालूर्ध्वभागे कपाले अभिहतः = अभिघाताख्यसंयोगाश्रयः सन् पुनः परावर्त्य वक्त्रम् = आस्यदेशम्, आस्यान्तर्गतानि

यहाँ पर मुख में होने वाले ताल्वादि स्थान, आस्य पदेन विवक्षित हैं, मुखवाचक आस्य शब्द से कैसे तदवयव ताल्वादि स्थान का ग्रहण होगा इस आशङ्का पर मनोरमाकार ने कहा। मुख वाचक आस्य शब्द से भव अर्थ में "शरीरावयवाद्यत्" इससे यत् प्रत्यय हो जानेपर भसंज्ञक अकार का लोप तथा "हलोयमां यमि" से यकार का लोप हो जाने पर आस्य शब्द का साधुत्व होता है। इसका अर्थ ताल्वादि स्थान होगा।

प्रयत्नपदेन आभ्यन्तर प्रयत्न लिया जाता है, क्योंकि प्रकृष्ट यत्न को प्रयत्न कहते हैं, आभ्यन्तर में "वर्णोत्पत्त्यव्यवहितप्राक्कालिकत्वरूपप्रकर्षत्व रहता है। जिस यत्न में गलविवरादि का विकासादि होता है उसको बाह्य कहते हैं। जैसे सभा सञ्चालन के पूर्व परिचारक लोग व्यवस्था करते हैं, पर सञ्चालन होने पर अन्तरङ्ग लोग रहते हैं, परिचारकादि बहिरङ्ग हट जाते हैं। इसी प्रकार यहाँ पर भी यद्यपि गलविवर का विकासादि पहले होता है तथापि वर्णाभिव्यक्ति के अव्य-वहित पूर्व नहीं, अतः बाह्यप्रयत्न कहलाता है। तुल्यास्यग्रहणाभाव में 'तप्तां' यहाँ पर तकार परे रहते पकार का लोप हो जायगा "झरोझरि सवर्णे" से'। तुल्यास्य ग्रहण करने पर सवर्ण झर् परत्वाभाव होने से लोप नहीं होगा प्रयत्नग्रहणाभाव में वाक्श्चोतति यहाँ पर" "झरो झरि सवर्णे" इससे चकार परे रहते शकार का लोप हो जायगा प्रयत्न ग्रहण करने पर सवर्ण झर् परत्वाभाव होने से लोप नहीं होता।

"पूर्वत्रासिद्धम्" ( पा० सू० ८।२।१ ) ॥ यद्ययं स्वतन्त्रो विधिः स्यात्, तर्हि त्रिपादी पूर्वं प्रत्यसिद्धा' इत्येव लभ्येत, त्रैपादिकं तु पूर्वं प्रति परं नासिद्धं स्यादत

---

नासिद्धं स्यादिति। ततश्च गोधुङ्मानित्यादौ घत्वजश्त्वानुनासिकेषु भष्भावो न स्यात्। न चातिदेशान्तरवदस्यापि त्रिपाद्यां प्रवृत्तौ न दोषः। सपादसप्ताध्यायामपि पूर्वं प्रति परासिद्धत्वापत्तेः। मध्ये पाठस्य विप्रतिषेधसूत्रस्य च सामर्थ्याश्रयणे तु विनिगमना-

---

ताल्वादिस्थानानि आपाद्य = प्राप्य वर्णान् = अकारादिवर्णान्। जनयते = उत्पादयति। अयं भावः। शब्दप्रयोगेच्छयोत्पन्नयत्नान्नाभिप्रदेशात्प्रेरितो वायुर्वेगान्मूर्द्धपर्यन्तं गतस्ततः-प्रतिनिवृत्तो यत्नविशेषसहायेन तत्तत्स्थानेषु जिह्वाग्रादिस्पर्शपूर्वकं तत्तत्स्थानान्याहत्य, वर्णानभिव्यनक्ति। ततो यत्नविशेषेण परावृत्तिसमये गलविवरादीनां विकासादीन् करोति। तत्र ये तत्तत्स्थानाभिघातकयत्नास्ते आस्यान्तर्गततत्तत्कार्यकारित्वात् आस्ये प्रयत्ना-इत्युच्यन्ते आभ्यन्तरा इति च। गलविवरादिविकासादिकराश्चास्यबहिर्भूतदेशे कार्य-करत्वाद् बाह्या इति।

यत्तु नासिका न स्थानं किन्तु करणमिति मतन्तन्नयुक्तम् अस्यन्त्यनेन वर्णान् इति भाष्यात् कण्ठादीनामपिकरणत्वप्रतीतेः। स्थानव्यवहारस्तु वर्णाभिव्यक्तिजनकवायुसंयोगा-धारत्वाद्वर्णाधारत्वारोपेण। एवञ्च ञकारादीनां नासिक्यव्यवहारस्य प्रातिशाख्यशिक्षादौ दर्शनेन नासिकायाम्भवा इत्यर्थकरणेन "नासिक्याः ञमङणनाः" इति व्याख्यातृवचनेन च नासिकापि स्थानमित्याशयेनाह—अत्रयथेति। शिक्षेति = "एऐ तु कण्ठतालव्यौ ओ औ कण्ठोष्ठजौ स्मृतौ"। इति पाणिनीयशिक्षेत्यर्थः। तव तपरत्वाभावेन प्लुतानामपि सङ्ग्रहा-दत्र तपरसूत्रस्यप्रवृत्तावनुवादभङ्गापत्तिरतस्तदप्रवृत्तिः। शिक्षाद्युक्तार्थानुवादत्वेनेति—अत्रादिपदेन लोकानुभवपरिग्रहः।

स्वतन्त्र इति। अधिकारत्वासंवलितोऽतिदेशविधिरेवेत्यर्थः त्रैपादिकस्यपरस्य पूर्व-दृष्ट्या सिद्धत्वाभावे दोषमाह ततश्च। गोधुङ्मानीति। गोदुहोऽस्य सन्तीति विग्रहे मतु-प्प्रत्यये "दादेर्धातोर्घः" इति घत्वे जश्त्वस्यासिद्धत्वादेकाचोबशोभषझषन्तस्यस्ध्वोरिति-

---

'ञमङणन' इनका नासिका स्थान तथा स्वस्ववर्गानुकूल ताल्वादिस्थान भी होता है। क्योंकि "नासिका च" यहाँपर चकार से स्वस्ववर्गानुकूल ताल्वादिस्थान का समुच्चय होता है। इसको तैत्तिरीयप्रातिशाख्यकार कात्यायनप्रातिशाख्यकार, कात्यायनप्रातिशाख्यभाष्यकार स्वीकार करते हैं। अनुस्वार, ञ म ङ ण न इनको अनुनासिक कहते हैं, तैत्तिरीयप्रातिशाख्यकार। यम अनुस्वार ञ म ङ ण न का नासिका स्थान होता है। 'अनुनासिकाश्चोत्तमाः' यह कात्यायन प्रातिशाख्य है। वर्गोत्तम अर्थात् ञ, म, ङ, ण न, ये अनुनासिक होते हैं, च शब्द से स्वस्वस्थान का परित्याग न करते हुए इनका द्वितीय नासिका स्थान होता है, यह उसके भाष्य में वर्णित है। एत, ऐत, में तपकरण असन्देहार्थ है, तत्समकाल ग्रहणार्थ नहीं। इसका अभिप्राय यह है कि 'एदैतोः' इत्यादि शिक्षा में जो उक्त है, उसका अनुवादक होने से तपरस्तत्कालस्य शास्त्र की प्रवृत्ति नहीं होगी। अतः प्लुत का भी ग्रहण होगा।

पूर्वत्रासिद्धम् अधिकार सूत्र है या स्वतन्त्रविधि। स्वतन्त्रविधि मानने पर अर्थ होगा, त्रिपादी शास्त्र पूर्व के प्रति असिद्ध होते हैं अर्थात् सपादसप्ताध्यायीस्थशास्त्र की दृष्टि से त्रिपादीस्थशास्त्र

आह—अधिकारोऽयमिति । यद्यत्र कार्यासिद्धत्वमिष्येत तर्हि पूर्वत्रासिद्धमिति 'मनोरथः' इत्यादावुत्वं न स्यात् । परत्वाद् "रो रि" (पा० सू० ८।३।१४) इत्यस्य प्रसङ्गात् ।

विरहात्त्रिपाद्यामप्यप्रवृत्त्यापत्तिरिति भावः । रो रीत्यस्य प्रसङ्गादिति । सिद्धऽसिद्धत्वारोपात् सूत्रोदाहरणसम्पत्त्यै परत्वाल्लक्ष्ये कार्यप्रवृत्तेरावश्यकतया परत्वात् त्रपादिके कार्ये जाते तत्राभावप्रतियोगित्वारोपेऽपि 'देवदत्तहन्तृहत'न्यायेन स्थानिभूतरोरभावाद् "हशि च" [पा० सू० ६।१।११४] इत्यस्याप्राप्तिरिति भावः । स्पष्टं चेदं प्रकृतसूत्रे "अचः परस्मिन्" [पा० सू० १।१।५७] इत्यत्र "पत्वतुकोः" [पा० सू० ६।१।८६] इत्यत्र च भाष्ये ।

भष्भावे ततो जश्त्वेन गकारे "प्रत्ययभाषायां नित्य"मिति वचनेन ङकारे गोधुङ्मानिति भवति । घत्वे कृते जश्त्वानुनासिकभष्भावेषु प्राप्तेषु भष्भावो न स्यादिति भावः । नन्वत्र कृतेषु इति प्राप्तेषु इति वा शेषः नाद्यः एषु कृतेषु सर्वथा भाष्भावाप्राप्त्या भष्भावाना-पत्तेरिति मूलासङ्गतेः । नान्त्यः घत्वं विनानुनासिकाप्राप्त्या एषु प्राप्तेष्वित्यस्यासङ्गत्या-पत्तेरिति चेन्न निर्धारणसप्तम्या घत्वजश्त्वानुनासिकेषु घत्वे कृते जश्त्वानुनासिकभष्भावेषु प्राप्तेषु जश्त्वापवादत्वात्प्राप्तस्यापि भष्भावस्य परत्वान्नित्यत्वाच्चानुनासिकत्वे भष्भावो-न स्यादित्याशयात् । अधिकारत्वे तु घत्वानन्तरं जश्त्वानुनासिकयोरसिद्धत्वाद्भष्भावेनेष्ट-सिद्धिः ।

वस्तुतस्त्वत्राधिकारत्वाभावेऽप्यपवादत्वेन जश्त्वम्, अन्तरङ्गत्वेनानुनासिकत्वञ्च बाधित्वा भष्भावेनेष्टसिद्धिरिति घत्वे कृते "झयः" इति वत्वापत्तिर्दोषो बोध्यः । एतेन घत्वे कृते भष् भावोऽपवादत्वाज्जश्त्वम्, भष्भावश्च परत्वान्नित्यत्वादनुनासिकत्वम्, अनु-नासिकत्वञ्चान्तरङ्गत्वाज्जश्त्वम् जश्त्वञ्चापवादत्वाद्भष्भावो बाधते, इत्येवं रीत्या चक्रकापत्तिरित्यपास्तम्, अनुनासिकापेक्षयान्तरङ्गत्वेन भाष्भावप्रवृत्या चक्रकाभावात् । उक्तरीत्या भष्भावे कृतेऽनुनासिकापक्षयान्तरङ्गत्वात्प्राप्तं जश्त्वं निरवकाशतया प्रतिपद-विधित्वेन च बाधित्वा झय इति वत्वं स्यादिति तद्व्यावृत्तयेऽधिकारत्वं स्वीकार्यम् ।

न च "तसौ मत्वर्थे" इति भत्वविषये 'तडित्वान्' इत्यादौ चारितार्थ्यादुक्तरीत्या

असिद्ध होते हैं । त्रिपादियों में भी पूर्वशास्त्र के प्रति परशास्त्र असिद्ध होता है, इस अर्थ का लाभ नहीं होगा, तथा च "गां दोग्धीति गोधुक्, 'गोदोहोऽस्मिन्नि'ति 'गोधुङ्मान्, यहाँ पर गोदुह् मत् इस स्थिति में "दादेर्धातोर्घः" इससे घकार हो जाने पर जश्त्व अनुनासिक हो जाने से भष् भाव नहीं होगा, अनिष्ट प्रयोग बनने लगेगा । अतः इसको अधिकार सूत्र मानते हैं ।

अधिकार मानने पर अर्थ होगा त्रिपादीशास्त्रों में भी पूर्वशास्त्र के प्रति परशास्त्र असिद्ध होता है । तथा च "दादेर्धातोर्घः" ८।२।३२ से घत्व हो जाने पर "एकाचो बशो भष्झषन्तस्य स्ध्वोः ८।२।३७ इससे भष् भाव हो जाने पर "झलां जशोऽन्ते ८।२।३९ से जश्त्व हो जानेपर "यरोऽनु-नासिकेऽनुनासिको वा ८।४।४५ से अनुनासिक हो जाने पर इष्टरूप का साधुत्व होता है, अतः यह अधिकारशास्त्र है । 'पूर्वत्रासिद्धम्' यह वत्यर्थ घटित होने से अतिदेश शास्त्र है, तथा च "स्थानिवदादेशानल्विधौ" इस अतिदेशशास्त्र की तरह "पूर्वत्रासिद्धम्" इसकी भी त्रिपादी में प्रवृत्ति हो जायगी ।

तथा च "पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य" इति सिद्धान्तो-व्याकुप्येत। अमू, अमी, इत्यादि च न सिध्येदत आह—त्रिपादीति। परं शास्त्र-मिति च। एतेन त्रिपाद्यां विहितं कार्यमसिद्धमित्यादिः प्राचां ग्रन्थः परास्तः।

तथा चेति। शास्त्रस्य तद्बोध्यकार्यस्य च शास्त्रजज्ञानवेलायामसिद्धत्वाभावे "रो रि" [पा० सू० ८।३।१४] इत्यादेः प्रसङ्गे चेत्यर्थः। व्याकुप्येतेति। त्वया विप्रतिषेधशास्त्रप्रवृत्तौ जश्त्वानुनासिकयोरिष्टसिद्धिः। एवमपि "झयः" इति प्रत्याहाराश्रयणस्य वैयर्थ्येनजश्त्वा-पवादत्वस्य सुवचत्वेनोक्तदोषतादवस्थ्यात्। अधिकारत्वे घत्वस्यासिद्धतया वत्वाप्राप्त्या-जश्त्वापवादत्वादनुनासिकत्वस्यासिद्धत्वाच्च भभावेऽनुनासिकत्वस्यासिद्धत्वाज्जश्त्वे ततोऽ-नुनासिकत्वे च रूपसिद्धिरिति न दोषः।

अतिदेशान्तरवदिति। स्थानिवत्सूत्रवदित्यर्थः। वत्यर्थघटितत्वेनातिदेशत्वम्। न च वतिघटितस्यैवातिदेशत्वेन "अतिदेशान्तरवदित्युक्तिरसङ्गता अन्तरेणापि वतिमतिदेशो गम्यते तद्यथा एष ब्रह्मदत्तः, अब्रह्मदत्तं ब्रह्मदत्त इत्याह तेन मन्यामहे, ब्रह्मदत्तवदयमिति संख्या सूत्रस्थभाष्यबलादिति।

एतच्च सूत्रमात्मानं विहाय सूत्रान्तराणामसिद्धत्वं बोधयति, बोधकस्य बोध्यत्वाभा-वात्। एतस्यासिद्धत्वे सर्वेषां सिद्धत्वात् सूत्रारम्भस्यैवानर्थक्यप्रसङ्गः, यथा, 'सर्वं मिथ्या ब्रवीमि' इति वाक्यम् वाक्यान्तराणामेव मिथ्यात्वं प्रतिपादयति। स्वस्यापि मिथ्यात्वे वाक्यान्तराणां मिथ्यात्वंन स्यादित्यनर्थकमेतद्वाक्यं स्यादिति कैयटे स्पष्टम्। यद्ययं-परिभाषा स्यात् सर्वस्यामष्टाध्यायाम् पूर्वं प्रत्युत्तरमसिद्धं स्यात्। ततश्च "अतोभिस् ऐस्" इत्यत्र त्यदाद्यत्वस्यासिद्धत्वात् तैः, यैः, इत्यत्रैस्भावो न स्यादिति भावः। एवञ्चेष्टासिद्ध्या नास्यातिदेशशास्त्रत्वम् नापि परिभाषाशास्त्रत्वम्, नापि स्वतन्त्रविधित्वं मूलोक्तदोषात्। किन्त्वधिकारसूत्रत्वमेवेति भावः।

रोरि इत्यस्य प्रसङ्गादिति। मूलमसङ्गतम् रलोपोत्वयोः प्राप्तौरलोपस्यासिद्धत्वेनोत्वे मनोरथसिद्धेर्निष्प्रत्यूहत्वादतो मूलाशयम्प्रकटयति सिद्ध इत्यादिना।

अधिकार न माने तब भी कोई दोष नहीं, इस प्रश्न का समाधान यह है कि, अतिदेशान्तर की तरह इसकी प्रवृत्ति होने पर सपादसप्ताध्यायी में भी पूर्वशास्त्र के प्रति पर शास्त्र असिद्ध होने लग जायगा यदि कहो कि "पूर्वत्रासिद्धम्" इस सूत्र का मध्य में पाठ हैं तत्सामर्थ्य से कल्पना करेंगे कि इसकी सपादसप्ताध्यायी में प्रवृत्ति नहीं होती, अथवा यदि "पूर्वत्रासिद्धम्" यह सूत्र सपाद-सप्ताध्यायी में लगने लग जाय तो पूर्वशास्त्र की दृष्टि में परशास्त्र असिद्ध हो जायगा "विप्रतिषेधेपरं-कार्यम्" यह सूत्र व्यर्थ हो जायगा तत्सामर्थ्य से यह कल्पना करेंगे कि "पूर्वत्रासिद्धम्" इस सूत्र की सपादसप्ताध्यायी में प्रवृत्ति नहीं होती।

किन्तु यह नहीं कह सकते 'एकत्रपक्षपातिनीयुक्तिरूपा' विनिगमना का अभाव होने से। जिस प्रकार सपादसप्ताध्यायी में अप्रवृत्ति होती है उसी प्रकार त्रिपादी में भी होने लग जायगी, अतः यह सूत्र अतिदेश नहीं है और न स्वतन्त्र विधि है, और न परिभाषा। क्योंकि परिभाषा मानने पर इसकी सपादसप्ताध्यायी में प्रवृत्ति होने लगेगी। तथा च सपादसप्ताध्यायी में भी पूर्व के प्रति पर असिद्ध होने लग जायगा। अतः यह अधिकार सूत्र माना जाता है।

निमित्तस्य त्रैपादिकस्य शास्त्रजबोधविषयकार्यस्य, शास्त्रस्य वाऽसिद्धता वक्तुमशक्या, किंतु लक्ष्ये जातस्य तस्य प्रवर्तमानसपादसप्ताध्यायीस्थकार्यदृष्ट्याऽसिद्धत्वं वाच्यम्। एवंच विप्रतिषेधाभावोपपादकहेतोरसिद्धिरिति भावः। न च ममापि पूर्वपरपदयोः पूर्वपरशास्त्रजन्यबोधविषयकार्यलक्षणया शास्त्रे एव कार्यासिद्धत्वमिति वाच्यम्। लक्षणायां मानाभावात्, फलाभावात्, गौरवाच्च।

ननु मनोरथे दर्शनाभावरूपे लोपेऽभावारोपस्य दर्शनारोपरूपत्वेन न दोषोऽभावाभावस्य प्रतियोगिरूपत्वादित्यत आह—अमू इत्यादि। अद् अ औ, अद् अ अस्, इत्यवस्थायां जातस्योत्वस्य सपादसप्ताध्यायीस्थकार्यदृष्ट्याऽसिद्धत्वेऽपि पूर्वरीत्याऽकाराभावेनपररूपाद्यनापत्तिः। मुत्वस्यासिद्धत्वनिषेधसामर्थ्यादेतद्विषये उक्तन्यायाप्रवृत्तिरिति चेत्? तेन

देवदत्तहन्तृहतन्यायेनेति। देवदत्तस्य वधकर्तरि वधेऽपि देवदत्तस्य दर्शनन्न तद्वदत्रापि देवदत्तस्थानीयस्य रोर्हननसदृशलोपसम्पादकं "रोरि" इति शास्त्रन्तस्यप्रवृत्तिरेव हननंतत्कृते रोर्दर्शनाभावेन "हशिचेत्युत्वन्नस्यादिति भावः इति "षत्वतुकोरसिद्धः" ६।१।८६ सूत्रभाष्येस्पष्टन्तन्नहि।

असिद्धवचनात्सिद्धम्, असिद्धवचनात्सिद्धमिति चेत्तन्न "किंकारणम् 'नान्यस्यासिद्धवचनादन्यस्य' भावः। न ह्यन्यस्यासिद्धवचनादन्यस्य प्रादुर्भावोभवति। नहि देवदत्तस्यहन्तरि हते देवदत्तस्य प्रादुर्भावो भवतीति। सिद्धान्तव्याकोपमुपपादयतिशास्त्रेत्यादिना। अधुनाशास्त्रासिद्धत्वपक्षाभावेऽपि शास्त्रस्येत्यस्य कथनं दृष्टान्तार्थम्। शास्त्रजज्ञानवेलायामिति। त्रैपादिकशास्त्रजन्यवाक्यार्थज्ञानसमये इत्यर्थः। लक्षणयेति। शास्त्रे इत्यस्य कार्ये स्वजन्यबोधविषयतासम्बन्धेन लक्षणाकृते शास्त्रे एव कार्यासिद्धत्वमितिभावः। मानाभावादिति। ननु अभावादुत्तरस्येति भाष्यमेव मानमतआह फलाभावादिति पररूपाद्यनापत्तिरिति। ननु अमु अ औ इत्यवस्थायां मुत्वस्यासिद्धत्वेन पररूपस्य प्राप्तिरस्ति इति पर-

"पूर्वत्रासिद्धम्" यह कार्यासिद्ध करता है या शास्त्रासिद्ध, यदि कार्यासिद्धत्व स्वीकार करते हैं, तो 'मनोरथः' इत्यादि में उत्व नहीं होगा, क्योंकि उत्वविधायक शास्त्र "हशि च" से 'रोरि' पर है अतः परत्वात "रोरि" इसकी प्रवृत्ति हो जायगी। कार्यासिद्धत्वपक्ष में, यदि यह कहो कि रेफ लोप, और उत्व प्राप्त रहा, रेफ लोप असिद्ध हो जाने से, उत्व हो जाने पर मनोरथः सिद्ध हो जायगा तो यह नहीं कह सकते, क्योंकि सिद्ध में असिद्धत्व का आरोपण होने से "पूर्वत्रासिद्धम्" इसका उदाहरण बनाने के लिए परत्वात लक्ष्य ( मनोरथः ) में कार्य की प्रवृत्ति आवश्यक है अर्थात रोरि से लोपरूप कार्य करना आवश्यक है, अतः त्रैपादिककार्य अर्थात "रोरि" से लोप हो जाने पर "दर्शनाभाव" का प्रतियोगी दर्शन का आरोप करने पर जैसे देवदत्त के हन्ता को मार डालने पर देवदत्त का जीवन नहीं होता, उसी प्रकार यहाँ पर देवदत्त स्थानी रु का हनन सदृश लोप संम्पादक "रोरि" की प्रवृत्ति हो जाने पर रु का दर्शन नहीं होगा।

यह पूर्वत्रासिद्धम् "अचः परस्मिन्" "षत्वतुकोरसिद्धः" ६।१।८६ इन सूत्रों के भाष्य में स्पष्ट हैं। एवञ्च त्रिपादी में पर कार्य नहीं होता पूर्व की दृष्टि में पर असिद्ध होने से, यह जो सिद्धान्त है इस सिद्धान्त का भी हनन होगा। इसका शब्दरत्नकार उपपादान करते हैं। त्रैपादिकशास्त्रजन्यवाक्यार्थ समय में त्रैपादिक शास्त्र तथा त्रैपादिक बोध्य कार्य का असिद्धत्वाभाव होने से परत्वात् "रोरि" इससे लोप की प्राप्ति रहने पर "पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावदुत्तरस्य" यह सिद्धान्त असङ्गत हो जायगा। क्योंकि आप विप्रतिषेध की प्रवृत्ति में करणीभूत त्रैपा-

  

शास्त्रासिद्धत्वमेव ज्ञापयितुं युक्तम् । एवं शीभावात्पूर्वम् "अदसोसेः" (पा० सू० ८।२।८०) इति मुत्वे दात्परैकाराभावेन "एत ईत्" [पा० सू० ८।२।८१] इति सूत्रमपि व्यर्थं सदत्रैव ज्ञापकमस्तु । न च "तौ सत्" [पा० ३।२।२७] इत्यादिनिर्देशैर्देवदत्तहन्तृहतन्यायोऽनित्य इति वाच्यम्, 'हते देवदत्ते तद्धन्तरि हतेऽपि नोज्जीवनं, हतत्वारोपे तु सुतराम्।' हन्तुमुद्यतस्य हनने तूज्जीवनमस्त्येव' इति न्यायशरीरम् । 'तौ' इत्यादौ वृद्धिहन्तुः । पूर्वसवर्णदीर्घस्य हननोद्यमसजातीयं प्रसङ्गमात्रं, न तु हननस्थानीया लक्ष्ये प्रवृत्तिरिति न तत्रास्य न्यायस्य विषय इति तेनास्यानित्यत्वबोधनासम्भवात् । स्पष्टं चेदं "स्वादिष्वसर्व०" [पा० सू० ४।१।१७] इति सूत्रे कैयटे । प्रकृते तु निरधिष्ठानारोपासम्भवेन हननसजातीयप्रयोगे कार्यप्रवर्तनमावश्यकमेवेत्यन्यत्र विस्तरः ।

परास्त इति । विहितं कार्यमित्यध्याहारे गौरवाच्च । किं च, त्रिपादीशास्त्रं, तद्धि विधानेकरणं न त्वधिकरणम् । त्रिपाद्यां विद्यमानेन शास्त्रेण विहितं कार्यमिति व्याख्यानेन त्वत्यन्तं क्लिष्टतेत्यपि बोद्ध्यम् ।

---

रूपाद्यनापत्तिरिति ग्रन्थासङ्गतिरितिचेन्न पररूपाद्यनापत्तिरित्यस्येष्टपररूपाद्यनापत्तिरित्यर्थः । वस्तुतस्तु यत्किञ्चिच्छास्त्रबोधितासाधुत्ववत्येव शास्त्रं प्रवर्तते, इति नियमेन पूर्वत्रासिद्धमित्यस्यातिदेशशास्त्रत्वेन विधिशास्त्रत्वाभावात् 'अ अ' इत्यस्य साधुत्वाभावेन पररूपस्य प्राप्तिरेव नास्तीति स ग्रन्थो युक्त एव । ननु देवदत्तहन्तृहतन्यायोऽनित्यः "न मुने" इति सूत्रारम्भात् । अन्यथा अद अ आ इत्यत्र परत्वान्मुत्वे कृते "शेषोध्यसखीति" सूत्रे असखीति पर्युदासात्, इकारान्तप्रातिपदिकस्य घिसंज्ञाविधानेन प्रकृते तदभावात् घिसंज्ञायाः प्राप्तिरेव नास्तीति 'न मुने' इत्यस्य वैयर्थ्यं स्यात् न च अ आ इत्यत्र दीर्घे कृते एकदेशविकृतन्यायेन अमु इत्यस्य प्रातिपादिकत्वेन घिसञ्ज्ञायाः प्राप्तिरस्तीतिवाच्यम् स्थानिवद्भावेनोकारान्तस्य प्रातिपदिकत्वाभावात् । एवञ्च अमु अ औ इत्यत्रोकारस्या-

---

दिक शास्त्रजन्य बोध विषय कार्य की अथवा त्रैपादिक शास्त्र की असिद्धता नहीं कह सकते, किन्तु लक्ष्य में किया गया जो कार्य उसको होने वाले सपादसप्ताध्यायीस्थ कार्य की दृष्टि में असिद्धता कहेंगे, तथा च त्रैपादिकशास्त्र अथवा त्रैपादिकशास्त्रजन्य बोधविषयीभूत कार्य का असिद्धत्वाभाव होने से त्रिपादी में विप्रतिपेध का कोई बोधक न होने से विप्रतिपेध के अभाव का उपपादक जो हेतु है "आभावादुत्तरस्य" वह असिद्ध हो जायगा । अर्थात् त्रिपादी में भी विप्रतिपेध सूत्र लगेगा । कार्यासिद्धत्ववादी कहता है सिद्धान्त का हनन नहीं होगा, क्योंकि मेरे मत में भी पूर्वपद की पूर्वशास्त्र-जन्य जो वाक्यार्थबोध तद्विषयक कार्य में लक्षणा होगी । एवं पर पद की भी परशास्त्र जन्य जो वाक्यार्थ बोध तद्विषयक कार्य में लक्षणा होगी । तथा च शास्त्र में कार्यासिद्धि होगी यदि यह कहो तो नहीं कह सकते क्योंकि लक्षणा में कोई प्रमाण नहीं है ।

यदि कहो कि "अभावादुत्तरस्य" यह भाष्य ही प्रमाण है तो इस पर कहते है कि लक्षणा करने में कोई फल नहीं है, तथा गौरव भी है । कार्यासिद्धत्ववादी कहता है कि 'मनोरथः' इसमें दर्शनाभाव रूप लोप में अभाव का आरोप कर देने पर दर्शनारोपरूप होने से कोई दोष नहीं क्योंकि अभावाभाव प्रतियोगिस्वरूप होता है । तो इसका मनोरमाकार समाधान करते हैं कि—अमू अमी इत्यादि का साधुत्व नहीं होगा । "अद अ औ" "अद अ अस्" इस स्थिति में अदसोऽसे-

कारवृद्धया पररूपेकृते संयोगशिष्टन्यायेन मकारनिवृत्तौ अद औ इत्यत्र मुत्वे कृते अमू इत्यस्य सिद्धिरिति कार्यासिद्धत्वपक्षस्वीकारे न दोष इति चेन्न कार्यासिद्धपक्षं स्वीकृत्य ज्ञापकानुसरणापेक्षया शास्त्रासिद्धत्वपक्षस्यैव युक्तत्वात् न च लक्ष्ये लक्षणं न्यायेन पुनर्मुत्वं न स्यादिति वाच्यम् यावत्सूत्रस्य न चारितार्थ्यंन्तावत्सर्वंज्ञाप्यमिति न्यायेन लक्ष्ये लक्षणं न्यायस्यापि अनित्यत्वज्ञापनात् ।

---

दादुदोमः, इस सूत्र से किया गया उत्व सपादसप्ताध्यायीस्थ कार्य की दृष्टि से असिद्ध हो जाने पर भी देवदत्तहन्तृहतन्याय से अकाराभाव होने से पररूप नहीं होगा। यदि कहो कि देवदत्तहन्तृहतन्याय की प्रवृत्ति हो जाने से प्रथम अकार के साथ पररूप हो जायगा "पररूपाद्यनापत्तिः" यह ग्रन्थ असङ्गत है तो यह नहीं कह सकते, क्योंकि इसका अभिप्राय है इष्ट पररूप नहीं होता। यदि कहो कि "नमुने" मुत्वासिद्धत्व का निषेध करता है, निषेध सामर्थ्य से कल्पना करेंगें कि पर रूप विषय में "देवदत्तहन्तृहतन्याय" की प्रवृत्ति नहीं होती अर्थात् उत्व मत्व असिद्ध नहीं होगा तो पररूप नहीं होगा, पररूपत्वाभाव में "आङोनाऽस्त्रियाम्" इस सूत्र से नाभाव की प्राप्ति नहीं होगी, नाभाव की प्राप्ति क्या घि सञ्ज्ञा ही नहीं होगी, क्योंकि यहाँ पर असखि यह पर्युदास होने से इकरान्त जो प्रातिपादिक उसकी घि सञ्ज्ञा होती है।

यहाँ पर जो 'अमु अ' आ यह है, इसमें 'अमु अ' यह प्रातिपदिक है, जो प्रातिपदिक है, वह उकारान्त नहीं है, जो उकारान्त है वह प्रातिपदिक नहीं है, तथा च "नमुने" यह व्यर्थ हो जायगा तत्सामर्थ्य से कल्पना करेंगे कि पररूप विषय में न्याय की प्रवृत्ति नहीं होती है तो कार्यासिद्धत्व में कोई दोष नहीं है, यह कहो तो नहीं कह सकते, क्योंकि शास्त्रारम्भ सामर्थ्येन कल्पना करने में अत्यन्तक्लेश है, अतः शास्त्रासिद्धत्व कल्पना करना ही ठीक है। इसी प्रकार शीभाव से पहले "अदसोऽसेः" इस सूत्र से उत्वमत्व हो जाने पर दकार से परे एकार का अभाव होने से "एतईत" यह सूत्र भी व्यर्थ होकर ज्ञापन करेगा कि शास्त्रासिद्धत्व ही युक्त है। यदि कहो कि "तौसत्" इत्यादि निर्देश से समझते हैं कि "देवदत्तहन्तृहतन्याय" अनित्य है, यह नहीं कह सकते, क्योंकि न्याय का शरीर इस प्रकार है "हते देवदत्ते तद्धन्तरि हतेऽपि नोन्मज्जनम्। हतत्वारोपे तु सुतराम्। हन्तुमुद्यतस्य हनने तु उज्जीवनमस्त्येव।" देवदत्त के मर जानेपर उसके मार डालने वाले को मार डालने पर देवदत्त का प्रादुर्भाव नहीं होता। हतत्वारोपे तु सुतराम् का अभिप्राय है मरे हुए में आरोप करने पर तो स्वतः सिद्ध है कि उसका उज्जीवन नहीं होगा। मारने को उद्यत का हनन करने पर तो जीवन रहता है। 'तौ' इत्यादि में वृद्धि का हनन करने वाला पूर्वसवर्ण दीर्घ की हननोद्यम सजातीय प्राप्ति है। लक्ष्य में हनन स्थानीया प्रवृत्ति नहीं है। अतः तौ यह इस न्याय का विषय नहीं है। अतः "तौ सत्" इस सूत्र से देवदत्तहन्तृहतन्याय को अनित्य नहीं कर सकते, यह "स्वादिष्वसर्वनामस्थाने" इस सूत्र के कैयट में स्पष्ट है।

अमू, अमी यहाँ पर तो आधार विना आरोप असम्भव होने से हनन का उद्योग तो कर नहीं रहा है। हनन सजातीय का प्रयोग करने पर कार्य का प्रवर्तन आवश्यक है। अतः शास्त्रासिद्धत्व युक्त है। शास्त्रासिद्धत्व स्वीकार कर लेने पर "त्रिपाद्यां विहितं कार्यमसिद्धम्" त्रिपादी में विहित कार्य असिद्ध होता है। यह प्राचीनों का ग्रन्थ असङ्गत हो गया। विहित कार्य के अध्याहार में गौरव भी है। त्रिपादी शास्त्र है वह विधान में करण है अधिकरण नहीं है। अतः उसके विधान में तृतीयान्त कहना चाहिये, सप्तम्यन्त कहना ठीक नहीं। त्रिपादी में विद्यमानशास्त्र से विहित कार्य असिद्ध होता है इस व्याख्यान में अत्यन्त क्लेश है।

विवृण्वते कण्ठमिति। विवार एषां प्रयत्न इति भावः। वर्गयमगा इति। वर्गगाः, यमगाश्चेत्यर्थः। कादय इति। लोकप्रसिद्धपाठापेक्षमिदम्। चतुर्दशसूत्र्यां मावसानत्वायोगात्। अर्द्धविसर्गेति। सादृश्यमुच्चारणे लेखने च बोध्यम्। ऋऌवर्णयोरिति। आ च आ च रलौ, तौ च तौ वर्णौ चेति विग्रहः। उश्च उल् च ऋलोः। तयोर्वर्णयोरिति वा। प्रथमान्तेन परिनिष्ठितविभक्त्या वा विग्रह इति सिद्धान्तात्। "ऋत्यकः" (पा० सू० ६।१।१२८) इति प्रकृतिभावः।

---

लोकप्रसिद्धेति। "त्रिभिश्च सध्यमैर्वर्गैः" इति भाष्यपर्यालोचनया क—ख—ग—घ—ङेत्यादीनामप्यनादित्वमिति भावः। उच्चारणेति। पादमात्रिकाविमाविति भावः। लेखने चेति। अर्द्धवृत्तद्वयात्मकलिपित्वादिति भावः। रलाविति। ऋऌ औ इति स्थिते "ऋत्यकः" (पा० सू० ६।१।१२८) इति प्रकृतिभावेन दीर्घाभावे गुणे यणि च रलावित्यस्य सिद्धिः। उश्च उल् च ऋलोरिति पाठः। रलोरिति पाठे आगन्तुनाऽकारेण निर्देश इति बोद्धव्यम्। तयोर्वर्णयोरिति। "पूरणगुण" (पा० सू० २।२।११) इति निषेधस्तु षष्ठीसमासस्य न तु कर्मधारयस्य, बहुलग्रहणेन तदभावो भाष्योदाहृतविषय एव नान्यत्रेति भावः। प्रथमान्तेनेति। प्रथमोपस्थितत्वादिति भावः। अयं पक्षः "अनेकमन्यपदार्थे" (पा० सू० २।२।२४)

---

वर्गयमगा इति। वर्गयमौ गच्छन्तीति वर्गयमगाः।

कादय इति। ननु चतुर्दशसूत्र्यां कादित्वविशिष्टमावसानत्वायोगात् "कादयो मावसाना" इत्ययुक्तमत आह लोकप्रसिद्धप्राठापेक्षमिदम्।

पादमात्रिकाविमाविति—विसर्गस्य व्यञ्जनत्वेनार्धमात्रिकत्वेन तदर्द्धस्य तु पादमात्रिकत्वेन व्यवहारः। अर्द्धवृत्तद्वयात्मकलिपित्वादिति भाव इति—पूर्णं विसर्गस्य वर्तुलद्वयाकारत्वेनार्द्धविसर्गस्यार्धवर्तुलद्वयाकारत्वं यथा ⌣क⌣ख इति।

रलाविति। ननु रलावित्ययुक्तं 'आ च आचेति विगृह्य द्वन्द्वे कृते ऋ ऌ औ, इत्यवस्थायां प्रकृतिभावेनदीर्घाभावे गुणे कृते "अचः परस्मिन् पूर्वविधा''विति सूत्रेण स्थानिवद्भावे सति "ऋत्यकः" इति प्रकृतिभावेन ऋ अलौ स्यादिति चेन्नान्तर्विभक्त्या पदत्वेन "नपदान्तेति" निषेधात्। उश्च उल् चेति, ओसि तु ऋलोरित्येव नतु 'रलोरिति' क्वचित्तथा दृश्यमानप्रयोगस्त्वागन्तुनाकारेणोपपाद्यः प्रयुक्तानां शास्त्रेणान्वाख्यानात्। ईदृशानांप्रयुक्तत्वे साधुत्वे च मानं चिन्त्यम्।

---

खय् सम्बन्धी यम, खय् प्रत्याहार बोध्यवर्ण जिह्वामूलीय उपध्मानीय विसर्ग शर् प्रत्याहारबोध्य वर्ण इनका विवार श्वास अघोष प्रयत्न होता है। अन्य का संवार नाद घोष प्रयत्न होता है। वर्ग, यम, गमन क्रिया के कर्म हैं। अर्थात् वर्गगत यमगत जो अयुग्म वर्ण = प्रथम तृतीय पञ्चम वर्ण, यण् प्रत्याहार बोध्य वर्ण इनका अल्पप्राण प्रयत्न होता है।

यद्यपि चतुर्दश सूत्री का घटक ककरादि मकारान्त समुदाय नहीं है, अतः "कादयो मावसनाः" यह असङ्गत है तथापि लोकप्रसिद्ध पाठको लेकर यह कहा गया है। यदि कहो कि लोकप्रसिद्ध पाठ आधुनिक होने से उसका प्रमाण मानना उचित नहीं, तो इसका समाधान यह है कि क ख ग घ ङ इत्यादि यह अनादि पाठ है "अनन्त्यश्चभवेत्पूर्वो ह्यन्त्यश्चपरतोयदि" इस प्राति-

इति सूत्रे भाष्ये। परिनिष्ठितेति। अत्र च "एकविभक्ति चापूर्वनिपाते" (पा० सू० १।२।४४) इति ज्ञापकम्। अन्यथा मालामतिक्रान्त इति विग्रहेऽतिपदस्यापि नियतविभक्त्यन्तरत्वे-नैकविभक्तीत्यस्य व्यावर्त्यालाभः। एकस्यानियतविभक्तित्वे हि तद्वारणाय "एकविभक्ति" इति सार्थकम्। परिनिष्ठितविभक्त्या समासे त्वतिक्रान्तमतिक्रान्तेनेत्यादिक्रमेण तस्या-नियतविभक्तिकत्वं स्पष्टमेव। अत एव "तत्पुरुषे तुल्यार्थः" (पा० सू० ६।२।२) इति सूत्रे भाष्ये परमे कारके परमेण कारकेणेत्यादावतिप्रसङ्गमाशङ्क्यप्रतिपदोक्तपरिभाषया समा-हितमिति भावः।

---

इति पाठे इति। अनेन नास्त्येव स इति ध्वनयति। यदि क्वचिदस्ति तत्राह— आगन्तुकेनेति सोप्यसाम्प्रदायिको यत आगन्तुकानामन्ते निवेशस्य लोकेप्रसिद्धत्वात्। ननु ऋलृ वर्णयोरित्यत्र समासो न युक्तः "पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेनेति" निषेधात्। न च कर्मधारयसमासः स्यात् तत्रापि प्रकृते षष्ठ्यन्तपदसम्बन्धितया निषेधा-दिति चेन्न "अनन्तरस्य विधिर्भवति प्रतिषेधो वेति" न्यायेन षष्ठी समासस्यैव निषेधात्। तदभावः=कर्मधारयाभावः। प्रथमोपस्थितत्वादिति। प्रागुपस्थितनिमित्तकत्वेनान्तरङ्ग-त्वादित्यर्थः। अयं पक्ष इति—प्रथमान्तेनेतिपक्षः। अत्र च परिनिष्ठतविभक्त्या समास-पक्षे चेत्यर्थं इति। ज्ञापकमिति। एकविभक्तिग्रहणं ज्ञापकमित्यर्थः। एकग्रहणं ज्ञापक-

---

शाख्य के पर्यालोचन से तथा सवर्णसञ्ज्ञा विधायक सूत्रस्थ "त्रिभिश्च मध्यमैर्वर्गैः" इत्यादि भाष्य के पर्यालोचन से अनादिता इसमें सिद्ध है। मातृकान्यास मन्त्र भी लोकप्रसिद्ध पाठ की अना-दिताद्योतन करते हैं।

विसर्ग का सादृश्य अर्ध विसर्ग में उच्चारणत्वेन और लेखनत्वेन समझना चाहिये। विसर्ग-व्यञ्जन रूप होने से अर्धमात्रिक होता है। पूर्ण विसर्ग की लिपि दो गोलाकार बिन्दु है। अर्ध विसर्ग की लिपि अर्धवर्तुलाकार बिन्दुद्वयात्मिका हैं।

आच आच रलौ यह लौकिक विग्रह है। अलौकिक विग्रह है 'ऋ सु लृ सु' द्वन्द्व समास हो जाने पर द्वित्वविवक्षा में ऋ लृ औ इस स्थिति में दीर्घ को बाधकर "ऋत्यकः" इससे प्रकृति भाव हो जाने से "ऋतो ङि सर्वनामस्थानयोः" इससे गुण हो जाने पर यण् हो जायगा तथा च रलौ इसकी सिद्धि हो जायगी। उश्च उल् च इसका ऋ अस् लृ अस् यह अलौकिक विग्रह है, समास प्रकृतिभाव यण् हो जाने पर "ऋलोः" इसका साधुत्व होता है, इसी पाठ में औचित्य है। यदि 'रलोः' यह पाठ है तो प्रकृति भाव के अभाव पक्ष में यण् हो जाने पर उच्चारणार्थक अकार विशिष्ट कर देने पर "रलोः" का किसी प्रकार साधुत्व हो सकता है, किन्तु यह पाठ असाम्प्रदायिक है। अर्थात् परम्परा प्राप्तज्ञान विरुद्ध है। क्योंकि आगन्तुकों का अन्त में सन्निवेश ही सम्प्रदाय प्रसिद्ध है तथा च अन्त में उच्चारणार्थक वर्ण का संयोग उचित है।

प्रथमान्त अथवा परिनिष्ठित विभक्ति के साथ समास होने से "ऋलृवर्णयोः" यहाँ पर प्रथमान्त अथवा परिनिष्ठित विभक्ति के साथ समास होगा। यदि कहो कि "षष्ठीसमास" का "पूरण-गुण-सुहि-तार्थसदव्ययतव्यसमानाधिकरणेन" इससे निषेध हो जायगा तो इसका समाधान है "अनन्तरस्य" इस न्याय से षष्ठी समास का ही निषेध होगा कर्मधारयसमास का नहीं बहुलग्रहण सामर्थ्य से, समासाभाव तो भाष्योदाहृत विषय में ही होता है, अन्यत्र नहीं। प्रथमोपस्थित होने से प्रथमान्त

"नाज्झलौ (पा० सू० १।१।१०)॥ आकारसहित इति। अत्र च "काल-समयवेलासु" (पा० सू० ३।३।१६७) इत्यादिनिर्देशाः प्रश्लेषे लिङ्गम्। न चैव-मपि यियाः३सो, इत्यादौ "गुरोरनृत" (पा० सू० ८।२।८६) इति प्लुतादाकारा-त्परस्य सनः सस्य षत्वं स्यादेवेति वाच्यम्। आश्च, आः३श्चेति द्वन्द्वे सवर्णदीर्घेण दीर्घात्परत्र प्लुतोऽपि प्रश्लिष्यत इति व्याख्यानात्,। यणादिकमिति। शीतलशब्दे सवर्णदीर्घ आदिशब्दार्थः।

---

व्याख्यानादिति। एवं व्याख्याने मानं तु प्रयत्नभेदेन "नाज्झलौ" इत्येतत्प्रत्याख्यानपरं भाष्यम्। तद् ध्वनयनन्वक्ष्यति—सूत्रं मास्त्विति भाष्ये स्थितमिति। शीतलशब्दे इति। शस्य

---

मिति यावत्। विभक्तिपदमपि संज्ञिनिर्देशार्थमावश्यकमितिभावः। अतिप्रसङ्गमिति। "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः" इति सूत्रेण पूर्वपदस्वर-प्राप्तिरूपातिप्रसङ्गम्। समाहितमिति। यस्मिन्सूत्रे लक्षणप्रतिपदोक्तपरिभाषासञ्चार-णीया तत्सूत्रघटकपदघटितशास्त्रविधेयत्वं प्रतिपदोक्तत्वमिति लक्षणेन तृतीयासप्तमी-पदघटितशास्त्रे "तृतीयातत्कृतार्थेन" "सप्तमी शौण्डैः" इति तद्विधेयसमासयोरेव तत्त्वं नतु "विशेषणं विशेष्येणेति" विहितसमासस्येति।

नाज्झलाविति। उद्देश्यतावच्छेदकव्यापकत्वं विधेये भासते, इति नियमसम्पादनाय सामान्यशास्त्रस्य स्वीयोद्देश्यतावच्छेदकावच्छेदेनप्रवृत्तिरावश्यकी। तथा च "तुल्यास्य-प्रयत्नं सवर्णमित्यस्य स्वीयोद्देश्यतावच्छेदकावच्छेदेन प्रवृत्तौ "नाज्झलौ" इत्यस्य व्यर्थता स्यात्। अज्झलोरपि सवर्णसंज्ञायां पश्चात् "भुक्तवन्तं प्रति मा भुङ्थाः इति न्यायेन

---

के साथ समास होता है, यह पक्ष "अनेकमन्यपदार्थे" इस सूत्र के भाष्य में स्थित है। परिनिष्ठित विभक्त्यन्त के साथ समास होता है, इस पक्ष में "एक विभक्ति चापूर्वनिपाते" यह ज्ञापक है, यदि परिनिष्ठित विभक्त्यन्त के साथ समास नहीं स्वीकार करोगे तो "मालामतिक्रान्तः" इस विग्रह में अतिपद भी नियत विभक्त्यन्त होने से "एक विभक्ति" इसका व्यावर्त्य नहीं मिलेगा, एक अनियत विभक्ति की उपसर्जन सञ्ज्ञा का निषेध करने पर ही सार्थक हो सकता है। परिनिष्ठित विभक्ति के साथ समास करने पर तो अतिक्रान्तम्, अतिक्रान्तेन, इत्यादि क्रमेण विग्रह होने से अतिक्रान्तार्थक "अति" अनियत विभक्त्यन्त स्पष्ट है। ज्ञापक से परिनिष्ठित विभक्त्यन्त के साथ समास स्वीकार कर लेने पर ही "तत्पुरुषे तुल्यार्थ" इस सूत्र का भाष्य चरितार्थ होगा। भाष्य में 'परमे कारके' 'परमेण कारकेण' इस विग्रह में "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः" इस सूत्र से पूर्वपद प्रकृतिस्वर की आशङ्का करके प्रतिपदोक्त परिभाषा से उसका समाधान किया।

आश्च आः३श्च औ "औ च अच् च हल् च" इस प्रकार द्वन्द्व करने पर बहुवचन होने लगेगा। औ च अच् च इनका समाहार द्वन्द्व समास करके इतरेतरयोग द्वन्द्व में "द्वन्द्वाच्चुदषहान्तात्समा-हारे" इससे टच् प्रत्यय होने लगेगा अतः आकार सहितोऽच् आच् मध्यमपदलोपी समास करके द्वन्द्व समास होता है- पश्चात् निषेधार्थक अव्यय 'न' पद के साथ अज्झलौ का समास करके दीर्घ होता है। यद्यपि "कालसमयवेलासु तुमुन्" इस सूत्र में दन्त्यसकार उच्चारण के सामर्थ्य से कल्पना कर सकते हैं कि हकारेण आकार का ग्रहण नहीं होगा अर्थात् हकार आकार की सवर्ण सञ्ज्ञा नहीं होगी तथापि गौरवयुक्त आनुमानिक वचन कल्पना की अपेक्षा प्रश्लेष अर्थात् घना सम्पर्क या संहति

ईकारे परे, दधीतीकारस्य शकारे परे चेत्यर्थः। न च शीङः शकारोच्चारणेन तच्छकारस्येकारे न दीर्घ इति वाच्यम्। शीतलशब्दे शीङोऽभावात्। किं तु श्याधातोः क्ते "द्रवमूर्त्तिस्पर्शयोः श्यः" (पा०सू० ६।१।२४) इत्यनेन सम्प्रसारणे "श्योऽस्पर्शे" (पा०सू० ८।२।४७) इत्युक्तेर्नत्वाभावे च निष्पन्नाच्छीतशब्दात्सिध्मादित्वाल्लचि शीतलशब्द इत्यदोषात्। शीतशब्दो हि सिध्मादिषु गणरत्ने वृत्तौ च पठ्यते। किञ्च तेनापूर्ववचनकल्पनापेक्षया सूत्रोदाहरणत्वमेव तस्य युक्तमिति भावः।

---

निषेधस्य व्यर्थत्वात्। अतः व्यापकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने व्याप्य (निषेध) शास्त्रीयोद्देश्यताऽवच्छेदकावच्छिन्नातिरिक्तत्वेन सङ्कोचस्यावश्यकत्वात्। यद्यपि "नाज्झलाविति निषेधशास्त्रीयोद्देश्यतावच्छेदकमच्त्वं हल्त्वञ्च तदवच्छिन्नातिरिक्तत्वेन तुल्यास्यसूत्रे सङ्कोचे अचामज्भिर्हलां हल्भिरपि सवर्णसंज्ञा न स्यात्तथापि अज्भिन्नेन तुल्यास्यप्रयत्नमज्भिन्नं सवर्णसंज्ञंभवति। हल्भिन्नेन तुल्यास्यप्रयत्नं हल्भिन्नं सवर्णसंज्ञंभवति इत्यावृत्या तुल्यास्यमित्यस्यार्थद्वयेनाज्झलावित्यस्यतात्पर्यग्राहकत्वेनादोषात्। अत्र प्रथमवाक्येन हलाम् द्वितीयेन चाचां सवर्णसंज्ञा बोध्या।

आकार सहित इति। ननु आकार सहितोऽच् आच् आच् च हल् च आज्झलौ इति मध्यमपदलोपिनं समासं विधाय पश्चाद् द्वन्द्वकरणे महद्गौरवं केवलद्वन्द्वेनैव निर्वाहादिति चेन्न आश्च आश्च औ, औ च अच् च हल् च इति द्वन्द्वे बहुवचनान्तत्वापत्तेः। आच अच् च इति समाहारं कृत्वा आच्च हल् च इति इतरेतरयोगद्वन्द्वे तु "द्वन्द्वाच्चुदषहान्तात्समाहारे" इति टजापत्तेः।

प्रश्लेषे इति। ननु "कालसमयवेलासु तुमुन्" इत्युच्चारणसामर्थ्यादिवाकारहकारयोर्न सावर्ण्यमिति चेन्न सावर्ण्याभावबोधकानुमानिकवचनकल्पनापेक्षया प्रश्लेषे लाघवात्। यतोऽनुमितिर्व्याप्तिज्ञानादिविशिष्टगुरुतरसामग्रीजन्या भवति। ननु "नाज्झलौ" इत्यत्र

---

मानने में लाघव है। "नाज्झलौ" इसमें दीर्घाकार का प्रश्लेष होने से अर्थ होता है, दीर्घाकार अच् हल इनकी सवर्ण सञ्ज्ञा नहीं होती, इसमें प्रमाण है "कालसमयवेलासु तुमुन्" अन्यथा हकार का सवर्ण होगा आकार। हकारेण आकार का ग्रहण होने से इण् बोध्यत्व आकार में रहेगा तथा च "आदेशप्रत्यययोः" इससे षत्व होने लगेगा। केवल दीर्घाकार का प्रश्लेष मानने पर हे यियाश्सो इसमें षत्व होने लगेगा।

इसका, साधुत्व प्रकार "यातुमिच्छति यियासति" सन्नन्त से ताच्छील्यादि अर्थों में "सनःशंसभिक्ष उः" इससे उ प्रत्यय हो जाने पर सम्बोधन में "गुरोरनृतोऽनन्त्यस्याप्येकैकस्यप्राचाम्" इससे प्लुत हो जाने पर सिद्ध होता है। क्योंकि प्लुताकार का प्रश्लेषाभाव होने से हकारेण आ३कार का ग्रहण होने से प्लुताकार से परे सन् के सकार को षत्व हो जायगा तो इसका समाधान है कि यहाँ पर प्लुताकार का भी प्रश्लेष होता है। आश्च आ३श्च औ यहाँ पर द्वन्द्व होने पर सवर्ण दीर्घ हुआ है, अतः प्लुताकार का प्रश्लेष स्पष्ट है। इस व्याख्यान में प्रमाण है "ईषद् विवृत" यह पांचवा प्रयत्न स्वीकार कर "नाज्झलौ" का प्रत्याख्यान बोधक भाष्यं। क्योंकि फलैक्य में प्रत्याख्यान होता है, फल भेद में नहीं। इसी का ध्वनन करते हुए मनोरमाकार कहेंगे "नाज्झलौ" "इति सूत्रं मास्त्वितिभाष्ये स्थितम्"।

अत्रेति । अत्रैवेत्यर्थः । यद्यपीति । ग्रहणकशास्त्रस्याद्याप्यनिष्पत्तेरिति भावः ।

---

अत्रैवेति । ग्राहकसूत्र एवेत्यर्थः । अत्र च "उऋ्रत्" (पा० सू० ७।४।७) इति सूत्रे तपरत्वं मानम् । तद्धि चुरादिण्यन्तात्कृतधातोर्लुङ्यचीकृतदित्यत्र दीर्घकारस्य स्थाने ह्रस्व एव यथा स्यादित्यर्थम् । पूर्वेणात्राण्ग्रहणे तूद्देश्येन विधेयेन च ऋकारेणानण्त्वाद्भिन्नकालाग्रहणेन न तस्य स्थानित्वं न वा आदेशत्वं प्रसक्तमिति व्यर्थं तत्स्यात् । न च तपरसूत्रेण लृकारग्रहणार्थं तत् । स्थानेऽन्तरतमपरिभाषया ऋकारस्थाने तस्य वारणेन तद्ग्रहणे फलाभावात् । न चैवं ज्ञापितेऽपि भाव्यमानत्वात्सवर्णग्रहणाप्रसक्तेस्तद्वैयर्थ्यम् । तपरत्वाभावे आदेशान्तरनिवृत्त्यर्थत्वेन स्वरूपाभ्यनुज्ञानार्थतयाऽपूर्वबोध्यत्वाभावेनाविधेयत्वात् । कृते तु तपरत्वे भाव्यमानताऽपीत्यन्यदेतत् ।

---

दीर्घाकारस्य सत्वेन प्लुताकारसंहतौमानन्नास्तीत्यत आह—व्याख्यानादिति । प्रयत्नभेदेनेति । ईषद्विवृतप्रयत्नभेदेन ॥ भाव्यमिति । अन्यथा प्रत्याख्याने प्लुतेन हस्यासावर्ण्यम् प्रत्याख्यानाभावे तु सावर्ण्यमिति फलभेदे प्रत्याख्यानासम्भवेन तदसङ्गतिः स्पष्टैवेति भावः । शस्य ईकारे इति । अयं भावः सूत्राभावे ह्रस्वेकाराकारयोः सावर्ण्याच्छकारस्याक्त्वादीकारेपरेदीर्घः स्यात् । साम्प्रतम् सिध्मादिगणे-शीतशब्दस्य पाठो न दृश्यतेऽत उक्तं शब्दरत्नकारेण शीतशब्दोहि । ननुशीङित्यत्र शकारोच्चारणसामर्थ्यात् ईकारे परे शकारस्य सन्धिकार्याभावः स्यादत आह किञ्चेति ।

मूले सूत्रविशेषस्य प्रतीकाभावत्वेनासन्देहार्थमाह—ग्राहकेति । अत्र च परेणाण् ग्रहणे च । तस्य ह्रस्वकारस्य तत् = तपरत्वम् । एवं ज्ञापितेऽपि = परेणाण्ग्रहणमिति ज्ञापितेऽपि ।

---

अच् हल् की सवर्ण सञ्ज्ञा न होने से दधिहरति यहाँ पर यण् नहीं हुआ । यणादिकञ्च" यहाँ पर आदि शब्द से सवर्ण दीर्घ का ग्रहण करना चाहिये, तथा च 'दधि शीतलम्' यहाँ पर सवर्ण दीर्घ नहीं हुआ । शीतल शब्द में भी शकार से ईकार परे रहने पर दीर्घ नहीं । यदि कहो कि शीङ् धातु में शकारोचारण सामर्थ्य से यह ज्ञापन करेगें कि शकार से ईकार परे रहते सन्धिकार्याभाव होता है, तो इसका समाधान है कि शीतल शब्द का शीङ् धातु से साधुत्व नहीं हुआ है, किन्तु श्यैङ् गतौ से शीतल शब्द का साधुत्व हुआ है, श्यैधातु से क्त प्रत्यय, तथा आत्व हो जाने पर "द्रवमूर्तिस्पर्शयोः श्यः" इससे सम्प्रसारण हो जायगा "हलः" से दीर्घ होने पर शीत शब्द का साधुत्व होता है "श्योऽस्पर्शे" से निष्ठा तकार को नकार नहीं होता, क्योंकि वह स्पर्श भिन्न अर्थ में निष्ठातकार को नकार करता है । यहाँ पर स्पर्श अर्थ है, शीत शब्द से "सिध्मादिभ्यश्च" के द्वारा लच् प्रत्यय होने पर शीतल शब्द का साधुत्व होता है । यद्यपि इस समय शीत शब्द का सिध्मादि-गण में पाठ उपलब्ध नहीं है, तथापि गणरत्न तथा वृत्ति में सिध्मादि गण में शीत शब्द का पाठ है किञ्च "शकारोऽच्कार्यानिष्पादकः" इस बचनान्तर की कल्पनापेक्षा लाघव होने से शीत शब्द का सूत्रोदाहरण मानना ही युक्त है ।

इस सूत्र में ही अण् पर णकार तक लिया जाता है इस कथन में सन्देह रहता है, कि किस सूत्र में अतः शब्दरत्नकार सन्देह निवृत्यर्थं स्पष्ट लिखते हैं कि ग्राहक सूत्र में अर्थात् "अणुदित्

अनिष्पत्तेरिति। 'वर्णानामुपदेशस्तावत्तदुत्तरकालमित्सञ्ज्ञा तदुत्तरम् "आदिरन्त्येन" [पा० सू० १।१।७१] इति प्रत्याहारस्तदुत्तरकाला सवर्णसंज्ञा तदुत्तरकालं "अणुदित्" [पा० सू० १।१।६९] इति, एतेन समुदितेनान्यत्र सवर्णानां ग्रहणम्' इतिवाक्यापरिसमाप्तिन्यायादित्यर्थः।

अयं भावः—"आदिरन्त्येन" इति प्रत्याहारसिद्धौ "नाज्झलौ" [पा० सू० १।१।१०] इत्येतद्वाक्यार्थबोधे सति निर्णीततद्विषयपरिहारेण सवर्णपदबोध्यत्वनिश्चये "अणुदित्" इत्यनेन तावतां ग्रहणं बोधनीयम्। अन्यथा बाधकसम्भावनया तुल्यास्यसूत्रजशक्तिग्रहेऽप्रामाण्यसन्देहेन तच्छास्त्रजबोधानापत्तिः। न चैतद्वाक्यार्थबोधात् प्राक् तन्निश्चय-इति।

यत्तु निषेधवाक्यार्थबोधात्पूर्वं विधेर्वाक्यार्थबोध एव नेति। तन्न। पदार्थोपस्थितौ वाक्यार्थबोधे बाधकाभावात्। निषेधस्य प्रतियोगिज्ञानोपपादकतया विध्यपेक्षत्वेऽपि विधेस्तदपेक्षत्वे मानाभावाच्च।

---

स्वरूपाभ्यनुज्ञानार्थतयेति। यद्यनेनादेशविधानं न स्यात् तदा 'अचीकृतत्' अवीवृधत् अमीमृजत् इत्यादिष्विररारम्प्रवृत्तिः स्यादिति दीर्घर्कारस्य स्वरूपोपलम्भो न स्यादिराद्यादेशेनापहारात्। सति त्वस्मिन् दीर्घस्वरूपोपलम्भ इति स्वरूपाभ्यनुज्ञेत्यर्थः। तावत्=प्रथमम्। उपदेशोत्तरकालेति। ज्ञातस्य संज्ञाविधानादित्यर्थः। प्रत्याहारोत्तरकालासवर्णसंज्ञा इष्टविषये सर्वणसंज्ञासञ्ज्ञित्वग्रहणम्। तदुत्तरकालमणुदिदित्येतदकारादिभिः स्वसवर्णत्वेन ज्ञातानां ग्रहणं बोधयति।

वाक्यापरिसमाप्तिन्यायादिति। वाक्यार्थज्ञाने पदार्थज्ञानं कारणमित्येतन्मूलकन्यायादित्यर्थः। अनापत्तिरिति। अप्रामाण्यज्ञानानास्कन्दितशक्तिग्रहस्यैव शाब्दबुद्धिहेतुत्वात्। न च=नहीत्यर्थः। एतद्वाक्यार्थबोधात्=नाज्झलाविति वाक्यार्थबोधात्। तन्निश्चयः=सवर्णपदार्थनिश्चयः तुल्यास्य सूत्रार्थबोधो यद्यपि प्राग्भवति तथापि निश्चितो न सम्भवतीति तस्याप्रवृत्तिः।

---

सवर्णस्य चाप्रत्ययः' इस में अण् पर णकार तक लिया जाता है। इसमें प्रमाण "उरृत्" इस सूत्र में तपर ग्रहण। चुरादिण्यन्त संशब्दनार्थक अर्थात् उद्घोषार्थक कॄत् धातु से लुङ् लकार करने पर अचीकृतत् इसमें चङ् परक णिपरे रहते, उपधाभूत दीर्घ ॠकार के स्थान पर "उरृत्" इस सूत्र से ह्रस्व ऋकार होता है, अतः तपर करना चाहिये। यदि पूर्व णकार तक ही अण् प्रत्याहार मानें तो "उरृत्" इस सूत्र में उद्देश्य विधेय दोनों ह्रस्व ऋकार है। ऋकार का अण् प्रत्याहार में ग्रहणाभाव होने से भिन्नकाल दीर्घादि का ग्रहण न होने से ह्रस्व ऋकर में न स्थानिता है, और न आदेशता, तपरकरण व्यर्थ है, तत्सामर्थ्य से कल्पना करेंगें कि "अणुदित्सवर्णस्य चाप्रत्ययः" इस सूत्र में अण् पर णकार तक लिया जाता है।

यदि कहो कि "तपरस्तत्कालस्य" इस सूत्र से ऌकार ग्रहण हो, इसलिए तपर ग्रहण करते है, तो नहीं कह सकते, क्योंकि "स्थानेऽन्तरतमः" परिभाषा की प्रवृत्ति हो जाने से ऋकार के स्थान पर ऌकार नहीं होगा। ऌकार ग्रहण करने में कोई फल नहीं है, अतः तदर्थ तपर करना व्यर्थ है। यदि कहो कि ग्राहक सूत्र में पर णकार तक अण् प्रत्याहार लिया जाता है, यह ज्ञापन हो जाने पर भी "भाव्यमानेन सवर्णानां ग्रहणन्न" इस परिभाषा से सवर्ण ग्रहणाभाव प्राप्त है, अतः स्वविषय में

"हो ढः" ( पा० सू० ८।२।३१ ) इत्युपलक्षणं, रमास्वित्यत्र षत्वं, वागाशीरित्यत्र "झयो हः" ( पा० सू० ८।४।६२ ) इत्याकारस्य घकारः, दासीष्टेत्यादौ "दादेः" ( पा० सू० ८।२।३२ ) इति घत्वं च नेति बोध्यम्। यदि तु विवृतमूष्मणा-

रमास्वित्यत्र षत्वमिति। सर्वस्याप्येकया युक्त्या वारणेनापाद्यमानेऽर्थे न्यायानादरादेवमुक्तम्॥

षत्वमिति। अत्र षत्वस्यासिद्धत्वादादौ ढत्वं ततः "षढोः कः सि" इति कत्वम् ततःषत्वस्य प्राप्तिरिति बोध्यम्। ननु ढत्वादीनामसिद्धत्वात्संयोगान्तलोपः, प्राप्नोत्येव कुतोनोक्तमत आह—सर्वस्येति। एकया युक्त्या=आकारप्रश्लेषरूपयुक्त्या। न्यायानादरादिति।

चारितार्थ्याभाव होने से तपर ग्रहण व्यर्थ है तो नहीं कह सकते। क्योंकि तपरत्वाभाव में यदि "उऋत्" इस सूत्र से आदेश का विधान नहीं करेंगे तो अचीकृतत् इत्यादि में इरादि की प्रवृत्ति हो जाने से दीर्घ ऋकार का स्वरूप ग्रहण नहीं होगा, आदेश के द्वारा अपहार हो जाने से। सूत्र के रहने पर दीर्घ ऋकार का स्वरूप ग्रहण होगा। अर्थात् आदेशान्तर निवृत्त्यर्थत्व मात्र होने से अपूर्वबोध्यत्व नहीं रहेगा। अतः तपर करना आवश्यक है, तपर करने पर तो विधीयमानता भी है। क्योंकि तपर करने पर दीर्घादि को ह्रस्व विधान करने से अपूर्व बोध्यत्वरूपाविधीयमानता रहेगी।

यद्यपि "नाज्झलौ" यह सूत्र आक्षरसमाम्नायिकों का ही निषेध करता है "अणुदित्सवर्णस्य चाप्रत्ययः" इस शास्त्र की "नाज्झलौ" इस शास्त्र के पूर्व अनिष्पत्ति होने से, तथा च हकारेण आकार का ग्रहण हो जाने से "विश्वपाभिः" यहाँ पर "होढः" से ढत्व होना चाहिये, तथापि "नाज्झलौ में आकार का प्रश्लेष होने से हकार का आकार सवर्ण न होने से ढत्व नहीं होता।

ग्राहक शास्त्र तो आचार्य ने पढ़ा ही है; मनोरमाकार का अनिष्पत्ति कहना उचित नहीं; इस आशङ्का को वारण करने के लिये शब्दरत्नकार कहते हैं। प्रथम वर्णों का उपदेश हुआ, ज्ञात की सञ्ज्ञा की जाती है, अतः उपदेश के अनन्तर इत्सञ्ज्ञा हुई। इत्सञ्ज्ञा के उत्तर "आदिरन्त्येन" से प्रत्याहार, प्रत्याहार के उत्तर सवर्णसंज्ञा, सवर्णसंज्ञा के उत्तर "अणुदित्सवर्णस्य चाप्रत्ययः" इसका वाक्यार्थबोध होता है। पूर्वोक्त समूहयुक्त अणुदित् सूत्र से "अस्य च्वौ" इत्यादि में सवर्णों का ग्रहण होता है, वाक्यार्थ ज्ञान में पदार्थ ज्ञान कारण होता है, इत्येतन्मूलक वाक्यापरिसमाप्ति न्याय से। इसका भाव यह है कि "आदिरन्त्येन" इससे प्रत्याहार की सिद्धि हो जाने पर "नाज्झलौ" इसका वाक्यार्थ बोध हो जाने पर निर्णीत "नाज्झलौ" का विषय परिहारपूर्वक "तुल्यास्यप्रयत्नं सवर्णम्" से सवर्णपद बोध्यत्व निश्चय हो जाने पर "अणुदित्" सूत्र से सवर्णों का ग्रहण होता है। अन्यथा बाधक की सम्भावना होने से "तुल्यास्यप्रयत्नं सवर्णम्" का शाब्दबोध नहीं होगा। क्योंकि अप्रामाण्य ज्ञान से अनाक्रान्त शक्ति ज्ञान ही शाब्दबोध का कारण होता है। "नाज्झलौ" इस सूत्र के वाक्यार्थ बोध के पूर्व सवर्ण पदार्थ का निश्चय नहीं है। जो यह कहते हैं कि निषेध शास्त्र के वाक्यार्थ बोध के पूर्वविधिशास्त्र का वाक्यार्थ बोध ही नहीं होगा, यह युक्त नहीं पदार्थोपस्थिति ( पदार्थ ज्ञान ) हो जाने पर वाक्यार्थबोध में कोई बाधक न होने से। अभाव ज्ञान में प्रतियोगी ज्ञान कारण होने से निषेधशास्त्र को विधिशास्त्र की अपेक्षा रहने पर भी विधिशास्त्र को निषेधशास्त्र की अपेक्षा में कोई प्रमाण नहीं।

"नाज्झलौ" में आकार का प्रश्लेष हो जाने से रमासु यहाँ पर षत्व नहीं होता। वस्तुतस्तु षत्व असिद्ध हो जाने पर प्रथम आकार को ढत्व होगा उसको 'षढो कः सि' से कत्व होगा तब षत्व की प्राप्ति है।

मित्यत्र ईषदित्यनुवर्त्य, स्वराणां चेत्यत्र निवर्त्य, प्रयत्नभेदो व्याख्यायते, तदा "नाज्झलौ" इति सूत्रं माऽस्त्विवति भाष्ये स्थितम् ।

"वृद्धिरादैच्" ( पा० सू० १।१।१ )॥ ऐजिह द्विमात्र एव, तात्परत्वात्, तेन कृष्णैकत्वमित्यत्र त्रिमात्रो न। एवमुत्तरसूत्रेऽपि। तेन गङ्गोदकमित्यादौ त्रिमात्रो न ।

"भूवादयो धातवः" ( पा० सू० १।३।१ )॥ भूश्च वाश्चेति द्वन्द्वः। आदिशब्दयोर्व्यवस्थाप्रकारवाचिनोरेकशेषः। भूवौ आदि येषामिति वहुव्रीहिः। भूप्रभृतयो वासदृशाः। सादृश्यं च क्रियावाचकत्वेनेत्यभिप्रेत्याह-क्रियावाचिन इति।

क्रियावाचिनः किम् ? "याः पश्यसि" इत्यादौ धातुत्वं मा भूत्। सति हि तस्मिन्, "आतो धातोः" ( पा० सू० ६।४।१४० ) इति स्यात्। भ्वादयः किम् ?

---

भाष्ये स्थितमिति। अनेनाकारप्रश्लेषे मानं दर्शितम्।

सादृश्यं चेति। वाधातौ वासादृश्यं च प्रयोगभेदेन बोध्यम्। आतो धातोरिति। न च

---

न्यायस्य पूर्वत्रासिद्धमिति युक्तेः प्रवृत्तिविषयेऽनादरादित्यर्थः। मानं दर्शितमिति। आरम्भपक्षे दीर्घाकारस्य हकारेण सावर्ण्यं प्रसज्यते, प्रत्याख्यानपक्षे च प्रयत्नभेदेन, न तयोस्तदिति फलभेदेन प्रत्याख्यानासङ्गत्या तद्भाष्यप्रामाण्येनारम्भपक्षे, आकारः प्रश्लेषणीय इति। एवं प्लुताकारोऽपि प्रश्लेषणीय एतद्भाष्यप्रामाण्यात्।

भूश्च वा श्चेति—भूश्चवाश्च भूवौ, आदिश्च आदिश्च आदी, भूवौ आदी येषान्ते भूवादयः। भूत्वावच्छिन्नस्याभेदसम्बन्धेन व्यवस्थावाचकादित्वावच्छिन्नेऽन्वयस्तया वात्वावच्छिन्नस्य स्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धेन सादृश्यार्थकादित्वावच्छिन्नेऽन्वयः।

---

यद्यपि ढत्वादि असिद्ध हो जाने से संयोगान्त लोप प्राप्त है, तथापि आकार प्रश्लेषरूप एक युक्ति से वारण, तथा आपद्यमान अर्थ में न्याय का अनादर होने से, इस प्रकार कहा। वागाशीः, यहाँ पर "झयोहः" इससे आकार को घकार तथा दासीष्ट इत्यादि में "दादेः" इससे आकार को घत्व नहीं होता। विवृतमूष्मणाम् यहाँ पर ईषद् का अनुवर्तन तथा स्वर का निवर्तन करने पर शल् प्रत्याहार बोध्यवर्णों का ईषद्विवृत तथा अच् प्रत्याहारबोध्य वर्णों का विवृत प्रयत्न होगा। तथा च प्रयत्न भेद हो जाने से अच् प्रत्याहारबोध्य वर्णों की हल् प्रत्याहार बोध्य वर्णों के साथ सवर्ण सञ्ज्ञा नहीं होगी। नाज्झलौ इस सूत्र का प्रत्याख्यान इस प्रकार भाष्य में स्थित है।

"नाज्झलौ" का प्रत्याख्यान भी आकार के प्रश्लेष में प्रमाण है। अन्यथा आरम्भ पक्ष में दीर्घाकार हकार की सवर्णसञ्ज्ञा होगी प्रत्याख्यान पक्ष में प्रयत्न भेद होने से सवर्ण सञ्ज्ञा नहीं होगी, फल भेद रहने पर प्रत्याख्यान असङ्गत हो जायगा, अतः आरम्भ पक्ष में आकार का प्रश्लेष करना चाहिये, तथा हे यियाश्सो भाष्य के उदाहरण से प्लुताकार का भी प्रश्लेष करना चाहिए।

ऐच् यहाँ पर द्विमात्र ही लिया जाता है, तकार से पर होने के कारण, अतः "कृष्णैकत्वम्" यहाँ पर त्रिमात्र नहीं होता। इसी प्रकार "अदेङ् गुणः" यहाँ पर भी एङ् द्विमात्र ही लिया जाता है, अतः गङ्गोदकम् में त्रिमात्र नहीं होता।

भू और वा का द्वन्द्व समास होता है। व्यवस्थावाची आदि शब्द का तथा प्रकार वाची आदि

हिरुक्, पृथगित्याद्यव्ययानां, शिश्ये इति भावार्थतिङन्तस्य च मा भूत् । स्तम्भ्वादीनामुदित्करणेन सौत्राणां धातुत्वं ज्ञाप्यते । चुलुम्पादीनां तु "बहुलमेतन्निदर्शनम्" इति गणसूत्रेण सङ्ग्रहः ।

---

स्यर्थनिमित्तकटापो बहिरङ्गासिद्धत्वम् । "नाजानन्तर्य" ( परि० ५१ ) इति निषेधात् । ततोऽपि बहिर्भूतसंख्यानिमित्तकविभक्तिनिमित्तकभसञ्ज्ञानिमित्तकत्वे लोपस्य बहिरङ्गत्वाच्च, अर्थनिमित्तकबहिरङ्गत्वस्याभावाच्च । नाप्ययं लाक्षणिकः ।

नकारजावनुस्वारपञ्चमौ झलि धातुषु ।
सकारजः शकारश्चेर्षात्टवर्गस्तवर्गजः ॥ १ ॥

---

ननु एकधर्मावच्छिन्नस्यैकधर्मावच्छिन्नसंसर्गेणैकधर्मावच्छिन्नेऽन्वयरूपसाहित्याभावाद् द्वन्द्वो न प्राप्नोतीति चेन्न आद्यन्तौ इत्यत्रेव स्वतादात्म्यस्वनिष्ठप्रतियोगितानिरूपकत्वैतदन्यतररूपस्वविशिष्टत्वरूपैकसम्बन्धेन समुदायस्य समुदायेऽन्वयेन साहित्यसत्वाद्द्वन्द्वस्य सुवचत्वात् । न च वा सदृशा, इत्यत्र क्रियावाचकत्वस्यैव सर्वत्र सादृश्यनियामकत्वंमूलकाराद्यभिप्रेतम्, तच्च न सम्भवति सादृश्यप्रतियोगितावच्छेदकधर्मव्यापकधर्मस्यैव सर्वत्र सादृश्यनियामकत्वेन दृष्टतया प्रकृते सादृश्यप्रतियोगितावच्छेदकवात्वस्य तु अव्ययवा शब्दे सत्वात् क्रियावाचकत्वस्य च तत्रासत्वेनाव्यापकत्वादितिवाच्यम् परस्परसाहचर्येण क्रियावाचकत्वस्य लाभात् । तथाहि वा शब्दोऽसत्ववाची उपलभ्यते, तत्साहचर्याद् भूशब्दोऽप्यसत्ववाची, एवात्र गृह्यते । असत्ववाचीभूशब्दश्च क्रियावाचक एवेति तत्साहचर्याद्वाशब्दोऽपि क्रियावचक एवेति क्रियावाचिन इत्यर्थलाभः ।

नन्वेवमपि क्रियावाचिन इत्यस्य वृत्त्याऽनुपस्थितत्त्वाच्छाब्देऽप्रवेश इति चेन्न व्यञ्जनाख्यवृत्त्यैव तदुपस्थितेरिति । ननु "द्वन्द्वघटकपदार्थानामभेदान्वयाभावात्" क्रियावाचिनः भ्वादयः धातुसञ्ज्ञकाः भवन्तीत्यर्थो न युक्त इति चेन्न "भूवादयः" इत्यस्यावृत्तिकरणेनादोषात् तथा च एकस्यार्थो भविष्यति भ्वादित आरभ्य वादिपर्यन्तम् । वादित-

---

शब्द का एक शेष होकर तब बहुव्रीहि समास होता है । यदि कहो कि एक धर्मावच्छिन्न का एक धर्मावच्छिन्न सम्बन्ध से एक धर्मावच्छिन्न में अन्वय रूप साहित्याभाव होने से द्वन्द्व नहीं होगा, तो यह नहीं कह सकते, क्योंकि भूवौ इस समुदाय का एक धर्म होता है समुदायत्व, तदवच्छिन्न हुआ समुदाय । आदि इस समुदाय में एक धर्म हुआ समुदायत्व, तदवच्छिन्न हुआ समुदाय, उसका एक धर्मावच्छिन्न सम्बन्ध = एक धर्म है अभेदत्व, तदवच्छिन्न संसर्ग है अभेद, इस सम्बन्ध से अन्वय होने से साहित्य विद्यमान है ।

यथासंख्य सूत्र के सहकार से भू इसका व्यवस्था वाचक आदि के साथ योग होगा, वा इसका प्रकार वाचक आदि शब्द के साथ योग होगा । "आद्यन्तौ टकितौ" की तरह, यदि कहो कि "क्रमिकाणां क्रमेणैवान्वयः समुदाहृतः, शत्रुं मित्रं विपत्तिञ्च जय रञ्जय भञ्जय" । इस लौकिक न्याय से कार्य चल जायगा तो नहीं कह सकते, क्योंकि द्वन्द्व समास में इसकी प्रवृत्ति नहीं होती, अतएव भाष्यकार ने कहा, "अजाविधनौ देवदत्तयज्ञदत्तौ कस्याजाः कस्यावयः ।" इसका अभिप्राय है समुदाय का समुदाय में अन्वय रहने पर लौकिक न्याय की प्रवृत्ति नहीं होती "अजावीधनौ" में अजावी समुदाय का धन समुदाय में अन्वय है ।

आरभ्यक्रयादिपर्यन्तम् । अपरस्यार्थो भविष्यति भू सदृशः, वा सदृशः, सादृश्यञ्च क्रियावाचकत्वेन परस्परसमभिहारात् । अपरे तु यद्यपि भ्वादय इत्यस्यावृत्तिर्न्याय्या वा शब्दो मध्ये मङ्गलार्थं इति भाष्यस्वारस्यात् । सादृश्यप्रतियोगिसमर्पकश्च भूशब्दः क्रियावाचक एव वा शब्दवत्, तथापि समासमध्ये वा शब्दप्रवेशस्य सौत्रत्वमावृत्तिश्चेति क्लेशाधिक्यादेवमुक्तम् ।

नन्वेवं सादृश्यस्य तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वमिति लक्षणेन, वा भिन्नत्वं वाधातोर्न स्यात् तथा च वाधातोर्धातुसंज्ञा न स्यादत आह वाधाताविति । प्रयोगभेदेनेति वाति वातः इत्यादिषु । वातीत्येतद्घटक वाशब्दस्य यथा क्रियावाचकत्वन्तथा वात इत्येतद्घटक वा शब्दस्यापि "प्रत्युच्चारणं शब्दो भिद्यते" इति सिद्धान्तात् । स्त्र्यर्थनिमित्तकेति । बह्वपेक्षस्य बहिरङ्गत्वात् ।

नाजानन्तर्ये इति । अच आनन्तर्यम् = अन्यनिरूपितव्यवधानराहित्यम्, यस्मिन्नन्तरङ्गे, तदजानन्तर्यम्, इति व्यधिकरणबहुव्रीहिः । बहुव्रीहिघटके 'अच'इत्यत्र षष्ठी च सम्बन्धसामान्ये ! बहिष्ट्वम्=बहिरङ्गत्वम् । तथा च सप्तम्यन्तपञ्चम्यन्तान्यतरबोध्यानन्तर्यविशिष्टोऽच्तदुद्देश्यकेऽन्तरङ्गे कर्त्तव्ये बहिरङ्गासिद्धत्वन्नेत्यर्थिकया "नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिरितिपरिभाषया निषेधात् । अत्र "षत्वतुकोरिति" सूत्रस्थं तुग्ग्रहणं ज्ञापकम् अन्यथा अधीत्य, प्रेत्येत्यादौ समासोत्तरं ल्यप्प्रवृत्त्यां पूर्वं समासे जाते तत्र संहितायाः नित्यत्वाल्ल्युत्पत्तिपर्यन्तमप्यसंहितायाऽवस्थानासम्भवेनैकादेशे ल्यपि तुगपेक्षया पदद्वयसम्बन्धिवर्णद्वयापेक्षैकादेशस्य बहिरङ्गतयासिद्धत्वेन तद्वैयर्थ्यं स्पष्टमेव । यद्यप्यर्थपेक्षत्वमुभयत्र, तथापि लोपस्याधिकापेक्षत्वम्, प्रकृतिप्रत्ययसमुदायापेक्षत्वात् । किञ्चटापोलिङ्गापेक्षा तच्च लिङ्गं प्रथमत उपस्थितं भवति सङ्ख्या तु तदुत्तरं प्रतीता भवतीति टाप एवान्तरङ्गत्वमिति भावः ।

---

तथा च अर्थ होगा भू प्रभृति का सदृश सादृश्यत्वञ्च क्रियावाचकत्वेन लेंगे, परस्पर साहचर्य से जैसे भू शब्द दो प्रकार का होता है भूम्यर्थक तथा सत्तार्थक, इसी प्रकार वा शब्द दो प्रकार का होता है, विकल्पार्थक तथा गत्याद्यर्थक दोनों प्रकार का वा शब्द लिङ्ग संख्या अनन्वयी असत्त्वभूत है, तत्साहचर्य से भू शब्द असत्ववाची सत्तार्थक लिया जायगा, वह है क्रियावाची । क्रियावाची भू शब्द के साहचर्य से वा शब्द गत्याद्यर्थक ही लिया जायगा, वासादृश्य क्रियावाचकत्वेन लिया जायगा अतएव कहा क्रियावाचक जो भ्वादि उसकी धातुसञ्ज्ञा होती है, वा धातु में वा सादृश्य प्रयोग भेद से लेना जैसे वाति घटक वा शब्द में क्रियावाचकत्व है, उसी प्रकार वातः घटक वा शब्द में क्रियावाचकत्व है । क्रियावाचक के अभाव में अर्थ होगा भ्वादि की धातुसञ्ज्ञा होती है इस अर्थ में यत् शब्द से शस् विभक्ति अनुबन्धलोप अकारान्तादेश पररूप टाप् अनुबन्ध लोप दीर्घ हो जाने पर या अस् इस स्थिति में या इसकी धातुसञ्ज्ञा हो जायगी, क्योंकि भ्वादि प्रभृति में या धातु का पाठ है, यह भी या है, धातु सञ्ज्ञा हो जाने पर "आतो धातोः" इसकी प्रवृत्ति हो जाने से अनिष्ट रूप बनने लगेगा ।

यदि कहो कि स्त्र्यर्थनिमित्तक टाप् बहिरङ्ग होने से असिद्ध हो जायगा तो नहीं कह सकते क्योंकि "नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः" इस परिभाषा के बल से बहिरङ्ग सिद्ध रह जायगा । अर्थात् "आतोधातोः" में भस्य का अधिकार होने से यकारादि अजादि प्रत्यय का आक्षेप हो जायगा तथा च

इत्यभियुक्तोक्तेर्म्वादिपु लाक्षणिकानामपि दर्शनेन तद्विषये तत्परिभापाया अप्रवृत्तेः। "आतो धातोः" (पा०सू० ६।४।१४०) इत्यत्र प्रतिपदोक्त आकारो गृह्यत इति तु वक्तुमप्य-

ननु मत्वावच्छिन्नम्प्रति विभक्तित्वेन कारणतेत्येवं कार्यकारणभावो न सम्भवति 'वृषण्वसुः' वृषणश्वः इत्यत्र व्यभिचारात्। यदि भसंज्ञासामान्यं प्रतिविभक्तेर्निमित्तत्वाभावेऽपि लोपविधायकशास्त्रप्रवृत्तिहेतुभसंज्ञाविभक्तिनिमित्तकैवेतिविभाव्यते तदा याः-पश्यसि इत्यादौ भसंज्ञानिमित्तविभक्तिनिमित्तकपररूपनिमित्तकत्वेन टापोलोपाद् बहिरङ्गत्वमपि सम्भाव्यत इत्यत आह, अर्थनिमित्तकेति। अनाश्रयणाच्चेत्यर्थः।

अभावाच्चेति। अतएव त्रयादेशे 'स्नन्तस्य प्रतिषेधो वक्तव्यः' इति स्थानिवत् सूत्रस्थं वार्तिकं सङ्गच्छते। तद्धि त्रि आम् इति स्थिते त्रयादेशतिस्रादेशयोः प्राप्तयोः परत्वात्तिस्रादेशे स्थानिवद्भावेन त्रिशब्दत्वमादाय त्रयादेशवारणाय। अर्थनिमित्तकबहिरङ्गत्वस्याश्रयणे तु तिस्रादेशस्य स्त्रीत्वनिमित्तकत्वेन बहिरङ्गतया अन्तरङ्गत्वात् पूर्वं त्रयादेशे ततस्तिस्रादेशप्रवृत्तौ लक्ष्ये लक्षणन्यायेन पुनस्त्रयादेशाप्राप्त्या तद्व्यर्थं स्यात्। एवञ्चान्तरङ्गपरिभाषायामङ्गशब्देन शब्दरूपं निमित्तमेव गृह्यते, शब्दशास्त्रेतस्यैव प्राधान्यात्। तेनार्थनिमित्तकस्य न बहिरङ्गत्वमिति सिद्धयति।

अतएव "न तिसृचतसृ" इति निषेधश्चरितार्थः। अन्यथा स्त्रीत्वरूपार्थनिमित्तकतिस्रादेशापेक्षयाऽन्तरङ्गत्वात् पूर्वं दीर्घे ततस्तिस्रादेशे लक्ष्येलक्षणन्यायेन पुनर्दीर्घाप्रवृत्तौ तद्वैयर्थ्यं स्पष्टमेव लक्षणशब्दोऽत्र 'भामा' इतिवदेकदेशशक्त्या लक्षणप्रतिपदोक्तपरिभाषापरस्ततोऽर्हतीत्यर्थे ठञ् लक्षणप्रतिपदोक्तपरिभाषाया अविषय इत्यर्थः। तदविषयत्वे हेतुमाह—नकारजाविति। तद्विषये-धातुसंज्ञाविषये। दर्शनेनेति। एवञ्च येषां लक्षण-

सप्तम्यन्त बोध्य हुआ अस्, उससे अव्यवहित पूर्व अच् हुआ आकार, तदुद्देश्यक अन्तरङ्ग "आतोधातोः" इससे आकार लोप कर्तव्यता में बहिरङ्ग टाप् असिद्ध नहीं होगा। अर्थात् 'अज्निष्ठान्यानन्तर्ये निमित्तेऽन्तरङ्गे कर्त्तव्ये बहिरङ्गमसिद्धन्न भवति।' या अस् इस अवस्था में अच् है, या घटक आकार, तन्निष्ठ दूसरा अव्यवहित निमित्त है अस् घटक अकार, एतादृश अन्तरङ्ग "आतोधातोः" होने से बहिरङ्ग असिद्ध नहीं होगा। यहाँ पर टाप् की अपेक्षा बहिर्भूत संख्या निमित्तक, विभक्ति निमित्तक, भसञ्ज्ञा निमित्तक, लोप ही बहिरङ्ग है। और अर्थ निमित्तक बहिरङ्गत्व लिया भी नहीं जाता। शब्द शास्त्र में शब्द का प्राधान्य होने से "असिद्धं बहिरङ्गमन्तरङ्गे" इस परिभाषा में निमित्त बोधक अङ्ग शब्द से शब्द रूप ( = शब्दाभिन्न अर्थात् शब्द ) निमित्त लेते हैं, अर्थ निमित्तक बहिरङ्ग नहीं लिया जाता तभी "नतिसृचतसृ" यह निषेध चरितार्थ होता है। अन्यथा "त्रिचतुरोः स्त्रियां तिसृचतसृ" इस सूत्र से तिस्रादेश नहीं होगा, स्त्रीत्वरूपार्थनिमित्त होने से, अन्तरङ्गत्वात् त्रयादेश हो जायगा "न तिसृचतसृ" निषेध व्यर्थ है।

यदि कहो कि "याः पश्यसि" घटक या लाक्षणिक है। अर्थात् सूत्रानुसन्धानजन्य ज्ञान विषय है, साक्षादुच्चारितत्व नहीं है। तथा च "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्" इस परिभाषा के के बल से या की धातु सञ्ज्ञा नहीं होगी, तो यह नहीं कह सकते, लक्षणप्रतिपदोक्त परिभाषा का अविषय होने से। धातुओं में झल्परक अनुस्वार और पञ्चम वर्ण को नकारज समझना चाहिये, जैसे स्रंसु, अन्न, इत्यादि में अनुस्वार नकार नकारज हैं। चकार परक शकार को सकारज समझना

शक्यम्। 'पशुपः' इत्यसिद्ध्यापत्तेः। पशुं सनोतीति विट्, "विड्वनोः" (पा०सू०६।४।४१) इत्यात्वम्। "आतोऽनापः" इति वार्त्तिकमते तु विकल्पार्थकनिपातवाशब्दस्य धातुत्वे प्रातिपदिकत्वाभावात्सुबभावे पदत्वानापत्तिर्दोषः। क्रियात्वं-साध्यत्वेन प्रतीयमानत्वम्। साध्यत्वं चोत्पाद्यमानत्वमेवेत्यन्यत्र विस्तरः। हिरुगित्यादि। एषां क्रियासमानाधिकरण-

प्रवृत्तिज्ञानोत्तरकालिकज्ञानविषयस्वरूपकत्वं तेषामपि धातुपाठे पाठसामर्थ्येन धातुसंज्ञा-विधौ तस्याः परिभाषाया अप्रवृत्तिरिति भावः। न च भूवादय इति सूत्रदृष्ट्या तेषाम-सिद्धत्वान्न लाक्षणिकानां दर्शनमिति परिभाषाप्रवृत्तिः स्यादेवेति वाच्यम् यादृशानुपूर्वी-कस्य धातुसंज्ञाऽभिप्रेता तादृशानुपूर्व्यवच्छिन्नस्य ज्ञानं धातुसंज्ञाप्रवृत्तिप्राक्कालिकं भवति। ततोऽसिद्धत्वारोपेऽधिष्ठानज्ञानं कारणमस्ति अधिष्ठानस्यपरस्य ज्ञाने सत्वे हि, परत्व-ज्ञानसापेक्षपूर्वत्वज्ञानं धातुसंज्ञाविधायकसूत्रविशेष्यकं भवति ततोऽसिद्धत्वारोप इति "नश्चापदान्तस्य" इत्यादि सूत्रज्ञानसापेक्षत्वमस्त्येवेत्याशयात्।

यत्तु वर्णग्रहणे "आदेच उपदेशे" इति सूत्रस्थोपदेशग्रहणाल्लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्तते इति तन्न ओत् सूत्रस्थभाष्यविरोधात्। तत्रहि—हे चित्रगोऽग्रम् इत्यत्र 'ओत्' सूत्राप्रवृत्तिः परिभाषयासाधिता तस्मात् "आदेच" इति सूत्रस्थोपदेशग्रहणं परिभाषाया-अनित्यत्वएव ज्ञापकम्! वर्णग्रहणेऽपि तस्याः क्वचित्प्रवृत्तिस्वीकारादेव "पशुषः" इत्यस्य चिकीर्षति, जिहीर्षति इत्यस्य च सिद्धिः।

आद्ये पशुं सनोतीति विग्रहे "जनसन" इति विट् प्रत्यये "विड्वनो"रित्यात्वे आकारस्य लोपो, लाक्षणिकस्यापि भवति। अन्त्ययोः "अज्झनगमां सनि" इति दीर्घेऽपि "इट् सनि वा" इतीड्विकल्पो न ऋकारस्य लाक्षणिकत्वात्। अनित्यत्वस्यफलान्तरन्तु 'वापयति, क्रापयति' इत्यादौ पुक्सिद्धिरिति। तदेव आह—आत इति। ननु क्त्वः, इनः, इत्यादिसिद्ध्यर्थम् "आतोऽनाप इति वार्तिकक्तोक्तं तद्विरोधात् कथं 'याः पश्यसि' 'इत्यत्राकारलोपस्य प्राप्तिरत आह—आतोनाप इति। पदत्वानापत्तिरिति। ततश्च वा गच्छतीत्यत्र "तिङतिङ" इति निघातस्वरानापत्तिरितिभावः। क्रियात्वमिति। क्रिया-

चाहिये यथा वृश्चादि में शकार सकारज हैं। रेफ पकार से परे टवर्ग तवर्गज समझना चाहिये, जैसे ओर्णुञ् ष्ठा इत्यादि में टवर्ग तवर्गज है। धातुसञ्ज्ञाविषय में अभियुक्तों का यह कथन होने से भ्वादि में लाक्षणिकों की धातुसञ्ज्ञा होने से लक्षणप्रतिपदोक्त परिभाषा की प्रवृत्ति होती है।

यदि कहो कि "आतोधातोः" यहाँ पर प्रतिपदोक्त आकार का ग्रहण होगा तो नहीं कह सकते क्योंकि "असिद्धवत्" सूत्रस्थ पशुषः इसका साधुत्व नहीं होगा, पशुं सनोतीति इस विग्रह में "जन सनखनक्रमगमोविट्" इससे विट् प्रत्यय हो जाने पर "विड्वनोरनुनासिकस्यात्" इससे आकारान्ता-देशादि हो जाने पर पशुषा शब्द से शस् विभक्ति में "आतोधातोः" से आकारलोप तथा अन्य कार्य हो जाने पर पशुषः का साधुत्व होता है, इसकी सिद्धि नहीं होगी।

यदि कहो "क्त्वः इनः" इत्यादि की सिद्धि के लिए वार्तिककार ने "अतोऽनापः" यह कहा, याः पश्यसि यहाँपर आप् ही है, इसका विरोध होने से आकार का लोप नहीं होगा तथा च क्रिया-वाची न कहो तो भी दोष नहीं है, यह नहीं कह सकते, क्योंकि विकल्पार्थक निपात वा शब्द की धातुसंज्ञा हो जानेपर प्रातिपदिकत्वाभाव होने से सुबभाव होने पर पद संज्ञा नहीं होगी। तथा च

त्वाल्लिङ्गाद्यनन्वयित्वाच्च तदर्थस्य क्रियात्वमित्यभिमानः। एषामव्ययेषु पाठस्तु अप्रातिपदिकत्वेऽप्यकजर्थः स्यात्। एतेन तेषु पाठसामर्थ्याद्धातुत्वाभाव इत्यपास्तम्। नन्वेषां क्रियाकाङ्क्षादर्शनेन न क्रियावाचकत्वमत आह—शिश्ये इति। कालोऽपि धात्वर्थ एवेति न क्रियावाचकत्वहानिः। तस्य च धातुत्वे "आदेच उपदेश" (पा०सू० ६।१।४५) इत्यात्वं स्यात्। तद्धि अनैमित्तिकं धातुत्वनिमित्तकं चेति स्पष्टमेव। अत्र च प्रत्ययस्यैव धातुत्वापत्तिर्बोध्या, तिङन्तस्य तूपदेशाभावान्नात्वप्रसक्तिरित्याहुः। ननु षष्ठे प्रकृतसूत्रे धातुग्रहणासम्बन्ध उक्तो भाष्ये इति न तद् धातुत्वनिमित्तकम्, किं चाशितीति प्रसज्यप्रतिषेधेऽपि शित्परत्वयोग्यस्यैवात्वविधानान्नात्रात्वप्रसक्तिः,। अपि च वासादृश्यसन्यानभिहितक्रियावाचकत्वेनेति न दोषोऽत आह—चेति। सूत्रशेषभाष्योक्तेष्वाणवयति, वट्टयतीत्यादिषु च

त्वमुत्पाद्यमानत्वमिति। ततश्च साध्यत्वज्ञाने क्रियात्वज्ञानं, तज्ज्ञाने च साध्यत्वज्ञानमिति परस्परशरीरे परस्परस्य पात इत्यन्योन्याश्रयस्तद्वारणाय साध्यत्वं कालान्वयितावच्छेदकरूपवत्वं क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपवत्वं वेत्यर्थः। अयं भावः "क्रियते" इति क्रिया। तत्र केन क्रियते किञ्च क्रियते इत्याकाङ्क्षायां प्रत्यासक्त्या अवयवानां क्रमेणोत्पत्त्या तद्द्वारा यत्क्रियते = साध्यते, समूहरूपं वस्तु तत्क्रियेत्युच्यते।

ननु हिरुगाद्यर्थस्योक्तरीत्या क्रियात्वाभावादेव सुबभावे सिद्धेऽव्ययेषु पाठवैयर्थ्यापत्तिरत आह एषामव्ययेषु इति। शिश्ये इतीति। लकारेष्वष्टाध्याय्यां लिट एवादौ विधानत् पूर्वोपस्थितत्वरूपान्तरङ्गत्वादिति भावः।

ननु शिश्ये इत्यत्र भावार्थतिङः परोक्षभूतकालवाचकत्वेन क्रियावाचकत्वमित्यस्य "सर्वं वाक्यं सावधारणमिति" नियमेन क्रियेतरावाचकत्वे सति क्रियावाचकत्वमित्यर्थात् कथं—क्रियावाचकत्वमत आह—कालोपि। स्वार्थद्रव्यलिङ्गसंख्याकारकभेदेन प्रातिपादिकार्थ-

"वा गच्छति" यहाँ पर "तिङतिङः" इस सूत्र से निघातस्वर नहीं होगा। यह सूत्र अतिङन्त पद से परे तिङन्त को निघातस्वर अर्थात् सर्वानुदात्त करता है। क्रियावाची यह कहने पर भी "विकल्पयति" इस क्रिया के समान निपात वा शब्द से भी विकल्परूपा क्रिया की प्रतीति होती है अतः शब्दरत्नकार लिखते हैं, "साध्यत्वेन प्रतीयमानत्वम्" साध्यत्व क्या है। उत्पाद्यमानत्व तथा च शब्द-शक्ति-स्वभाव से निपात वा शब्द में उत्पाद्यमानता की प्रतीति नहीं होती। भ्वादि के अभाव में वर्जनार्थद्योतक हिरुक्, भिन्नार्थद्योतक पृथक्, आदि अव्ययों की धातुसञ्ज्ञा होने लगेगी। क्रिया के सदृश अर्थ को कहने के कारण लिङ्गादि का अन्वयाभाव होने से वर्जनादि अर्थ में क्रियात्व है अर्थात् वर्जनादिरूपा क्रिया है।

यदि कहो कि धातु सञ्ज्ञा होने पर प्रातिपदिकत्वाभाव होने से ही सुप् का अभाव सिद्ध रहा, अव्यय में पाठ व्यर्थ है, अतः धातुसञ्ज्ञा नहीं होगी, तो नहीं कह सकते, अकच् प्रत्ययार्थ अव्यय में पाठ आवश्यक है। इस कथन से वे परास्त हो गये, जो कहते थे कि अव्यय में पाठ सामर्थ्य से हिरुक् आदि में धातुत्वाभाव होगा। हिरुक् आदि में क्रियान्तराकाङ्क्षादर्शन होने से 'क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपसाध्यत्वविशिष्टक्रियावाचकत्व' नहीं है, अतः इनकी धातुसञ्ज्ञा नहीं होगी, इस अरुचि पर मनोरमाकार लिखते हैं "शिश्ये यह जो भावार्थक तिङन्त है, इसकी धातुसञ्ज्ञा न हो अतः "भ्वादयः" यह कहना चाहिये।

यदि कहो कि "शिश्ये" इस समुदाय से काल की भी प्रतीति होती है, अतः क्रियामात्रवाचकत्वाभाव होने से धातु सञ्ज्ञा नहीं होगी तो नहीं कह सकते, क्योंकि स्वार्थ द्रव्यलिङ्ग संख्या कारक

धातुत्वे शास्त्रविषयतया साधुत्वापत्तिरिति तद्व्यावृत्तये तदिति भावः। उदित्करणेनेति। इदमुपलक्षणम्। तत्प्रकृतिकत्वल्यनुवादेनाङ्विधानेन सार्वधातुके परे विकरणविधानेन च धातुत्वम्। "जुचङ्क्रम्य" (पा० सू० ३।२।१५०) इत्यत्र पठितजोः, "जपजभ" (पा० सू० ७।४।८६) इत्यत्र पठितपशः, ऋतिप्रभृतीनां च केपाञ्चिद्धात्वधिकारविहितकार्योद्देश्यत्वात् बोध्यम्। एतैश्च स्थितस्य तेषां पाठस्य अंशोऽनुमीयते इति भावः। मैत्रेयाद्यन्यसंमतं समाधिमाह—बहुलमिति।

---

पञ्चकवद् धात्वर्थोपि क्रियात्वक्रियाकालसंख्याकारकभेदेन पञ्चकमिति। कालस्यापि धात्वर्थेन क्रियात्वव्यवहार इति भावः। अपिना फलसंग्रहः। पञ्चकं धात्वर्थः तिङ् तु द्योतकोऽतएव तिङ्द्योत्यकालप्रकारक एव बोधः। फलस्यापि क्रियात्वव्यवहारविषयत्वमिष्टमेव। अतएव कर्मणः फलान्वयित्वेऽपि कारकाणां क्रियान्वयित्वमिति व्यवहारस्य न क्षतिः। ननु क्रियावाचकस्य समुदायस्य धातुत्वेऽपि न क्षतिः, न च तिङापत्तिः उक्तत्वात्, आत्वापत्तिरपि नोपदेशाभावादत आह—अत्र चेति। प्रकृतसूत्रे=आदेच उपदेशे इति सूत्रे उक्तः इति। अतएव गोभ्याम् इत्यादावुपदेशव्यावृत्तिप्रदर्शनसङ्गतिः।

**प्रसज्यप्रतिषेधे इति।** पर्युदासे तु प्रत्यये शिद्भिन्ने एवात्वं स्यात्तथाचाकारा-

---

इस प्रातिपदिकपञ्चक की तरह क्रियात्व क्रिया काल संख्या कारक धात्वर्थपञ्चक होने से काल भी धात्वर्थ हैं, अतः क्रियावाचकत्व की हानि नहीं होगी, शिश्ये की धातुसञ्ज्ञा हो जाने पर "आदेच उपदेऽशिति" इससे आत्व होने लगेगा, क्योंकि अशिति यह प्रसज्य प्रतिषेध होने से अनैमित्तिकत्व है, इसमें "लिटिधातोरनाभ्यासस्य" से धातु का अनुवर्तन होने से धातुनिमित्तकत्व है। क्रियावाचक समुदाय में धातुत्व रहने पर कोई क्षति नहीं है, क्योंकि तिङ् होगा नहीं, उक्त होने से "उक्तार्थानामप्रयोगः" इस न्याय की प्रवृत्ति हो जायगी। आत्व भी नहीं होगा, आद्योच्चारणरूप उपदेशाभाव होने से दोषाभाव है, अतः शब्दरत्नाकार लिखते हैं, शिश्ये यहाँ पर प्रत्यय में ही धातुत्वापत्ति जानना तिङन्त में तो उपदेशाभाव होने से आत्व की प्राप्ति नहीं है।

षष्ठाध्यायस्थ "आदेच उपदेशेऽशिति" इस सूत्र में धातु का सम्बन्धाभाव भाष्यकार ने कहा, अतः वह धातुत्व निमित्तक नहीं है, अशिति यह प्रसज्य प्रतिषेध रहने पर भी शित् परत्व योग्य को आत्वविधान होने से, शिश्ये यहाँ पर आत्व की प्राप्ति नहीं है। और भी—सादृश्य भ्वादि में "अन्यानभिहितक्रियावाचकत्वेन' लिया जाता है, शिश्ये में तो प्रत्यय से क्रियावाचकत्व अभिहित है, अतः कोई दोष नहीं, इस अरुचि पर मनोरमाकार ने कहा चेति। "भूवादयोधातवः" इस सूत्र के अन्त में भाष्याकार ने कहा कि आज्ञापनार्थक, आणवयति, वर्तनार्थक वट्टयनि इत्यादि में धातुत्व हो जाने पर शास्त्रविषयता हो जाने से साधुत्व हो जायगा। तथा च यागादि में भी इनका प्रयोग होने लगेगा उसको वारण करने के लिए भ्वादि कहना चाहिये। सूत्र पठित 'स्तम्भु स्तुम्भु' इत्यादि उदित् होने से इनमें धातुत्व का अनुमान किया जाता है। चुलुम्प, ढुण्ढि, विक्लव, इत्यादि का संग्रह 'बहुलमेतन्निदर्शनम्' इस गणसूत्र के बल से होगा, इसका अभिप्राय यह है, कि भाष्यविरुद्ध मतान्तर से भू इत्यादि धातुपरिगणन निदर्शन हैं, अतः चुलुम्प इत्यादि का संग्रह हो जायगा। भावप्रकाशकार तथा भैरवीकार ने तो स्पष्ट लिखा है कि 'बहुलमेतन्निदर्शनम्' यह अप्रमाणिक है। यदि कहो कि उदित् करण धातुत्व का अनुमापक है तो यह असङ्गत है, क्योंकि धातुत्वाभाव में प्रातिपदिक संज्ञा हो जाने पर उससे सर्वनामस्थान परे रहते "उगिदचाम्" इससे नुम्

"चादयः" ( पा० सू० १।४।७५ ) ॥ अद्रव्यार्थाः किम् ? पशुः। लिङ्गसंख्यान्वितं द्रव्यम्। इह तु स्यादेव लोधं नयन्ति पशु मन्यमानाः। पशु इति सम्यगर्थे।

---

सम्यगर्थे इति। न च "लुब्धस्तृषिं नयन्ति पशुं मन्यमाना" इति निरुक्ते पशुमिति सानुस्वारपाठात् तत्र पश्विति लुप्तविभक्तिकं सत्त्ववाचीति वाच्यम्। लोधमित्यनवगतमिति तद्भाष्योक्त्या तन्मात्रनिर्णायके निरुक्ते पशुशब्दांशेऽन्यथापाठे मानाभावात्। स्पष्टं चेदं प्रकृतसूत्रे हरदत्तग्रन्थे दृशधातौ माधवग्रन्थे चेति दिक्।

---

न्ताद्विधीयमानः प्रत्ययः एजन्तान्न स्यादत आह—प्रसज्यप्रतिषेधेऽपीति। वस्तुतो धातुत्वमेव नेत्याह—अपि चेति वा सादृश्यमिति। स्वादीनामिति शेषः। नदोष इति। 'शिश्ये इत्यादौ धातुत्वापत्तिरूपदोषोनेत्यर्थः। आणवयतीति=आज्ञापयति। वट्टयति=वर्तयति। आदिपदेन वड्ढयति=वर्द्धयति। साधुत्वापत्तिरिति। ननु विधिशास्त्रादेव साधुत्वं भवति नतु संज्ञाशास्त्रादनेन कथं साधुत्वापत्तिरिति चेन्न यत्किञ्चित्साधुत्ववत्येव शास्त्रं प्रवर्तते केनचिल्लोके प्रयोगार्हत्वरूपं साधुत्वं भवति केनचिच्छास्त्रप्रवृत्त्युपयोगिरूपसाधुत्वं भवत्यतः भू एधादीनां साधुत्वविधायकत्वस्यानेकगणसूत्राणां कल्पनापेक्षया लाघवादस्यैवावृत्त्या संज्ञाविधायकत्वमपरस्य साधुत्वविधायकत्वमिति यज्ञादौ तेषां प्रयोगापत्तेः।

हरदत्त ग्रन्थ इति। क्व तर्हि वर्तमानः पशुशब्दोऽसत्ववचनो भवति दृश्यर्थे 'लोधं नयन्ति पशुमन्यमाना' इत्यत्र दृश्यर्थे न मननं विशेष्यते दर्शनमेतन्मननं सम्यग् मन्यमाना इत्यर्थः। न्यासेऽपि दृश्यर्थे यथा लोधं नयन्ति पशुमन्यमाना इति, अत्र दृश्यर्थे न पशुशब्देन मननं विशेष्यते दर्शनमेतन्मननम्। सम्यग्ज्ञानमित्यर्थः। माधवग्रन्थ इति। अदिदृशि—इत्युप्रत्ययः पशादेश्च यदायमसत्त्ववचनस्तदा चादित्वान्निपातत्वं यथा लोधं नयन्ति पशुमन्यमाना इति पशुसम्यगिति ह्यत्रार्थः।

---

सम्पादकत्वेन उदित करण चरितार्थ है, तो नहीं कह सकते उपलक्षण होने से, क्योंकि स्तम्भ्वादि से च्लिको उद्देश्य करके अङ् का विधान करते हैं। सार्वधातुक परे रहते विकरण विधान करते हैं, अतः स्तम्भ्वादि में धातुत्व है। "जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः" इसमें जो 'जु' धातु "जपजभदहदशभञ्जपशाञ्च" इसमें पठित जो 'पश' धातु ऋति प्रभृति तथा सूत्र वार्तिक गण पठितों मेंधात्वधिकार विहित कार्य होने से धातुत्व है। इन ज्ञापकों के बल से धातुपाठ स्थित का पाठ भ्रंश ही अनुमान द्वारा जानना चाहिये। क्योंकि धातुत्व का अनुमान करने पर अनेक अनुमान की कल्पना करनी पड़ती है, पाठभ्रंशानुमान करने पर एक ही अनुमान से कार्य चल आता है। मैत्रेयादि अन्यसम्मत समाधान करते हुए लिखते हैं "बहुलमेतन्निदर्शनम्।"

अद्रव्यार्थ यदि नहीं कहोगे तो चतुष्पाज्जाति वाचक (जानवर वाचक) लिङ्ग संख्या कारकान्वित जो पशु शब्द है, उसकी निपात सञ्ज्ञा हो जायगी। "लोधं नयन्ति पशु मन्यमानाः" यहाँ पर जो पशु शब्द है सम्यगर्थक है, अतः इसकी निपात सञ्ज्ञा होती है। इसका अभिप्राय है लुब्ध = 'लोभी को सम्यक् जानकर प्राप्त करते हैं।' यदि कहो कि "लुब्धमृषिं नयन्ति पशुं मन्यमानाः" इस प्रकार निरुक्त में सानुस्वार पाठ होने से "लोधं नयन्ति पशुमन्यमानाः" यहाँ पर पशु शब्द लुप्तविभक्तिक सत्त्ववाची है, तो नहीं कह सकते, "लोधमित्यनवगतम्" यह उसका भाष्य होने से लोधशब्दार्थमात्र

"उपसर्गाः" (पा० सू० १।४।५९) ॥ निस्, दुस् इति सान्तौ ॥ "निसस्तपतौ" (८।३।१०२) इति निर्देशात् । अयोगवाहानामविशेषेणेति प्रकरणे निष्कृतं-दुष्कृतमित्युदाहृत्य "इदुदुपधस्य सकारस्य यो विसर्जनीयः" इति भाष्यकारोक्तेश्च । "उपसर्गस्यायतौ" (पा० सू० ८।२।१९) इति सूत्रे वामनोऽप्येवम् । "निरः कुषः" (पा० सू० ७।२।४६) "सुदुरोरधिकरणे" इति निर्देशाद्रेफान्तावपीति तत्रैव सूत्रे हरदत्तः ।

इति संज्ञाप्रकरणम् ॥

---

वामनोऽप्येवमिति । तत्र हि दुस् सान्त इति तेनोक्तम् ॥

संज्ञाप्रकरणं समाप्तम् ।

---

योगग्रहणं यदर्थे प्रादीनां सम्बन्धस्तंप्रत्येवोपसर्गत्वादीत्यर्थंबोधनाय । तेन विगताः-सेचका अस्माद्विसेचकोग्राम इत्यादौ षत्वन्न । प्रसङ्गादुपसर्गार्थाः लिख्यन्ते ।

निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः । अनेकार्थाः स्मृताः सर्वे पाठास्तेषां निदर्शनम् ।

प्र आदिकर्मंदीर्घेशेभृशसम्भवतृप्तिषु ।
वियोगशुद्धिशक्तीच्छाशान्तिपूजाग्रदर्शने ॥ १ ॥

आदिकर्मणि क्तः प्रयातः, दीर्घे प्रबलामूषकाः, ईशे प्रभुर्देशस्य, भृशोर्थे प्रवदन्ति दायादाः । सम्भवे हिमवतो गङ्गा प्रभवति । तृप्तौ 'प्रभुक्तमन्नम्' । वियोगे प्रोषिताः । शुद्धौ प्रसन्नमुदकम् । शक्तौ प्रशक्तो विप्राय । इच्छायाम् प्रार्थयते कन्याम् । शान्तौ प्रशान्तोऽग्निः । पूजायाम् प्राञ्जलिस्थितः । अग्रे प्रवलम् । दर्शने प्रलोकयति ।

वधे गतौ दर्शने च विक्रमाभिमुखे भृशौ ।
अधीनमोक्षणप्रातिलोम्यकेषु परामतः ॥ २ ॥

वधे पराहतः, गतौ परागतः, दर्शने परादृष्टः, विक्रमे पराक्रान्तः, अभिमुखे परावृत्तः भृशे पराजितः, अधीने पराधीनः, मोक्षणे पराकृतः, प्रातिलोम्ये पराङ्मुखः ।

अपो वियोगे विकृतौ विपरीते निदर्शने ।
आनन्दे वर्जने चौर्ये वारणे सम्यगीरितः ॥ ३ ॥

अपयाति । अपकृतवान् । अपशब्दः, अपदिशति, अपहसति, अपत्रिगर्ताद् वृष्टोदेवः । अपहरति । अपसरति ॥

---

निर्णायक निरुक्त में पशु शब्दार्थं निर्णायकता नहीं है, लोध का अर्थ लुब्ध निरुक्तकार ने किया है । अतः सानुस्वार पाठ में कोई प्रमाण नहीं । यह पदमञ्जरी तथा माधवीय धातुवृत्ति में स्पष्ट है । विभक्तिरहित आद्युदात्तत्वविशिष्ट पाठ होने से पशु में निपातत्व स्पष्ट है । अव्यय होने से विभक्ति-का लुक् हुआ है । चतुष्पाद् जाति विशेषवाची पशु शब्द अन्तोदात्त तथा पुँल्लिङ्ग है "पशूँस्ताँश्चक्रे" इत्यादि में ।

निस् दुस् ये सान्त है, इसमें प्रमाण है "निसस्तपतावनासेवने" सूत्र में सकारान्त उच्चारण तथा "हयवरट्" सूत्र के अयोगवाहों का अविशेषेण अर्थात् प्रयोजन विशेष की अपेक्षा न करके सकल-

संयोगऐक्यप्रभवसत्यप्रत्यक्षसिद्धिषु ।
भूषाश्लेषस्वीकरणक्रोधाभिमुखवाचिसम् ॥ ४ ॥

सङ्गतः पुत्रेण, संवदन्ति सख्यः, संभवत्यग्निः, कोष्ठे गां संजानामि, संपश्यते संसिद्धिः संस्कृता कन्या, संधत्ते, संगृह्णाति, संक्रुद्धः संयाति ।

वेदाधिष्ठानसामीप्यपश्चाद्भावानुबन्धने ।
साम्याभिमुखहीनेषु विसर्गे लक्षणे त्वनु ॥ ५ ॥

अनुवाकमधीते, अनुष्ठानं देशे, अनुमेघं वर्षति, अनुरथम्, अनुशयः, अनुकृतिः, अनुवत्सो मातरं धावति, अन्वर्जुनंयोद्धारः, अनुज्ञातः, अनुधनमसतां गतिः ॥

ज्ञानावलम्बशुद्धीषदर्थे व्याप्तिपराभवे ।
अवो ज्ञेयो वियोगे च लोकयोगानुसारतः ॥ ६ ॥

अवगतोऽर्थः । अवलम्ब्य यष्टिं गच्छति, अवदातम्, अवलम्बते, अवकीर्णम्, अवघ्नन्ति, अवयातः ।

निर्वियोगात्ययादेशातिक्रमे लाभनिश्चिते ।

निःसङ्गो ब्रवीति, निर्मेघम्, निर्दिष्टम्, निःक्रान्तः, निर्वेशः, निश्चितम् ॥

दुरीषदर्थेकृच्छ्रेर्थे कुशासम्पत्तिसङ्कटे ॥ ८ ॥

दुर्गतः, दुर्जीविनः, दुर्वलः, दुर्गतः, दुर्दिनम् ॥

नानावियोगातिशयभृशमोहेश वाङ्मृधे ।
पैशून्यास्मरणेभूषेषदर्थनाभिमुख्यके ॥ ९ ॥
अनवस्थामुख्यशौर्यदर्शने विरुदाहृतः ।

विचित्रासूत्रस्य कृतिः, नियुक्तः, विकीर्णः, वितटा नद्यः, विमनस्कः, विभुः, विवदन्ति, विगायति, विस्मृतः विभूषितः, विलोपितः, विमुखः, विभ्रान्तः, विशिष्टः, विक्रान्तः, विलोकयति ॥

आङिच्छाभयवाक्येषदर्थाश्लेषादिकर्मणि ॥ १० ॥
बन्धनेऽभिविधौ शाठ्यकृच्छ्रसामीप्यसंश्रये ।
अभिमन्त्रनिवृत्त्याशादानानुभवविस्मये ॥ ११ ॥
प्रतिष्ठादेशमर्यादास्पर्धामुख्योर्ध्वकर्मणि ।

आकाङ्क्षते, आविग्नः, आजानाति, आताम्रनखाः आलिङ्गति, आरभते, कवचमाबध्नन्ति । आकुमारं यशः, आचरतिकपटेन, आहूकृतः, आसन्नावयम् । अवसथः, आमन्त्रणम्, आधावति, आशास्ते, आदत्ते, आशीतम्, आ एवं किल तत्, आस्पदम्, आदिष्टः, आमक्तेर्दुःखम्, आह्वयन्तेरथिनोरथिनः, आगच्छति, आरोहति पर्वते ।

राश्यधस्त्वभृशादेशनित्यकौशलबन्धने ॥ १२ ॥
अन्तर्भावे समीपे निदर्शने परमाश्रये ।

---

फलों के लिए जिस जिस स्थान पर आवश्यकता पड़े, वहाँ पर उपदेश करना चाहिये, इस प्रकरण में निष्कृतम्, दुष्कृतम्, ये उदाहरण देकर भाष्यकार ने कहा "इदुदुपध" जो पद तदवयव जो

निकरोमणीनाम् ! निपतितम् । निगृहीतः, निदेशितम्, निविशते, निपुणः निबद्धः, निपीतमुदकं सिकताभिः, निकृष्टः, निदर्शनम् । निवृत्तः पापात्, निलयः ।

अधिरध्ययनैश्वर्यवशित्वस्मरणाधिके ॥ १३ ॥

उपाध्यायादधीते, अधिपतिः, अधीनः मातुरध्येति अधिकृतम् ।

अपि सम्भवगर्हाशीर्भूतिभूषा समुच्चये । अपियोजनमस्ति, अपिपापिन्, भद्रमपि, मरणमपि, अपिनह्यति हारम् । तदपि ।

विक्रमातिक्रमे बुद्धौ भृशार्थातिशये त्वतिः ॥ १४ ॥

अतिस्थः, अतिक्रामति, अतिगहनम्, अतितप्तम्, अतिमनुते ज्ञानम् ।

प्रशंसानुमते पूजाभृशकृच्छ्रशुभेषु सुः ।

सुरूपः, सुकृतम्, सुसाधुः, सुतप्तः, सुदुष्करम्, सुगन्धः ।

उत् प्राबल्यवियोगोर्ध्वकर्मलाभप्रकाशने ॥ १५ ॥

आश्चर्यमोक्षणे भावे बलप्राधान्यशक्तिषु ।

उद्बलः, उद्गच्छति, उत्तिष्ठति शयनात्, उत्पन्नम्, उच्चरति । उत्सुकः, उद्गतोऽश्वः, उत्पथः, उत्कः, उद्दिष्टः । उत्साहः ।

अभिः पूजाभृशार्थेच्छा व्याधिसाम्याभिमुख्यके ॥ १६ ॥

सौरूपावचनाहारस्वाध्यायेषु निरूपितः ।

अभिवदति गुरुम्, अभियुक्तः, अभिलिप्सते; अभिस्यन्दो व्याधिः, अभिजातः, अभिमुखम्, अभिख्यः, अभिधनम्, अभ्यवहरति, अभ्यस्यति ।

सादृश्यादानहिंसाङ्गीकृतौ प्रतिनिधौ क्वचित् ॥ १७ ॥

व्याध्यभिमुख्ययोर्व्याप्तौ वारणे प्रतिरुच्यते ।

प्रतिदेवदत्तस्य, प्रतिगृह्णाति, प्रतिहन्ति, प्रतिज्ञानम्, । अभिमन्युरर्जुनतः प्रति । प्रतिश्यायम् । प्रतिसूर्यं गच्छति, प्रतिकीर्णं पांशुभिः, प्रतिषिद्धः ।

परिः समन्ततोभावव्याप्तिदोषकथासु च ॥ १८ ॥

भूषाश्लेषे पूजने च वर्णने वसने शुभे ।

परिभ्रमति । परिगतोऽग्निर्ग्रामम् । परिवादः, परिकरोतिकन्याम्, परिष्वजते, परिचरति गुरुम्, परित्रिगर्तेभ्योवृष्टोदेवः, परिधत्ते वासः, परिदेवनम्, ॥

उपः सामीप्यसामर्थ्यव्याप्त्याचार्यकृतौ मृतौ ॥ १९ ॥

दोषादानक्रियावीप्सारम्भाध्ययनपूजने ।

कृष्णाचार्यैः कृताः श्लोका उपसर्गार्थसङ्ग्रहे ॥ २० ॥

उपकुम्भं तिष्ठति, उपकरोति मित्रेभ्यः, उपकीर्णः पांशुभिः, उपदिशति शिष्येभ्यः, उपरतः, उपघातः, उपहरत्यर्थं देवदत्ताय, उपचारः, देवं देवमुपचरति, उपक्रमते भोक्तुम्, उपाध्यायादधीते, उपचितः पिता पुत्रेण ॥

---

सकार उसका जो विसर्ग उसको षत्व होता है यह भाष्यकार का कथन । "उपसर्गस्यायतौ" इस

## अथ परिभाषाप्रकरणम्

इको गुणवृद्धी" [पा० सू० १।१।३] गुणवृद्धिशब्दाभ्यामिति। एतच्च पूर्वसूत्राभ्यां गुणवृद्धीपदे अनुवर्त्य गुणो वृद्धिरिति ये गुणवृद्धी इति योजनया लभ्यते। तेनेह न। "दिव औत्" (पा० सू० ७।१।८४) द्यौः। "त्यदादीनामः" पा० सू० ७।२।१०२) सः, इमम्। षष्ठ्यन्तमिति। सूत्रे षष्ठ्यन्तस्यानुकरणाच्छब्द-स्वरूपपरतया नपुंसकात्सोर्लुगिति भावः। पदमिति। तच्च सम्भवति सामाना-

---

योजनयेति। यद्यपि तदनुवृत्त्यैव सिद्धे सामर्थ्याच्छब्दव्यापाराश्रयणेन लभ्यते मूलोक्तार्थ-स्तथाऽपि मन्दबुद्धिसाधारण्येन स्फुटत्वायैवमेवोक्तम्। स इति। अत्र नैव स्यादिति भावः। इममिति। अत्रेकारस्यैव स्यान्नत्वन्त्यस्येति भावः। सोर्लुगिति। अत एव दीर्घो नेति भावः।

---

प्रकृतमनुसरामः॥ उदाहृत्येति। हयवरट् सूत्रे भाष्ये "अविशेषे संयोगोपधः-संज्ञाऽलोन्त्यद्विर्वचनस्थानिवद्भावप्रतिषेधा इति व्याख्याने उपधासञ्ज्ञा च प्रयोजनम् निष्कृतम्, दुष्कृतम्, दुष्पीतम्, निष्पीतम्, इदुपधस्यचाप्रत्ययस्येतिषत्वं सिद्धं भवति। नैतदस्ति प्रयोजनम्, न इदुदुपधग्रहणेन विसर्जनीयो विशेष्यते किन्तर्हि सकारो विशेष्यते—इदुदुपधस्य सकारस्य यो विसर्जनीय इति।

'उपसर्गस्यायतौ' इति सूत्रे 'वामनेन' निसः सान्तत्वमनुक्तमित्येवमिति कथमतआह तत्रहीति। उपसर्गेति सूत्रे हीत्यर्थः. इति सञ्ज्ञेति। अष्टाध्यीयस्थसूत्रविहितानां सन्धि-कार्योपयोगिनीनां संज्ञानां प्रकरणं समाप्तमित्यर्थः। तेनाङ्गप्रगृह्यलोपाम्रेडितमसंज्ञाना-मस्मिन्प्रकरणे पाठाभावेऽपि न न्यूनतापत्तिः॥

इति बालप्रकाशिकायां सञ्ज्ञाप्रकरणं समाप्तम्॥

परिभाषात्वञ्च। सञ्ज्ञाभिन्नत्वे सति शब्दधर्मिकसाधुत्वप्रकारकाप्रामाण्यज्ञानाना-स्कन्दितबोधोपयोगिबोधजनकत्वम्॥ तथा च सुद्ध्युपास्यः शब्दः साधुरत्रसुद्ध्युपास्यः शब्दः विशेष्यः साधुशब्दः प्रकारीभूतः। सुद्ध्युपास्यधर्मिकसाधुत्वप्रकारकाप्रामाण्य

---

सत्र में दुस् को सान्त वामन ने भी कहा है। "निरः कुषः" सुदुरोरधिकारणे इन निर्देशों से रेफान्त भी है, "उपसर्गस्यायतौ" इस पर पदमञ्जरीकार ने कहा।

संज्ञाप्रकरण की 'बालप्रकाशिका' हिन्दी व्याख्या समाप्त।

'इकः' यह षष्ठयन्तानुकरणलुप्तप्रथमान्त है। "गुणवृद्धी शब्दाभ्यां" यहाँपर ल्यप् लोप में पञ्चमी है। यत्र यहाँ पर, "इतराभ्योऽपिदृश्यन्ते" इस सूत्र से तृतीयार्थ में त्रल् प्रत्यय होने से इसका अर्थ होता है। गुण वृद्धि का उच्चारण करके जिस शास्त्र के द्वारा लक्ष्य में गुण वृद्धि का विधान करते हैं, उस शास्त्र में इक् यह षष्ठयन्त पद उपस्थित होता है। जैसे गुण शब्द का उच्चारण करके

ज्ञानानास्कन्दितोबोध इकोयणचीत्यस्य तदुपयोगिबोधजनकत्वं तस्मिन्नित्यादेरिति समन्वयः।

परिभाषेयं तथाहि—न तावत्संज्ञा, समानविभक्त्यन्तत्वाभावात्। वृद्धिरादैच् इक् च अदेङ् च गुण इत्येव सिद्धेः "इको गुणवृद्धी" इत्यस्यारम्भाच्च। नापि विधिः "ओर्गुणः" इत्यादेरारम्भात्। न च "ओर्गुण" इत्यादेरत्रगुणएवेति नियमार्थत्वमस्त्विवतिवाच्यम्, एवं विधित्वकल्पने गौरवात्। बहुलक्ष्यविसंवादाच्च, पूर्वोत्तरसाहचर्येण गुणशास्त्रत्वस्य युक्तत्वाच्च। नापिनियमः अन्यैरगतार्थत्वात्। वाक्यभेदाद्यापत्तौ गौरवाच्च। न वा अतिदेशः समानविभक्त्यन्तत्वस्य वतेश्चानिर्देशात् नाप्यधिकारः तथासति "इकोगुणवृद्धी, न धातु" इतियोगविभागवैयर्थ्यात्। नापि निषेधः नञाघटितत्वात्॥

योजनयेति। अत्रप्राचीनाः—सञ्ज्ञाशास्त्रादन्यत्र सूत्रेऽनुवर्तमानानि सञ्ज्ञापदानि स्वरूपपराण्येव यथासुप्तिङन्तं पदम्। इत्यत्र पदपदं स्वरूपपरं न तु संज्ञिपरम्। असम्भवात्। तथा "स्वादिष्वसर्वनाम" इत्यत्रानुवृत्तमपि पदपदं स्वरूपपरमेवार्थाधिकारानुरोधात्। नचैवम् 'बहुगण' इति सूत्रात् 'ष्णान्ताःषट्' इति सूत्रेऽनुवृत्तस्य संख्यापदस्यापि स्वरूपपरता स्यादिति वाच्यम् तत्र स्वरूपपरकत्वे संख्याशब्दस्य ष्णान्तत्वासम्भवात् "ष्णान्ताः" इति विशेषणानुपपत्या संज्ञिपरकत्वस्यैवलाभात्। एवञ्च "इकोगुणवृद्धी" इति सूत्रघटकगुणवृद्धिपदयोरर्थपरत्वेन अनुवृत्तयोश्चैतयोः स्वरूपपरकत्वेनान्वयानुपपत्त्या, इति, उच्चार्य, विधीयते, इति पदत्रयमध्याहृत्य गुण इति वृद्धिरिति वोच्चार्य यत्र गुणो विधीयते, वृद्धिर्वा विधीयते तत्र इकः इति षष्ठ्यन्तं पदमुपतिष्ठत इत्यर्थः।

---

"सार्वधातुकार्धधातुकयोः" इस शास्त्र के द्वारा लक्ष्य में गुण का विधान करते हैं, उस शास्त्र में इक् यह षष्ठ्यन्त पद उपस्थित होता है। यदि तृतीयार्थ में त्रल नहीं स्वीकार करोगे तो लक्ष्य में परिभाषा की उपस्थिति होने से परिभाषा का प्रणयन निष्फल हो जायगा। यदि कहो कि इस सूत्र में केवल गुण वृद्धि शब्द है, अतः "यत्र गुण वृद्धी विधीयेते तत्र इकः षष्ठ्यन्तपदमुपतिष्ठते" यह अर्थ उचित है। "गुणवृद्धीशब्दाभ्याम्" अर्थात् गुणशब्द का उच्चारण करके गुण का विधान हो वृद्धि शब्द का उच्चारण करके वृद्धि का विधान हो, वहाँ पर इकः यह षष्ठ्यन्त पद उपस्थित होता है। यह अर्थ अनुचित है तो नहीं कह सकते, क्योंकि यहाँ पर "अदेङ गुणः" से गुण पद, का तथा 'वृद्धिरादैच्' से वृद्धि पद का अनुवर्तन होने से अर्थ होगा। गुण शब्द का उच्चारण करके जिस शास्त्र के द्वारा गुण का विधान किया जाय, वृद्धि शब्द का उच्चारण करके जिस शास्त्र द्वारा वृद्धि का विधान किया जाय, वहाँ पर 'इकः' यह षष्ठ्यन्त पद उपस्थित होता है।

इस अर्थ का गुण वृद्धि का अनुवर्तन करके योजना ( सम्बन्ध ) से लाभ हो जाता है, यह मूलीय व्याख्यान "गुणवृद्धि सामर्थ्यात्" इस भाष्य के विरुद्ध है, इस आशय से शब्दरत्नकार लिखते हैं।

यद्यपि तदनुवृत्त्यैवसिद्धे "तच्छशब्देन" अदेङ्, आदैच्च, का ग्रहण होगा गुण वृद्धि का ग्रहण नहीं होगा, क्योंकि 'अदेङ् गुणः' 'वृद्धिरादैच्' में गुण, वृद्धि शब्द स्वरूपपरक है, तद् शब्द से गुण वृद्धि का ग्रहण करने पर गुण और वृद्धि का स्वरूप ही ग्रहण होगा, अतः तद् शब्द से अदेङ् और आदैच् का ग्रहण करना उचित है। यदि कहो कि "ष्णान्ताषट्" इसमें 'बहुगणवतु डतिसंख्या' इस सूत्र से संख्या का अधिकार आता है, संख्याविशेष्यक षान्त नान्त प्रकारक बोध होता है। यदि

धिकरण्ये इगन्तस्याङ्गस्येत्यादिक्रमेण सम्बध्यते। "मिदेर्गुणः" (पा० सू० ७।३।८२) "मृजेर्वृद्धि" (पा० सू० ७।२।११४) इत्यादौ तु सामानाधिकरण्यासम्भवान्मिदि-मृज्योरवयवस्येक इति सम्बध्यते।

---

तच्चेति। इक इति पदं चेत्यर्थः। अनेनात्र सूत्रे पदोपस्थितिपक्ष इति सूचयति। "अचो-ञ्णिति" (पा० सू० ७।२।११५) "ओर्गुणः" (पा० सू० ६।४।१४६) इत्यादौ तु नास्याः

---

यद्वा पदत्रयाध्याहारे गौरवात्, संज्ञाशास्त्रे स्वरूपपरस्यापि प्रत्ययपदस्य "आद्यु-दात्तश्च" इत्यत्रानुवृत्त्या संज्ञितव्यादिप्रत्ययपरकत्वस्य दर्शनाच्च। प्रकृतेऽनुवर्तमानेऽपि गुणवृद्धिपदे संज्ञिपरके एव, तथा च सूत्रस्थयोरनुवृत्तयोश्चैकार्थतया यत्र विशेष्यतावच्छेदक प्रकरतावच्छेदकधर्मयोर्भेदस्तत्रैवाभेदान्वयस्यनियमात्, घटोघटः इतिवत्, अदेङ्, अदेङ्, आदैच्, आदैच् इत्यन्वयस्य बाधात्, अनुक्तगुणवृद्धिपदयोर्लक्षणायां तात्पर्यग्राहकतया यत्र गुणपदावच्छिन्नविधेयताप्रयोजकं वृद्धिपदंवा तत्रेकः षष्ठ्यन्तं पदमुपतिष्ठते। नव्यास्तु—सूत्रघटकगुणवृद्धिपदयोः संज्ञिमात्रपरत्वे, अनुवर्तमानस्यसंज्ञिपरकत्वमाश्रित्य गुणवृद्धि-पदानुवृत्त्यैवाभीष्टसिद्धेः पुनः सूत्रे गुणवृद्धिग्रहणसामर्थ्यात् सूत्रघटकगुणवृद्धिपदयोरेवोक्तार्थे लक्षणया तदर्थलाभादनुवृत्तियोजनादिविषयकः प्रयासोविफल एवेत्याहुः।

उक्तमिति। गुरुभूतयाप्यनुवृत्तियोजनादिकाश्रयणरीत्येत्यर्थः। किञ्च। यदीहोक्तार्थे गुणवृद्धिपदयोरनुवर्तमानयोर्लक्षणाश्रीयते तदा "न धातु" इत्युत्तरसूत्रयोः पुनरर्थान्तरेऽ-कारादिमात्रेलक्षणाऽऽश्रयणीयेति गौरवं स्यादतो लाघवायास्मिन् सूत्रे तयोरनुवृत्या योजना-कल्पनमेव युक्तमितिबोध्यम्। अत्रनैवेति। तथाचातिव्याप्तिवदव्याप्तिनिरासोप्येवंव्याख्यानस्य तस्यफलमितिध्वनितम्। नन्विममित्यत्र पुनरतिव्याप्तिप्रदर्शनं सन्दर्भविरुद्धम्, द्यौः इत्यस्यातिव्यात्यधिकरणस्याग्रे एतदुपन्यासस्योचितत्वात् अत आह—अत्रेकारेति। तथा चान्त्यादेशस्य विषये दोषमुद्भाव्यानन्त्यादेशप्रसक्त्यातिव्याप्तिप्रदर्शनाय पुनरेवं दोषः। अत एव लुकःप्रवृत्तेरेव। दीर्घ इति। "अत्वसन्तस्य" इति सूत्र विहित इत्यादिः। अनेन= पदपदोपादानेन।

---

स्वरूप परक ही लिया जाता तो षान्त नान्त विशेषण नहीं हो सकता, अतः संख्या शब्दाधिकार से जानते हैं कि स्वरूपपरक भी अन्य स्थान पर संज्ञीपरक हो जाता है, तो नहीं कह सकते "संख्या-पदं संज्ञी बोधकम्" इस विशेषापेक्ष ज्ञापन को मानने पर दोषाभाव है। इसका भाव है "ष्णान्ताषट्" इस सूत्र में संख्या अनुवर्तन आजाने पर संख्या पद में षान्तत्व नान्तत्व असम्भव होने से संज्ञी ग्रहण होता है, ज्ञापन के बल से। अन्यत्र "स्वादिष्वसर्वनामस्थाने" "सुप्तिङन्तम् पदम्" से अनुवर्तमान पद, पद संज्ञा का ही बोधन कराता है संज्ञी का नहीं।

अतः शब्दरत्नकार कहते हैं कि 'अदेङ्' 'आदैच्' की अनुवृत्ति से इक् के स्थान में अदेङ् आदैच् होता है, इस अर्थ की निष्पत्ति हो जायगी, पुनः गुण वृद्धी ग्रहण क्यों किया ? तत्सामर्थ्य से लक्ष-णया अर्थ होगा गुण अथवा वृद्धि का उच्चारण करके जिस शास्त्र के द्वारा लक्ष्य में गुण वृद्धि का विधान किया जाय, वहाँ पर इकः यह षष्ठ्यन्त पद उपस्थित होता है। "पूर्वसूत्राभ्यां गुणवृद्धी-

प्रवृत्तिः। लिङ्गस्य श्रुत्यपेक्षया दुर्बलत्वेन प्रथमतः श्रौताच्पदार्थादिघटितवाक्यार्थबोधे वृत्ते निर्दिष्टस्थानिकत्वेनोपस्थितस्यापीक्पदस्य वाक्यार्थेऽनन्वयात्। "सार्वधातुक" (पा० सू० ७।३।८४) इत्यादौ तु तदुपस्थितिं विना स्थान्याकाङ्क्षाशान्त्यभावेन बोध एव नेति विशेषः। एवं च पदश्रुतिनिमित्तया पदैकवाक्यतयाऽन्वयवत्यन्तरङ्गा। स्थानषष्ठीत्वनिर्णये उपस्थिताऽलोन्त्यपरिभाषायां अनन्त्यस्य गुणव्यावृत्तये वाक्यैकवाक्यतयाऽन्वय इति बहिरङ्गा सा, तदाह—इगन्ताङ्गस्येत्यादि। मृज्योरवयवस्येति। एवं च स्थानषष्ठीत्वाभावनिर्णयेन "अलोन्त्यस्य" (पा० सू० १।१।५२) इत्यस्य प्रवृत्तिरेव नेति भावः॥

पदोपस्थितिपक्ष इति। यद्येकं वाक्यं तच्चेदश्च अलोन्त्यस्य विषयो भवन्ति, "इकोगुणवृद्धी" अलोन्त्यस्येति ततोऽयं तच्छेष इत्युक्तम्। अयम्भावः अङ्गस्य गुण इत्युक्तेः स्थानषष्ठीनिर्देशाल्लिङ्गात् "अलोन्त्यस्य" इत्युपतिष्ठते गुणश्रुत्या तु "इकः" इति तत्र विशेष्यविशेषणभावेनान्वयं यदि पूर्वमिकाङ्गं विशेष्यते, तदा इगन्ताङ्गस्य गुणो भवति स च भवन् "अलोऽन्यस्य" इत्यन्त्यस्येति। यदिपूर्वम्, अङ्गस्येति षष्ठी, अन्त्यमलं नीयते, अङ्गान्त्यलो गुणो भवति, सच भवन् इकः इति वा, उभयथापि, सः=अलोऽन्त्यस्येति सूत्रम्, शेषोविशेषणमस्य=इकः इत्यस्येति व्युत्पत्त्या तस्य=अलोऽन्त्यस्येत्यस्य शेषः=विशेषणम् अयम्=इको गुणवृद्धी इति व्युत्पत्त्या वा तच्छेषपक्ष इति व्यवहारः। तथाचान्त्याल्भिन्नस्येको गुणवृद्धिविधायके एवानयोरुपस्थितिः। लघूपधादिहलन्ताङ्गेषु उभयोरनुपस्थित्या सर्वस्य गुणप्रसङ्गः।

यदि तूक्तदोषवारणाय "अङ्गस्य" इति गुणवृद्धिविधौ न स्थानषष्ठी, किन्तु इगपेक्षयाऽवयवषष्ठी तदा स्थानषष्ठ्यभावात् "षष्ठी स्थानेयोगा" इत्यस्य सम्बन्धेन स्थानषष्ठीस्थले एव प्रवर्तमानस्यालोऽन्त्यस्येत्यस्यानुपस्थितिर्गुणवृद्धिविधायके इत्यनुपस्थित्यैवापवादत्वव्यवहारः। अत्रपक्षेऽङ्गावयवस्येकोगुण इत्यर्थे "जुसिच" इति अनेनिजुः इत्याद्यनिगन्तेषु गुणः प्राप्नोति, इत्युभयपक्षे दोषमाशङ्क्योक्तम्—एवं तर्हि नायं तच्छेषः नापि तदपवादः अन्यदेवेदं परिभाषान्तरमसम्बद्धमनया परिभाषया। ततः-'एवन्तर्हि वृद्धिर्भवति, गुणोभवतीति यत्र ब्रूयादिकइति तत्रोपस्थितं द्रष्टव्यम्, इत्युक्तम्। अत्रेक इत्युपस्थितं द्रष्टव्यमित्युक्त्या पदोपस्थितिपक्ष एवोक्तो भवतीति स्पष्टमेव।

दुर्बलत्वेनेति। अयं भावः "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पार-

पदेऽनुवर्त्य गुणोवृद्धिरिति ये गुणवृद्धी इति सम्बन्धेन लभ्यते" तब इसका अभिप्राय है, मन्द बुद्धिवालों को भी स्फुट बोध होने के लिए पूर्वसूत्राभ्यामित्यादि कहा। उक्तार्थ होने से "दिव-औत्" यहाँ पर वृद्धि शब्द का उच्चारण करके वृद्धि का विधान न होने से "इको गुणवृद्धी" यह परिभाषा उपस्थित नहीं होती। उक्तार्थाभाव में तद् शब्द में 'त्यदादीनामः' से अकारान्तादेश ही नहीं होगा। इदम् शब्द में इकार को ही अकारादेश होने लगेगा, अन्त्य को नहीं होगा। "इको गुणवृद्धी" इस सूत्र में 'इकः' यह षष्ट्यन्तानुकरण लुप्तप्रथमान्त है। षष्ठयन्तानुकरण होने से शब्दस्वरूप का बोधक हुआ, अतः नपुंसकलिङ्ग होगा तथा सु का लुक् हो जायगा, अतः "अत्वसन्तस्य चाधातोः" इस सूत्र से दीर्घ नहीं हुआ।

इक् इस पद का सामानाधिकरण्येनान्वय होने से यह अर्थ होगा "इगन्ताङ्गस्य गुणो भवति" इक् पदोपादान होने से इस सूत्र में पदोपस्थिति पक्ष सूचित होता है। "अचोऽञ्णिति" "ओर्गुणः"

दौर्बल्यमर्थविप्रकर्षात्, मी० ३।३।१४ इति मीमांसादर्शने जैमिनिना, उत्तरोत्तरापेक्षया पूर्वपूर्वस्य बलवत्त्वमुक्तम् । लिङ्गज्ञानप्राप्तविध्यपेक्षयाश्रावणप्रत्यक्षविषयश्रुतिप्राप्तविधेर्बलवत्त्वम् । तत्रार्थविप्रकर्षादिति बलवत्त्वे हेतुः । यथा ऐन्द्रयागार्हपत्यमुपतिष्ठते इत्यत्र इन्द्रस्तुतिरूपं लिङ्गं, लिङ्गस्य स्वतोविनियोजकत्वाभावेन "अनया ऋचा इन्द्रमुपतिष्ठते" इति वाक्यं प्रकल्प्य इन्द्रोपस्थाने विनियोजकं स्यात् 'ऐन्द्रचा गार्हपत्यमुपतिष्ठते' इति श्रुतिस्तु स्वत एव गार्हपत्याग्नेरुपस्थाने इमामृचं विनियोजयतीति शीघ्रोपस्थापकतया यथा बलवत्त्वम्, तथा प्रकृते श्रौताच्शब्दार्थमन्तरङ्गमादाय जाते वाक्यार्थबोधे सूत्रान्तरेणोपस्थापितस्य वहिरङ्गस्येक्पदार्थस्यनिराकाङ्क्षतया वाक्यार्थेऽन्वयः । दुर्बलत्वमुपपादयति प्रथमत इति ।

श्रौत-इति श्रुतेरयंश्रौतः श्रुतिश्चाच्पदादिरूपा अतएवाह अच्पदार्थादीनि । आदिना वृद्धचादिपदार्थपरिग्रहः । वृत्ते = निष्पन्ने वाक्यार्थबोधस्य या पदार्थोपस्थित्यादिसामग्री तस्या वृत्तत्वादिति शेषः । एतेन पदोपस्थितिप्रतिबन्धकसद्भावो ध्वनितः । उपस्थितस्यापीत्यपिनाऽनुपस्थितौ सम्यक्त्वं सूचितम् । लिङ्गस्य तु पदोपस्थापकत्वं ततस्तस्य पदस्य शक्तिस्मरणं ततस्तदर्थोपस्थितिस्ततस्तस्यार्थस्य वाक्यार्थघटकत्वसम्भावनेति विलम्बः स्पष्ट इति भावः । यथा "इमामगृभ्णन्रसनामृतस्य" इतिमन्त्रे रशनामात्रप्रकाशनसामर्थ्यरूपलिङ्गसत्त्वेन गर्दभरशनाग्रहणेपि प्रसक्तस्य तस्य मन्त्रस्य 'तदीयब्राह्मणे' अश्वाभिधानीमादत्ते इति विधिबोधकलोडन्तशब्दोच्चारणेनाश्वरशनाग्रहणे श्रुत्या तस्य मन्त्रस्य विनियोगो बोध्यते ।

अनन्वयेति । अर्थद्वारेति शेषः तदुपस्थितिम्—एतत्सूत्रस्थैकपदोपस्थितम् । पदश्रुतिनिमित्तेति । विधेयबोधकत्वज्ञानविषयगुणादिपदश्रवणनिमित्ता । एषा = इकोगुणवृद्धीति परिभाषा । अन्तरङ्गत्वादस्याः—प्रथमतः प्रवृत्तिमाह—पदैकेति । अलोऽन्त्यस्य, आदेः परस्य, अनेकाल, इत्यस्य यथान्यत्रव्यवस्थापकत्वम्, तदाह—स्थानषष्ठीत्वेति । "पादस्य लोपः" इत्यादौ यथा प्रकृते सार्वधातुकेत्यादिसूत्रे स्थानषष्ठीत्वस्य "क्ङिति च" इत्यस्य निर्दिष्टपरिभाषोपस्थिताव्यवहितस्य गुणनिषेधकत्वेन तत्प्रतिबध्यसूत्रस्थपदघटितवाक्यघटकषष्ठ्यानिर्णये इति भावः । एवञ्चालोन्त्यस्येत्यस्य वहिरङ्गत्वं स्पष्टमेव ।

---

इत्यादि में इस परिभाषा की प्रवृत्ति नहीं होगी, श्रुत की अपेक्षा लिङ्ग दुर्बल होने से, मीमांसा में लिखा है "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवायेपारदौर्बल्यमर्थविप्रकर्षात्" मी. ३।३।१४ श्रुति, लिङ्ग, वाक्य, प्रकरण, स्थान, समाख्या, इन षट् प्रमाणों के रहने पर, पर, पर दुर्बल होते हैं, पदार्थ के दूर होने से, अर्थात् उत्तरोत्तरापेक्षया पूर्व पूर्व में बलवत्व रहता है । प्रथम "अचोञ्णिति" यहाँ पर श्रौत अच् पदार्थादिविशिष्ट "अचोञ्णिति" का वाक्यार्थबोध निष्पन्न हो जानेपर ज्ञात स्थानी होने के कारण इक् पद की उपस्थिति होने पर भी इक् पद का वाक्यार्थ में अन्वय नहीं होगा ।

"सार्वधातुकार्धधातुकयोः" इत्यादि में इक् की उपस्थिति के बिना स्थान्याकांक्षा शान्त नहीं होती, अतः वाक्यार्थबोध नहीं होगा । यह परिभाषा पदश्रुति निमित्तिका है, अतः इसका अन्वय पदैकवाक्यतया होगा । अर्थात् पद, पद, की उपस्थिति होती है । स्थानषष्ठी का निर्णय हो जाने पर मध्य को गुण की व्यावृत्ति के लिए उपस्थित जो "अलोऽन्त्य" परिभाषा है, उसका वाक्यार्थ बोध हो जाने पर "सार्वधातुकार्धधातुकयोः" इसमें अन्वय होगा । तब अर्थ होगा "इगन्ताङ्गस्य गुणो भवति

यत्तु—'इक एव स्थाने स्त' इति प्राचां व्याख्यातम्, यच्च तट्टीकाकृतोक्तम- नियमप्रसङ्गे नियमार्थमिदमित्यादि। तत्सर्वं भाष्यविरोधादुपेक्ष्यम्। तच्छेषपक्षं- दूषयित्वा पदोपस्थितिपक्षस्यैव भाष्ये समर्थितत्वादित्याहुः। तच्छेषपक्षेऽपि दूषणो- द्धारस्तु शब्दकौस्तुभे स्पष्टीकृतोऽस्माभिः।

---

नियमार्थमिदमिति। तत्तद्विधायकैर्विहितयोर्गुणवृद्ध्योः "अलोऽन्त्यस्य" (पा० सू० १।१।५२) इतिवदिदमपि स्थानिनियमार्थमिति तदाशयः। तत्सर्वं भाष्येति। द्वयोर्नियमयोः "सार्वधातुक" (पा० सू० ७।३।८४) इत्यादावविरोधेनेग्रूपस्यान्त्यस्येत्यर्थो वाच्यः। अन्त्यस्येक इति वा। उभयथाऽपि द्वयोर्विशेष्यविशेषणभावसत्त्वात्तच्छेषपक्षे पर्यवसानम्। सः "अलोऽन्त्यस्य" (पा० सू० १।१।५२) इति नियमः शेषो विशेषणमस्येति तदर्थः। तस्य = "अलोऽन्त्य" (पा० सू० १।१।५२) इत्यस्य विशेषणमिति वा। एवं च "मिदेर्गुणः" (पा० सू० ७।३।८२) इत्यादौ परस्परविरोधादनयोस्त्यागे सर्वादेशगुणापत्त्या तद्विरोध इति भावस्तदाह—तच्छेषपक्षमिति।

दूषणोद्धारस्त्विति। "मिदेः—" इत्यत्र मिद् इमिंदिस्तस्येति व्याख्यानान्न दोषः। "पुगन्त" (पा० सू० ७।३।८६) इत्यत्र पुक्यन्तोलध्वी उपधेति व्याख्येयमित्यादि- भाष्योक्तदूषणोद्धारस्त्वित्यर्थः। न च यापयति, क्ष्मापयतीत्यादौ दोषः। गुणे कृते वृद्ध्या

---

नन्विको गुणेत्यस्य सूत्रस्य परिभाषात्वकथनेविधिसूत्रत्वमेवास्ति, नियमसूत्रत्वन्तु कुत इत्याकाङ्क्षानुत्थानायाह तत्तदिति। इदमपि = इको गुणेति सूत्रमपि।

नियमार्थमिति। अन्यथागुणादिविधायकवाक्यस्य निर्णयाजनकतया वैयर्थ्यापत्तिः स्या- दितिभावः। अलोऽन्त्यस्येतिवदिति। यथाऽन्त्यस्यानन्तस्य च प्राप्तावन्त्यस्येति तेन नियमः क्रियते तथानेनापीकोऽनिकश्च गुणवृद्धिप्रसङ्गे इकएवेतिनिमयकल्पनया परिभाषत्वमस्याः सिद्धमितिभावः। व्याख्येयमित्यादीति। भाष्ये तच्छेषपक्षमभ्युपेत्य "मिदिमृजिपुगन्तलघू- पधर्च्छिदृशिक्षिप्रक्षुद्रेष्वापतितादोषा वक्ष्यमाणरीत्या परिहृताः। तथाहि 'मिदेर्गुणः' इत्य-

---

तच्चान्त्यस्यैव" अर्थात् वाक्य का वाक्य में अन्वय हुआ, अतः वाक्यैकवाक्यतया अन्वय होने से बहिरङ्गत्व है, क्योंकि उपजीव्योपजीवकभाव (कार्यकारणभाव) रहने पर वाक्यैकवाक्यता होती है। मिदेर्गुणः 'मृजेर्वृद्धिः' इत्यादि में तो सामानाधिकरण्य असम्भव होने से मिद् का अवयव जो इक मृज् का अवयव जो इक् इस तरह वैयधिकरण्येन अन्वय होता है। मिदेर्गुणः, मृजेर्वृद्धिः, में स्थान षष्ठी का अभाव होने से अलोन्त्यपरिभाषा की प्रवृत्ति ही नहीं होगी। क्योंकि यहाँ पर अवयव षष्ठी है, जो प्रक्रिया कौमुदीकार ने कहा, इक् के स्थान पर ही होता है, और जो 'प्रक्रिया कौमुदी' के टीकाकार ने कहा कि "अनियमप्रसङ्गे नियमो विधीयते" अर्थात् जहाँ पर साक्षाद् स्थानी निर्दिष्ट नहीं है, जैसे 'सार्वधातुकार्धधातुकयोः' 'सिचि वृद्धिः' इत्यादि में स्थानिनियमार्थ है, यह सब भाष्य विरुद्ध होने से उपेक्ष्य है। यह मनोरमाकार ने लिखा इसी को रत्नकार लिखते हैं।

जैसे "अलोन्त्यस्य" सूत्र स्थानिनियामक है, अन्त्य अनन्त्य को प्राप्त रहने पर अन्त्य को ही होता है। उसी प्रकार "इको गुणवृद्धी" यह भी "सार्वधातुकार्धधातुकयोः" "सिचि वृद्धिः" इत्यादि तत्तद् विधायकों द्वारा विहित गुण अथवा वृद्धि, इक् अनिक् को प्राप्त रहने पर इक् को ही हो अर्थात् स्थानिनियमार्थ है, यह प्रक्रियाकौमुदीकार प्रासादकार का आशय है। भाष्यविरोध किस तरह है, इसी को दिखाते है, "इको गुणवृद्धी अलोन्त्यस्य, इन दोनों की अविरोधेन "सार्वधातुकार्धधातु-

रूपसिद्धेः। अत एव समयाच्च यापनायाम्" ( पा० सू० ५।४।६० ) इति निर्देशः सङ्गच्छते, तदाह—कौस्तुभे स्पष्टीकृत इति। नन्वेवं तर्हि किमर्थंप्राचां पक्ष उपेक्षित इति चेच्छृणु लघूपधांशे इक्परिभाषानुपस्थितावनिग्लक्षणत्वाच्छिन्नमित्यादौ गुणनिषेधानापत्तिभिया स उपेक्षित इति। क्नोः क्त्वस्यानिग्लक्षणत्वेऽपि गुणनिषेधप्रवृत्तिज्ञापकत्वाश्रयणे तु तस्य पदोपस्थितिपक्षज्ञापकत्वमेवोचितमिति दिक्।

---

अलुप्तषष्ठ्यन्तं मिद् इति एः च पृथक् पदम् मिद इर्मिदिस्तस्यमिदेरिति षष्ठीतत्पुरुषं वा स्वीकृत्यमिदेरिकारस्य गुणविधानान्नदोषः, 'मृजेर्वृद्धिः' 'अचोञ्णिति' इत्यस्य स्थाने 'मृजेर्वृद्धिरचः' 'ञ्णिति' इत्येवं न्यासेन मृजेरच एव वृद्धिरिति दोषाभावः। "पुगन्तलघूपधस्य" इत्यत्रापि 'भिनत्तीत्यादौ दोषवारणाय' पुकि अन्तः पुगन्तः, लघ्वी चासावुपधा च लघूपधा पुगन्तश्च लघूपधा च इत्यनयोः समाहारः पुगन्तलघूपधम्। इति व्याख्यानेन 'अङ्गावयवस्य पुगन्तस्य लघूपधायाश्च गुणः इत्यर्थंकरणान्नक्षतिः "ऋदृशोऽङि गुणः" अत्रापि "उरङिगुणः" ततो दृशेरिति योगं विभज्य पूर्वसूत्रं दृशेरित्यत्रानुवर्त्यदृश्धातोर्ऋकारस्याङिगुणः इत्यर्थेन दोषाभावः।

क्षिप्र—क्षुद्रयोरपि 'स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरमि'त्येको योगः ततः 'पूर्वस्य च गुणः' इत्यपरः, तत्र यणादीति यण आदिर्यणादिः तस्माद्यणादिलुप्तपञ्चमीकं पृथक्पदम्। पूर्वयोगस्यस्थूलादीनां यणादेः परं लुप्यते इत्यर्थेन यणादेः परभागस्य लोपे "ओर्गुणः" इत्युकारस्यगुणे स्थविष्ठ इत्यादीनां सिद्ध्या परत्र क्षिप्रक्षुद्रयोरेवानुवृत्तिः तत्रैव-स्वरितत्वात्, अन्यानुवृत्तौ फलाभावाच्च। तथा च यण आदिः यणादिः तस्मात्परं यणादिपरं लुप्यते, यणादेरेवपूर्वस्य च गुणः इति व्याख्यानात् यण आदी = क्षिप्रक्षुद्रयोः पकार-दकारौ, ततः परस्य रेफशब्दस्य लोपे गुणे च क्षेपिष्ठ इत्यादीनां सिद्धिरिति न दोषः।

उचितमिति। ज्ञापकमूलकवाक्यान्तरकल्पनापेक्षयाऽस्मिन् पक्षे प्रतिपत्तिलाघवादौ-

---

कयोः' में उपस्थिति हो जायगी तथा च अर्थ होगा इक् रूप जो अन्त्य अथवा अन्त्य रूप जो इक् परस्पर दोनों का विशेष्यविशेषण भाव होने से दोनों नियमों का तच्छेष पक्ष में पर्यवसान हो गया। अर्थात् नियम पक्ष का तच्छेष पक्ष में अन्तर्भाव हो गया। अलोऽन्त्यस्य यह नियम विशेषण है "इको गुणवृद्धी" का, अथवा "इको गुणवृद्धी" "अलोऽन्त्यस्य" का विशेषण है।

इस तच्छेष पक्ष को मान लेने पर 'मिदेर्गुणः' इत्यादि में परस्पर विरोध होने से दोनों परिभाषाओं का त्याग हो जाने पर "मिदेर्गुणः" इस सूत्र के बल से सम्पूर्ण को गुण होने लगेगा। तथा च "मेघति" इत्यादि की असिद्धि हो जायगी, यह तच्छेष पक्ष में दोष आया, अतः तच्छेष पक्ष को दूषित करके भाष्यकार ने पदोपस्थिति पक्ष का ही समर्थन किया, तथा च नियम पक्ष में भाष्य विरोध स्पष्ट है।

तच्छेष पक्ष का दूषणोद्धार मनोरमाकार ने शब्दकौस्तुभ में स्पष्ट किया है। दूषणोद्धार प्रकार शब्द रत्नकार लिखते हैं। मिदेः इसका व्याख्यान इस प्रकार है "मिद इ मिदिः तस्य मिदेः" अर्थात मिद् का अवयव जो इकार उसको गुण होता है। 'पुकि अन्तः पुगन्तः लघ्वी उपधा लघूपधा पुगन्तश्च लघूपधा चेत्यनयोः समाहारः पुगन्तलघूपधं तस्य' इस विग्रह के बल से पुगन्तलघूपधस्य का अर्थ होगा सार्वधातुक आर्धधातुक से अव्यवहित पूर्व जो अङ्ग तदवयव पुगव्यवहित पूर्वान्त्य को तथा उपधालघुवर्ण को गुण होता है। अतः भिनत्ति इत्यादि में दोष नहीं है, यह भाष्योक्त दूषणोद्धार है।

अचां मध्य इति । यत्तु प्राचोक्तमन्त्यादचः पर इति । तन्न । "शे मुचादीनाम्" (पा० सू० ७।१।५९) इत्यादावन्त्यस्याचोऽसम्भवात् । तस्यैवान्तावयव इति । तेन त्रपूणीत्यादौ अङ्गस्य नान्तत्वेन दीर्घः सिद्धः । परादित्वे सन सिध्येत् । अभक्तत्वे तु वहंलिह इत्यत्र "वहाभ्रे लिहः" (पा० सू० ३।२।३२) इति खशि "अरुर्द्विषद्–" (पा० सू० ६।३।६७) इति मुमोऽनुस्वारो न स्यात् । अपदान्तत्वात् ।

यत्तु अभक्तत्वे त्रपूणीति दीर्घो न स्यादिति, तत्तु "तदादिग्रहणं स्यादिनुमर्थम्" इत्यङ्गसंज्ञासूत्रस्थवार्तिकेनैव दूषितप्रायम् ।

---

इत्यादाविति । आदिना झलन्तलक्षणो नुम्, इदितो नुमित्यादि च । अचोऽसम्भवादिति । नुमो मित्त्वं तु ज्ञानानीत्यादौ चरितार्थमिति मुचादावन्त्यस्यैव स्यादिति भावः । दीर्घः सिद्ध इति । तच्छब्देन यस्य विहितः स समुदायः परामृश्यते इति भावः । यद्यपि तस्यान्त्याच इति व्याख्यानेऽपि भवितेत्यादौ तासवयवेटो लघूपधाङ्गावयवत्वेन प्राप्तस्य गुणस्य "दीधीवेवीटाम्" (पा० सू० १।१।६) इति निषेधारम्भेण लोकव्यवहारेण चावयवावयवस्य

चित्यम् । किञ्च "मृजेर्वृद्धिः" इत्यत्राच इत्यस्यापकर्षेऽमार्ट् इत्यत्राटो गुणापत्तिवारणायानन्त्यविकारेऽन्त्यसदेशस्येति परिभाषायाः प्रवृत्तिः स्वीकार्या, 'ऋच्छत्यृताम्' इति सूत्रे ऋकारान्तस्य प्रश्लेषः कार्यं "ऋदृशोऽङि" इत्यत्र योगविभागश्च कर्तव्य इत्यधिकं तच्छेषपक्षे गौरवम् । किञ्च परिभाषयोर्गुणगुणिभावो "गुणानाञ्चपरार्थत्वात्" इति न्यायविरोधान्नयुक्तः । किञ्च व्यञ्जनस्य गुणवारणे जनेर्डविधानस्य ज्ञापकत्वमाश्रणीयं तदपेक्षयाऽस्यसूत्रस्य पदोपस्थापकत्वमेव युक्तमित्याशयेनाह—दिगिति ।

झलन्तेति । झल् अन्तश्चरमावयवो यस्य निमित्तसमूहस्य तन्निमित्तक इत्यर्थः । झलन्तावधिक इति यावत् । तेन 'मस्जि' इत्यादिसङ्ग्रह इति भावः, न आदिः प्रभृत्यर्थको मूले, अपितु प्रकारार्थोऽन्यत्रापि दोषसत्त्वात् ।

आरम्भेणेति । अन्ययेटस्तदनवयवत्वेन गुणाप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेति भावः । लोकव्यवहारेणेति । हस्तपादावयवांगुल्यादेर्विशिष्टशरीरावयवत्वं लोकप्रसिद्धमितिभावः ।

---

यदि कहा जाय कि "यापयति" क्ष्मापयति इत्यादि में पुक् अव्यवहित पूर्वान्त्य आकार को गुण हो जायगा तो अनुपयुक्त है, क्योंकि गुण हो जानेपर वृद्धि हो जाने से रूप सिद्ध हो जायगा, गुणोत्तर वृद्धि स्वीकार कर लेनेपर ही 'समयाच्च यापनायाम्' यह निर्देश बन सकता है । 'पुक्यन्तः' इत्यादि रीति से, दोषाभाव हो जाने पर प्राचीनों का पक्ष क्यों उपेक्षित है, तो सुनो—लघूपधांश में इक् परिभाषा की अनुपस्थिति होने पर अनिग् लक्षण हो जाने पर भित्त्वम इत्यादि में गुण निषेध नहीं होगा । यदि कहो कि "त्रसिगृधिधृषिक्षिपेः क्नुः" इस सूत्रविहित क्नु प्रत्यय में कित्व सामर्थ्य से ज्ञापन होगा कि अनिग्लक्षण में भी गुणनिषेधप्रवृत्ति होती है, तो नहीं कह सकते, क्योंकि उससे पदोपस्थितिपक्षज्ञापन ही उचित है, क्योंकि ज्ञापकमूलक वाक्यान्तर कल्पनापेक्षा पदोपस्थिति पक्ष में ज्ञानलाघव है ।

अन्त्य जो अच् उससे परे मित् होता है, यह जो प्राचीनों का व्याख्यान है, वह युक्त नहीं क्योंकि "शेमुचादीनाम्" "नपुंसकस्य झलचः" "इदितो नुम्धातोः" इत्यादि में अन्त्य अच्

समुदायावयवत्वाङ्गीकारादत्र न दोषः, तथाऽपि तथा न व्याख्यातं, पञ्चारत्नीनीत्यादौ पदस्य विभज्यान्वाख्याने उत्तरपदस्यापि नान्तत्वापत्तौ "इगन्त-" ( पा० सू० ६।२।२९ ) इति स्वरानापत्तेरिति स्पष्टं भाष्यादौ। त्रपूणीत्युपलक्षणं 'ता ता पिण्डानाम्' इति नलोपसिद्धेः। तानि तानीत्यर्थे "शेश्छन्दसि-" ( पा० सू० ६।१।७० ) इति शेर्लोपे तदुदाहरणम्।

पञ्चारत्नीनीति। पञ्च आरत्नयः प्रमाणं येषां तानि पञ्चारत्नीनि कुण्डानि, प्रमाणार्थकस्य मात्रचः "प्रमाणे लो द्विगोर्नित्यमिति लुक्"।

अन्वाख्याने इति। अन्वाख्यानं नाम शब्दसंस्कारः, तच्च क्रमिकान्वाख्यानं पदावधिकान्वाख्यानं वाक्यावधिकान्वाख्यानञ्चेति त्रिविधम्। प्रयोगस्योच्चारणक्रमानुरोधेन संस्कारे क्रमिकान्वाख्यानम्। पदपर्यन्तं प्रकृतिं प्रत्ययांश्च संस्थाप्य संस्कारे द्वितीयम्, वाक्यपर्यन्तं प्रकृतीः प्रत्ययांश्च संस्थाप्य संस्कारे तृतीयम्। इगन्तेति। द्विगुसमासेऽइगन्तोत्तरपदे परे संख्यावाचिपूर्वपदम्प्रकृत्येत्यर्थकेनेगन्तेति सूत्रेण स्वरानापत्तिरित्यर्थः।

असम्भव है। यदि कहो कि नुम् यह मित् है, अतः मित्करणसामर्थ्य से अन्त्य को नहीं होगा, तो यह नहीं कह सकते, क्योंकि मित्व, ज्ञानानि इत्यादि में चरितार्थ है, तथा च अलोन्त्यपरिभाषा के बल से मुचादि में अन्त्य को ही होगा। "मिदचोऽन्त्यात् परः" का अर्थ है अचों के मध्य में जो अन्त्य अच् उससे परे समुदाय का ही अन्तावयव मित् होता है। इस अर्थ को स्वीकार कर लेने पर "समुदायभक्तोमित्" यह भाष्य लग जाता है। समुदाय का अवयव स्वीकार करने से त्रपूणि इत्यादि में नान्तत्व होने से "सर्वनामस्थाने चासम्बुद्धौ" इससे दीर्घ हो गया।

यदि कहा जाय कि तस्यैवान्तावयव यहाँ पर तच्छब्देन अच् का ग्रहण होने से, अच् का अन्त्यावयव होने से, अङ्ग का अन्त्यावयवत्वाभाव है, यह कहो तो अनुपयुक्त है, क्योंकि तच्छब्देन जिस समुदाय को विहित है, उस समुदाय का ग्रहण होगा यह अभिप्राय है।

यद्यपि "तस्य = अन्त्याचः" इस व्याख्यान में अर्थात् अन्त्य अच् का अवयव नुम् होता है, इस व्याख्यान में भी त्रपूणि इसमें दोष नहीं। क्योंकि भविता इत्यादि में लघूपधाङ्गावयवत्वेन तास् का अवयव जो इट् उसको गुण प्राप्त रहने पर "दीधीवेवीटाम्" यह निषेध करता है, तथा लोक में भी अवयव का अवयव समुदायावयव कहलाता है। जैसे शरीरावयव हस्त है, उसकी अवयवस्वरूपा अङ्गुलियां हैं, किन्तु हस्त द्वारा शरीरावयवत्व का व्यवहार अङ्गुलियों में होता है। फिर भी इस तरह व्याख्यान नहीं किये, क्योंकि पञ्चारत्नीनि इत्यादि में पदसंस्कार पक्ष स्वीकार करने पर उत्तर पद नान्त हो जाने से, "द्विगुसमास में इगन्तादि परे रहते संख्यावाचक पूर्वपद को प्रकृतिस्वर होता है", इत्यर्थक "इगन्तकालकपालभगालशरावेषु द्विगौ" इससे पूर्वपद प्रकृति स्वर नहीं होगा, यह भाष्यादि में स्पष्ट है।

त्रपूणि यह उपलक्षण है "उपलक्षणत्वञ्च स्वत्रोधकत्वे सति स्वेतरबोधकत्वम्" तानि तानि इस अर्थ में वर्तमान जो ता ता है उसमें शि इसका लोप होता है बहुलता से वेद में, इत्यर्थक "शेश्छन्दसिबहुलम्" इस सूत्र से शि का लोप हो जाने पर "न लोपः प्रातिपदिकान्तस्य" से नकार का लोप होता है। यदि मित् परादि है, इसको स्वीकार करोगे तो नान्त में अङ्गाभाव होने से दीर्घ नहीं होगा तो, त्रपूणि का साधुत्व नहीं होगा। अनवयव मानने पर "वहं" यह कर्म उपपद रहते "वहाभ्रेलिहः" इससे खश् प्रत्यय अनुबन्ध लोप शप् उसका लुक् तथा गुणाभाव हो जाने पर "अरुष्, द्विषद्, अजन्त, को मुम् का आगम होता है खिदन्त उत्तरपद परे रहते अव्यय को छोड़कर, इत्यर्थक "अरुर्द्विषदजन्तस्य मुम्" इस सूत्र से विहित जो मुम् उसको अनुस्वार नहीं होगा, अपदान्त होने से जो कहते हैं कि अनवयव पक्ष में भी त्रपूणीत्यादि में ही दीर्घ नहीं होगा, नान्त अङ्गाभाव होने

स्थानेयोगेति । स्थानेन योगोऽस्या इति विग्रहः । निपातनादेत्वम् ।

---

स्थानेनेति । स्थानशब्दार्थेनेत्यर्थः । तन्निरूपितसम्बन्धः षष्ठ्यर्थो न तु तद्रूपः सम्बन्धस्तदर्थ इति अनेन ध्वनयति । एत्वमिति । व्यधिकरणबहुव्रीहिरप्यत एवेति बोध्यम् ।

---

ननु स्थानं योगो यस्या इति समानाधिकरणबहुव्रीहिणैव सामञ्जस्ये व्यधिकरणपदकबहुव्रीहिप्रदर्शनमनुचितमत आह—तन्निरूपित इति । स्थाननिरुपित इत्यर्थः । न च स्थानं योगः सम्बन्धो यस्याः इत्यर्थकसमानाधिकरणबहुव्रीहिरेवास्त्विति वाच्यम् स्थानरूपसम्बन्धस्य षष्ठ्यर्थत्वाभावात् । तथा च अनिर्धारितसम्बन्धविशेषा षष्ठी स्थानपदार्थानुयोगिकसम्बन्धार्थिका भवतीत्यर्थः फलति । स्थानशब्दार्थश्चवृत्तिविशेष्यतावच्छेदकतावच्छेदकताकेष्टसाधनत्वप्रकारकभ्रमविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकधर्मावच्छिन्नविशेष्यताकेष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकतया प्रसिद्धो वरीवृत्यते ।

इकोयणचीत्यादौ यत्र स्थान्यादेशभावस्तत्र 'इक्कर्मकमुच्चारणमिष्टसाधनत्वप्रकारकभ्रमविषयतावत् यण्कर्मकमुच्चारणमिष्टसाधनत्वप्रकारकप्रमाविषयतावदिति च ज्ञानद्वयम् । आद्यज्ञानीयविशेष्यता च इक्कर्मकोच्चारणनिष्ठा, विशेष्यतावच्छेदकता च कर्मत्वनिष्ठा, तदवच्छेदकता इग्निष्ठा । स्थानपदार्थतावच्छेदकवृत्तित्वे च, निरूपितत्वसम्बन्धेनेगादेरन्वयः, वृत्तित्वञ्च विशेष्यतावच्छेदकतावच्छेदकतायामन्वेति । स्थानपदार्थघटकीभूतचरमविशेष्यतावच्छेकतावच्छेदकताया आश्रयत्वेनादेशेऽन्वयः ।

तथा च 'इङ्निरूपितवृत्तितावती या इक्कर्मकमुच्चारणमिष्टसाध-त्वप्रकारकभ्रमविषयत्वादिति ज्ञानीया, उच्चारणनिष्ठविशेष्यतानिरूपितकर्मत्व-निष्ठावच्छेदकता निरूपिता, इग्निष्ठा विशेष्यतावच्छेदकतावच्छेदकता, तादृशविशेष्यतावच्छेदकता निरूपकं यत् इक्कर्मकमुच्चारणमिष्टसाधनत्वप्रकारकभ्रमविषयतावदितिज्ञानं तादृशज्ञानीया या उच्चारणनिष्ठाविशेष्यता तदवच्छेदको धर्मः उच्चारणत्वं तादृशोच्चारणत्वावच्छिन्नविशेष्यतानिरूपकञ्च यत् यण्कर्मकमुच्चारणमिष्टसाधनत्वप्रकारकप्रमाविषयतावदितिज्ञानं तादृशज्ञानीयाविशेष्यता, उच्चारणनिष्ठा, तदवच्छेदकता कर्मत्वनिष्ठा तदवच्छेदकता यण्निष्ठेति लक्षणसमन्वयः । अत्र ज्ञानमुच्चारणादिक्रियाकर्तृसमवेतंग्राह्यम् । तेन यत्र कश्चिदनेन मूर्खेण यणः स्थान इगुच्चार्यते, इति प्रयुङ्क्ते तत्र स्थानपदघटितवाक्यप्रयोक्तरि तादृशज्ञानाभावे न क्षतिः ।

---

से, यह कहना उचित नहीं, क्योंकि "यस्मात् प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गम्" इस सूत्र में स्थित "तदादिग्रहणं स्यादिनुमर्थम्" इस वार्तिक के बल से संज्ञा हो जाने पर नान्त अङ्ग असम्भव है दीर्घ हो जायगा।

स्थान का अभिप्राय है स्थान शब्दार्थ तृतीया का अर्थ है निरूपितत्व, योग का अर्थ है सम्बन्ध, षष्ठ्यर्थ है स्थाननिरूपितसम्बन्ध, स्थानरूप सम्बन्ध षष्ठ्यर्थ नहीं है, यदि स्थान रूप सम्बन्ध षष्ठ्यर्थ रहता तो स्थानं योगः सम्बन्धो यस्याः इस प्रकार समानाधिकरणपदक बहुव्रीहि भाष्यकार करते, व्यधिकरणपदक बहुव्रीहि से ध्वनन होता है, यहाँ पर स्थान निरूपित सम्बन्ध ही षष्ठ्यर्थ है। व्यधिकरणबहुव्रीहि भी निपातनात् समझना चाहिये। इसका अर्थ होता है अनिर्धारित सम्बन्ध

अनेकविधमिति। स्थानार्थगुणप्रमाणकृतमित्यर्थः। बलीय इति। तेन चेता स्तोतेत्यत्र प्रमाणत आन्तर्यवानकारो नेति भावः॥

---

गुणप्रमाणेति। प्रमाणस्य ह्रस्वत्वादेर्गुणत्वेऽपि ब्राह्मणवसिष्ठन्यायेन पृथगुक्तिः। गुणशब्देनोक्तत्रितयातिरिक्तधर्ममात्रम्। तेन "अनान्तर्यमेवैतयोरान्तर्यम्" इत्यादिस्थानेऽन्तरतमसूत्रस्थभाष्येण न विरोधः। अन्तरतमाभाव एव गुणविधौ ऋकाराकारयोः साद्दश्यमिति तदर्थः। बाह्यानां विवारादीनां साक्षाद्वर्णावृत्तित्वेऽप्यौपचारिकं गुणत्वं बोध्यम्।

---

ननु "जरायाजरस्" इत्यादावीद्दशस्थानपदार्थस्वीकारे जरे इत्यादेः साधुत्वं न स्यात् जराकर्मकोच्चरणमिष्टसाधनत्वप्रकारकभ्रमविषयतावदित्याकारकज्ञानस्यापि स्थानपदार्थसमन्वयायकल्पनीयत्वादितिचेन्न स्थानपदस्य वृत्तिविशेष्यतावच्छेदकतावच्छेदकताकेष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारतायां वृत्तिविशेष्यतावच्छेदकतावच्छेदकताकेष्टसाधनत्वप्रकारकभ्रमविषयत्वप्रकारतायां ज्ञानीयविशेष्यतावच्छेदकावच्छिन्नविशेष्यताकेष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकतावच्छेदकतायां च खण्डशक्तिस्वीकारेण नित्यविधिस्थले प्रथमप्रकरतांशमोषेण द्वितीयप्रकारतामात्रस्य निरूपकतया-ज्ञानेऽन्वयः। विकल्पविधिस्थले तु द्वितीयप्रकारतांशमोषेणप्रथमप्रकारतामात्रस्यज्ञानेऽन्वयः। तत्र तात्पर्यग्राहकं विभाषादिपदमेव। तथा च विकल्पविधिस्थले जराकर्मकोच्चारणेऽपीष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकप्रमाविषयत्वप्रकारकज्ञानविषयत्वेनोभयोरपि पुण्यजनकत्वान्नानुपपत्तिः।

सम्बन्धविशेषोपपादकसमभिव्याहाराभावविशिष्टषष्ठीश्रवणमेतत्परिभाषालिङ्गम्।

कृतशब्दः स्थानादिप्रत्येकेन सह सम्बध्यते द्वन्द्वान्ते श्रूयमाणत्वात्। यत्र लक्ष्ये स्थानतदन्यकृतंसाद्दश्यमनियमप्रसङ्गनिवारणपूर्वकमिथोविरुद्धादेशनियामकतया प्रसक्तन्तत्रलक्ष्ये

---

विशेषाषष्ठी स्थानपदार्थानुयोगिकसम्बन्धार्थिका होती है। स्थान्यादेशभाव स्थल में भ्रमात्मक प्रमात्मक भेद से दो ज्ञान रहते हैं, अतः "इको यणचि" इत्यादि सूत्रों से "अजव्यवहितपूर्वत्वविशिष्टेक्कर्मकोच्चारणं साधु इदं ज्ञानं भ्रमः" अर्थात् साधुत्वप्रकारकभ्रमात्मज्ञानीयविशेष्यतावत्।

अजव्यवहितपूर्वत्वविशिष्टयण्कर्मकोच्चारणं साधु इदं ज्ञानं प्रमा अर्थात् साधुत्वप्रकारकप्रमात्मकज्ञानीयविशेष्यतावत्" यह प्रतीत होता है। अतः इस प्रकार कह सकते हैं। "वृत्तिविशेष्यतावच्छेदतावच्छेदकताकेष्टसाधनत्वप्रकारकभ्रमविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकधर्मावच्छिन्नविशेष्यताकेष्ट साधनत्वप्रकारप्रमाविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकतावच्छेदकता" तदाश्रया यण्कर्तृकसत्ता। "अवच्छेदकता" पर्यन्त स्थान पदार्थ हैं।

वृत्ति=आधेयताश्रय, आधेयताश्रय, इक् होता है, क्योंकि इक् में अवच्छेदकता रहती है, अतः इक् अधिकरण हैं। आधेय अवच्छेदकता रूप है तथा च "इङ्निष्ठाधिकरणतानिरुपिताधेयतावच्छेदकतेत्यत्र।"

भ्रमात्मक ज्ञानीयविशेष्यता उच्चारण में है, उसकी अवच्छेदकता (विशेषणता) कर्मत्व में तदवच्छेदकता इक् में है। निरूपितत्व सम्बन्ध से इक् का वृत्तित्व में सम्बन्ध होता है। वृत्तित्व का द्वितीय अवच्छेदकता में अन्वय होता है, वृत्तित्व में अन्वय करनेवाला निरूपितत्व षष्ठ्यर्थ है। स्थानपदार्थ का अवयवीभूत अन्तिम विशेष्यतावच्छेदकतावच्छेदकता का आश्रयत्व सम्बन्ध से विधेय (आदेश) में अन्वय होगा। प्रमात्मकज्ञानीयविशेष्यता उच्चारणनिष्ठा, उसकी विशेषणता-कर्मत्व में उसकी विशेषणता यण् में रहेगी।

तस्मिन्निति सप्तम्यन्तानामनुकरणम् । निःशब्दो नैरन्तर्यपरः । दिशिरुच्चारणक्रियः । अचि यणित्युक्ते व्यवहितेऽव्यवहिते च सति प्राप्तमव्यवहिते एवेति, पूर्वस्य परस्य च प्राप्तं पूर्वस्यैवेति च नियम्यते । अव्यवहितस्येति तु फलितार्थकथनम् ।

---

अनुकरणमिति । अचीत्यादिसप्तम्यन्तार्थकस्य स्वतन्त्रतच्छब्दस्य निर्देशो न स्वरूपपरम् । व्याख्यानाद्, बहुलक्ष्यसंस्कारानुरोधाच्च । सप्तमी तु सप्तम्यन्तानामेव तच्छब्दार्थत्वमिति

---

स्थानत आन्तर्यं वलीय इति । अत्रमानञ्च "षष्ठीस्थाने" इत्यत एकदेशानुवृत्या स्थाने ग्रहणेऽनुवर्तमाने पुनः "स्थानेऽन्तरतमः" इति सूत्रे स्थाने ग्रहणमेव तद्धि तृतीयया विपरिणमय्य वाक्यभेदेन स्थानिनः प्रसङ्गे जायमानः, सति सम्भवे स्थानत एवान्तरतम-इत्यर्थकम् ।

तमब्ग्रहणमेवानेकविधान्तर्यसत्तागमकम् । यदि स्थानकृतमेवान्तर्यंसुप्रसिद्धन्तदा तमब्ग्रहणवैयर्थ्यं स्पष्टमेव । स्थानत आन्तर्यमिकोयणचीत्यादौ । अर्थतः "तृज्वत्क्रोष्टुरित्यादौ" गुणतो वाग्घरीत्यादौ 'प्रमाणतोऽदसोसेर्दादुदोम' इत्यादौ । चेता, स्तोता इत्यत्र प्रमाणतोऽकारोगुणः प्राप्नोति, स्थानतः एकरोकारौ । अनयापरिभाषया एकारौकारौ भवतः । ह्रस्वत्वादीनामपि गुणग्रहणेन सिद्धे पृथक्प्रमाणग्रहणं व्यर्थमत आह प्रमाणस्येति । न्यायेनेति । ब्राह्मणेन सहितो वसिष्ठो ब्राह्मणवसिष्ठस्तस्यन्यायेनेत्यर्थः । ननु "झयो होऽन्यतरस्याम्" इत्येतदुदाहरणविवेचनसमये बाह्यप्रयत्नस्य गुणपदव्यवहार्यस्य सादृश्यप्रयोजकत्वं सर्वैः स्वीकृतं, तच्चनोपपद्यते वर्णावृत्तित्वात् । ते हि काकलकाधस्तात् कण्ठविवरनिष्ठविकासादिकार्यजनकाः, अत एव तेषां बाह्यत्वमत आह—बाह्यानामिति ।

तस्मिन्नित्यौपश्लेषाधिकरणबोधकसप्तम्यन्तस्यानुकरणम्, तथा चोपश्लेषाधिकरण-

---

अतः "इको यणचि" इत्यादि स्थलों में अजव्यवहितपूर्वत्वविशिष्टेक्कर्मकमुच्चारणमिष्टसाधः—नत्वप्रकारकभ्रमविषयतावत् इसको तथा "यण्कर्मकोच्चारणमिष्टसाधनत्वप्रकारकप्रमाविषयतावत्" इस ज्ञान को लेकर स्थान पदार्थ कासमन्वय होगा ।

जिस लक्ष्य में स्थानकृत सादृश्य तद्भिन्न सादृश्य की प्राप्ति हो, वहाँ पर स्थानकृत सादृश्य बलवान् होता है । अतः चेता स्तोता यहाँ पर स्थानकृत सादृश्य लेकर एकार ओकार गुण होता है । ह्रस्वादि का भी गुणकृत सादृश्येन ग्रहण हो जायगा, पृथक् प्रमाण ग्रहण व्यर्थ है, इस अरुचि पर शब्दरत्नकार लिखते हैं एक मात्राकालिक ह्रस्वत्वादि में गुणत्व रहने पर भी ब्राह्मणवसिष्ठन्यायेन प्रमाण का पृथक् उपादान किया । न्याय का स्वरूप है, सर्वे ब्राह्मणाः समागताः वसिष्ठोऽपि, यद्यपि ब्राह्मणत्वेन ब्राह्मणमात्र का ग्रहण होने से वसिष्ठ का भी ग्रहण हो जाता तथापि प्रधानता ज्ञापनार्थ वसिष्ठ का पृथक् प्रयोग होता है । उसी प्रकार यहाँ पर भी प्रमाणकृत सादृश्य का पृथक्-पृथक् ग्रहण किया गया ।

स्थानकृत, अर्थकृत, गुणकृत, प्रमाणकृत, इस परिगणन को स्वीकार करने पर "उरण रपरः" इस सूत्र से जात अण् को रपर होता हैं, इस पक्ष में ऋवर्ण के स्थान पर गुण वृद्धि प्राप्त रहने पर सम्पूर्ण गुणवृद्धि संज्ञक आदेश प्राप्त होंगे । अतः उस दोष को वारण करने को जो भाष्यकार ने कहा "अनान्तर्यमेवैतयोरान्तर्यम्" अर्थात् ऋकार अकार का सादृश्य सम्बन्धाभावत्व जो साधारण धर्म है, वही सादृश्य है, यह भाष्य विरोध होगा, इस अरुचि पर कहते हैं, गुण शब्देन स्थानार्थ प्रमाणातिरिक्त धर्ममात्र अर्थात् अना न्तर्यत्व इत्यादि लक्ष्यानुसार धर्मों का ग्रहण होने से "अनान्तर्यमेवेत्यादि" स्थानेऽन्तरतमः सूत्रस्थ भाष्य से विरोध नहीं हुआ ।

बोधनाय। तद्बोध्यार्थस्य निर्दिष्टे इत्यनेन सामानाधिकरण्याय चेति भावः। शब्दार्थकत्वेन त्वनुकरणत्वव्यवहार इति बोध्यम्। दिशिरुच्चारणेति। अत एव "जनपदे लुप्" (पा० सू० ४।२।८२) इत्यादौ न दोषः। नह्यर्थं उच्चारितो नापि शब्दस्य निरन्तर इति भावः। अचि यणित्युक्ते इति। अचि उपश्लिष्टस्य यणित्युक्ते इत्यर्थः। इदं "संहितायाम्" (पा० सू० ६।१।७२) इति सूत्रे भाष्ये स्पष्टम्। फलितेति। सप्तम्यन्तार्थेऽव्यवहिते पञ्चम्यन्तार्थोऽप्यव्यवहित एवेति भावः।

सप्तम्यन्तपदघटिते शास्त्रे निर्दिष्टे पूर्वस्य इत्युपतिष्ठते "कर्तृकर्मणोः कृतिरि" त्यत्र नास्याः प्रवृत्तिः। नन्वनुकरणत्वंस्वसदृशशब्दमात्रबोधकतात्पर्यकोच्चारणविषयत्वम् अतो यस्मिन् सूत्रे 'तस्मिन्निति पदं स्यात्' तत्रैवास्याः परिभाषाया उपस्थितिः स्यात् नतु "इकोयणचीत्यादाविति चेन्न "तस्मिन्नणियुष्माकास्माकौ" इत्यत्रैव निर्दिष्टे पूर्वस्येति वक्तव्ये सामान्यसूत्रारम्भसामर्थ्येन बहुलक्ष्यसंस्कारानुरोधेन च न तस्मिन्निति स्वरूपपरम्।

तद्बोध्यार्थस्येति। इति शब्दबलेन गम्यमानस्य सप्तम्यन्तार्थस्येत्यर्थः। औपश्लेषाधिकरणसप्तमीचास्याः परिभाषायाः लिङ्गम् 'नतु' सति सप्तमी। सप्तम्यन्तानामिति। औपश्लेषाधिकरणबोधकसप्तम्यन्तानामित्यर्थः। प्रकृतसूत्रे औपश्लेषिकसप्तम्यन्तानामेव तत्पदेन ग्रहणात्। अन्यथान्यसप्तमीस्थलेऽपि एतत्परिभाषाप्रवृत्तौ "उभयप्राप्तौ कर्मणि" इति सूत्रं व्यर्थं स्यात् "कर्तृकर्मणोः कृतिरित्यत्र" प्रकृतपरिभाषाप्रवृत्तौ युगपत्कर्तृवाचकस्य कर्मवाचकस्य च तत्कृदन्ताव्यवहितपूर्वत्वासम्भवेनोभयप्राप्तेरेवासम्भवात् तथा चौपश्लेषाधिकरणबोधकसप्तम्यन्तपदघटिते शास्त्रे निर्दिष्टेपूर्वस्येत्युपतिष्ठत इत्यर्थः फलति।

गुणविधि में, अकार अकार का सादृश्य स्थानकृत सादृश्याभाववत्त्वेन ग्रहण करते हैं। काकलिका के नीचे कण्ठ विल का विकासादि कार्य करने वाले जो विवारादि बाह्य प्रयत्नों का समवायसम्बन्धेन या तादात्म्यसम्बन्धेन वर्णों में अवृत्ति रहने पर भी, इनमें आरोपित वर्णवृत्ति धर्मत्व है। अर्थात् वर्णाभिव्यक्त्यनन्तरभावी होने से विवारादि में वर्णवृत्तित्वारोप होता है।

तस्मिन् यह औपश्लेषाधिकरण बोधक सप्तम्यन्त का अनुकरण है, अतः औपश्लेषाधिकरण बोधक सप्तम्यन्त पदविशिष्ट "इकोयणचि" इत्यादि में निर्दिष्टे पूर्वस्य यह उपस्थित होता है। 'कर्तृकर्मणोः कृतिः' यहाँ पर इसकी प्रवृत्ति नहीं होती। यद्यपि 'स्वसदृश शब्दमात्र तात्पर्यक उच्चारण विषयत्वरूप अनुकरणत्व' होने से जिस सूत्र में "तस्मिन्" इत्यादि पद हो, वहीं पर परिभाषा की उपस्थिति होनी चाहिये। तथापि "तस्मिन्निति निर्दिष्टेपूर्वस्य" यह सामान्यसूत्रकरणमूलक व्याख्यान से, तथा बहुलक्ष्यसंस्कारानुरोध सामर्थ्य से 'तस्मिन्' इस स्वरूपमात्र का ग्रहण नहीं होता, अपितु सप्तम्यन्त मात्र का ग्रहण होता है। अन्यथा "तस्मिन्नणिचयुष्माकास्माकौ" यहाँ पर निर्दिष्टे पूर्वस्य का भी पाठ कर देते। यह मनोरमाकार का कथन है।

शब्दरत्नकार का अभिप्राय है, अचि इत्यादि सप्तम्यन्त पद है अर्थ जिसका, इस तरह का स्वतन्त्र तत् शब्द का उच्चारण, स्वरूप परक नहीं है, व्याख्यान से, तथा बहुलक्ष्य संस्कारानुरोध से। अन्यथा "तस्मिन्नितिनिर्दिष्टे पूर्वस्य" इस सूत्र की "तस्मिन्नणि च युष्माकास्माकौ" यहीं पर ही प्रवृत्ति होगी। तस्मिन् यहाँ पर सप्तमी तो इसलिए है कि औपश्लेषाधिकरण बोधक सप्तम्यन्तों का ही तत्पदेन ग्रहण हो, तथा सप्तम्यन्तार्थ का निर्दिष्टे के साथ समानाधिकरण हो। अतः इसका अर्थ होता है, सप्तमी प्रकृत्यर्थ से अव्यवहित पूर्व को कार्य हो। शब्दरूप अर्थ का बोधक होने से अनुकरणत्वेन व्यवहार होता है। अतः, इति शब्द के बल से तस्मिन् को तदर्थ का बोधक होने से शब्द बोधकत्वाभाव है, अतः अनुकरणत्व व्यवहार नहीं होगा, यह कथन चिन्त्य है।

परस्य यदिति। "तस्मादित्युत्तरस्यादेः" इति न सूत्रितम्। आदेरित्यंशस्य सर्वादिशबाधकत्वापत्तेः। सिद्धान्ते तु परत्वात्सर्वादिशत्वं बाधकमित्यनुपदमेव वक्ष्यति ॥

---

न सूत्रितमिति। "स्वंरूपम्" (पा० सू० १।१।६८) इत्यतः प्रागिति शेषः। तत्र "आदेः" (पा० सू० १।१।५४) इति पृथग्वाक्यं तत्र "उत्तरस्य" इत्यनुवर्तते स्थानपष्ठी चेयं, पञ्चमीनिर्देशेन यत्कार्यं तदुत्तरसम्बन्धि, उत्तरस्य स्थाने विधीयमानं चादेर्बोध्यमिति वाक्यार्थद्वयं,वाक्यभेदसामर्थ्याच्च "आदेः" इत्यंशं विनापि क्वचिदंशान्तरप्रवृत्तिः। "आदेः" इत्यंशस्त्वनुवृत्तोत्तरस्येत्यस्यावृत्त्या परत्वबोधकशब्देन यत्र विधानं तत्रैवेति "नित्यं ङितः"

---

सामानाधिकरण्याय चेति। तथा च सप्तम्यन्तार्थेऽव्यवहितोच्चारिते उपश्लिष्टस्य पूर्वस्य कार्यमिति वाच्याऽर्थः। तत्र चाव्यवहितोच्चारितसप्तम्यन्तार्थोपश्लिष्टमुद्दिश्य पूर्वत्वविधाने अव्यवहितोच्चारितसप्तम्यन्तार्थोपश्लिष्टस्य केनाप्यविधानादुद्देश्यासिद्धिः। यद्रि तु सप्तम्यन्तार्थे उपश्लिष्टस्य यत्कार्यं तदव्यवहितोच्चारिते पूर्वस्य बोध्यमित्येवमुद्देश्यविधेयभावकल्पनं तदापि गौरवम्। तस्माद्यत्रोपश्लेषाधिकरणबोधकपदं तत्र 'निर्दिष्टे पूर्वस्य 'इतिपदद्वयमुपतिष्ठते। न दोष इति। तत्र चेदुपस्थितिस्तदा जनपदे देशेऽर्थे लक्षणया जनपदवाचिनि वा पूर्वस्येत्यर्थेऽनिष्टापत्तिरूपदोषो नेत्यर्थः।

अचि उपश्लिष्टेति। अचि उपश्लिष्टस्य यणिति कथनेन यत्रोपश्लेषाधिकारे सप्तमी तत्रास्योपस्थितिरिति सूचितम्। व्यवधानस्य पूर्वोच्चारितत्वपरोच्चारितत्वान्यतररूपस्य यत्रौपश्लेषाधिकारत्वं तत्रैवसम्भवात्, अवध्यवधिमतोः साजात्यात्। पूर्वत्वादिव्यवहारस्य व्यवहितेऽपिदर्शनादस्मिन्सूत्रेनिर्दिष्टपदम्। शब्दार्थकत्वेनेति—अनुकार्यमात्रबोधकत्वेनेत्यर्थः।

नसूत्रितमिति। यत्त्वस्यानेकाल्सूत्रात् पूर्वमिति शेषस्तत्र 'आदेरित्यंशस्येत्युत्तरमूलग्रन्थविरोधापत्तेः। तद्ध्वनयन्नाह—स्वंरूपमिति। निर्दिष्टपदानुवृत्तये तत्र सन्निवेश-

---

निर् शब्द व्यवधानराहित्य का बोधक होने से, दिशूधात्वर्थ उच्चारण होने से, अर्थ होता है। सप्तमी प्रकृत्यर्थ से अव्यवहित पूर्व को कार्य हो। निर्दिष्ट ग्रहण सामर्थ्य से, लक्षणादि के विना मुख्य वृत्ति से शब्द तात्पर्यक जहाँ पर निर्देश हो, वहाँ पर "तस्मिन्निति निर्दिष्टेपूर्वस्य, परिभाषा सूत्र की उपस्थिति होती है, अर्थ तात्पर्यक "जनपदे लुप्" "अतिशायने" इत्यादि सूत्रों में इसकी उपस्थिति नहीं होती। क्योंकि इसका अर्थ है सप्तमी प्रकृत्यर्थ से अव्यवहितोच्चारित पूर्व को कार्य हो, देश रूप अर्थ उच्चारणाश्रय नहीं हो सकता, असम्भव होने से। शब्द और अर्थ का अव्यवहित पूर्वापरत्व भी नहीं वन सकता, क्योंकि अवधि अवधिमान् का साजात्य होना उचित है। किञ्च अर्थ निर्देश में "जनपदे यः प्रत्ययः" इस प्रकार अन्वय होने पर अनियमाभाव होने से नियमकारिणी परिभाषा उपस्थित नहीं होगी। अच् समीपवर्ती इक् को यण् होता है, यह कहने पर व्यवधानविशिष्ट, तथा अव्यवहित, उभय को प्राप्त रहने पर, अव्यवहित को ही होता है, यह नियम होता है। इसी प्रकार पूर्व तथा पर को प्राप्त रहने पर, पूर्व को ही होता है यह भी नियम होता है। अव्यवहितः यह फलितार्थ कथन है अर्थात् सप्तम्यन्तार्थ अव्यवहित रहने पर, षष्ठयन्तार्थ अव्यवहित ही रहता है, समानज्ञानज्ञेयत्व रहने से।

अथ, निर्दिष्ट पदानुवृत्त्यर्थ 'स्वरूपं शब्दस्याशब्दसञ्ज्ञा १।१।६८' इस सूत्र के प्राक् "तस्मादित्युत्तरस्यादेः" यह न्यास करना चाहिये लाघव होने से। तस्मादित्युत्तरस्यादेः" यह न्यासः

( पा० सू० ३।४।९९ ) इत्यादौ न प्रवर्त्तत इति भावः। वक्ष्यतीति। न च "अनेकाल्" ( पा० सू० १।१।५१ ) इत्यतः पूर्वमेव "तस्मिन्निति निर्दिष्टे पूर्वस्य" ( पा०सू० १।१।६६ ) "तस्मादित्युत्तरस्यादेः" इति सूत्रे कुतो न पठिते इति वाच्यम्। "आदेः" इत्यंशे "षष्ठी-स्थाने" इत्यस्यासम्बन्धे "आज्जसेरसुक् ( पा० सू० ७।१।५० ) इत्यादावपि तस्य प्रवृत्त्या-पत्तेः। सम्बन्धे मध्ये "तस्मिन्निति-" "तस्मादिति-" अनयोरपि तत्सम्बन्धे तयोरप्यागम-विषयेऽप्रवृत्त्यापत्तेरिति दिक्।

---

आवश्यकः। अथ "तस्मादित्युत्तरस्यादेरिति सूत्रकरणे यत्रादेरित्यस्यानुपस्थितिस्तत्र तस्मादित्यस्याप्यनुपस्थितिः स्यात्तथा च "गाङ्कुटादिभ्य" इत्यादौदोषः स्यादिति चेदल-मेकस्मिन् सूत्रे उत्तरस्येतिपृथक् पाठात्। क्वचिदिति। आदेशव्यतिरिक्ताविषयेऽप्यव्यवहित-परत्वांशयोः प्रवृत्तिरिति न "गाङ्कुटादिभ्य" इत्यादौ दोष इत्याशयः। ननु यथा आदे-रित्यंशाप्रवृत्तावपि तस्मादित्यस्य क्वचित्प्रवृत्तिस्तथा तस्मादित्यंशं विनाप्यादेरित्यस्यापि प्रवृत्त्यापत्तिरिति "नित्यंङित" इत्यादौ दोष एवेत्यत—आहादेरित्यंशस्त्विति। आवृत्येति अत्रप्रमाणन्तु पचावेदं प्रयोगदर्शनम्। "नित्यङित" इति "तिङ्शित्" सार्वधातुकमित्या-दाववश्यमाश्रयणीयमानस्य धात्वधिकारस्य सम्बन्धेऽपि विकरणव्यवधानेऽपि प्रवृत्तये विहितविशेषणमाश्रीयत, इति भावः। आदिशब्देनेतश्च लोप इत्यस्य संग्रहः। 'षष्ठी-स्थाने' इत्यस्य सम्बन्धासम्बन्धेन समाधत्ते। आदेरित्यंशे इति। तस्य = आदेरित्यंशस्य प्रवृत्त्यापत्तेरिति तथा चादेर्जसवयवाकारस्यासुगागमेऽकारोच्चारणसामर्थ्यात् "अतोगुणे" इति पररूपाभावे सकारोच्चारणसामर्थ्यात् संयोगान्तलोपाभावेऽनिष्टरूपापत्तिः स्पष्टैव। सम्बन्धे इति। षष्ठीस्थाने इत्यस्य सम्बन्धे इत्यर्थः। अत्र निर्दिष्टस्येत्यस्याध्याहारेण स्थान-षष्ठीनिर्दिष्टस्य यत्कार्यं तत्तस्यादेरित्यर्थेन "आज्जसेरसुक्" इत्यत्रनोक्तदोषः तत्रासुकः कित्त्वेन जसेरिति षष्ठ्या अवयवार्थकत्वनिर्णयात्। मध्य इति। पठितयोरिति शेषः। तयोर्मध्ये पठितयोः।

आगम विषय इति। "आने मुक्" "छे च" इत्येतद्विहितागामविषय इत्यर्थः। एवं-

---

करने पर जहाँ पर "आदेः" इसकी अनुपस्थिति होगी वहाँ पर 'तस्मात्' इस अंश की भी अप्रवृत्ति होगी, तथा च "गाङ्कुटादिभ्यः" इत्यादि में दोष होगा इति न वक्तव्यम्, उत्तरस्य तथा आदेः का पृथक् पाठ होने से अतः "आदेः" इस अंश में 'उत्तरस्य' का अनुवर्तन होगा, उत्तरस्य में जो षष्ठी है, वह स्थानषष्ठी है तथा च पञ्चमी का उच्चारण करके विधीयमान जो कार्य, वह उत्तर सम्बन्धी होता है। अर्थात् पञ्चमी प्रकृत्यर्थ से अव्यवहित पर को कार्य होता है। यह प्रथम वाक्यार्थ बोध होगा, द्वितीय वाक्यार्थ बोध होगा, उत्तर के स्थान में विधीयमान जो कार्य वह उसके आदि को होता है। एवं वाक्यभेद सामर्थ्य से आदेः 'इस अंश के बिना भी' 'गाङ्कुटादिभ्यः' इत्यादि में अंशान्तर की प्रवृत्ति हो जायगी। 'आदेः' इस अंश की प्रवृत्ति तो 'उत्तरस्य' की आवृत्ति हो जाने से परत्व बोधक शब्द के साथ जहाँ पर विधान होगा, वहीं पर इसकी प्रवृत्ति होगी। अतः 'नित्यंङितः' यहाँ पर 'आदेः' इस अंश की प्रवृत्ति नहीं होती इति चेदलम् 'आदेः' यह सर्वादेश का बाधक होने से। सिद्धान्त में परत्वात् 'अनेकालशित्सर्वस्य' 'आदेः परस्य' का बोधक होता है। यह अनुपद ही मनोरमाकार कहेंगे। अतः "स्वरूपं" १।१।६८ इसके पूर्व "तस्मादित्युत्तरस्यादेः" इस न्याय को नहीं कर सकते।

अथ 'अनेकाल' १।१।५५ इससे पूर्व ही तस्मिन्निति 'निर्दिष्टे पूर्वस्य' तथा 'तस्मादित्युत्तरस्यादेः'

"अनेकाल्" ( पा० सू० १।१।२५ ) ॥ शित उदाहरणम् "इदम इश्" । इतः ।

यत्तु–वृत्तिकृता "जश्शसोः शिः" ( पा० सू० ७।१।२० ) इत्युदाहृतं तन्न । सर्वादेशतायाः प्राक् शित्त्वस्यैवालाभात् । तत्र हि डाणलोरिवानुपूर्व्यादनेकाल्त्वेनैव सर्वादेशत्वमिति सिद्धान्तः । इत्यादाविति । आदिशब्देन "अतो भिस ऐस्" ( पा० सू० ७।१।९ ) इति गृह्यते । परत्वादिति । अत एव "आदेः परस्य" ( पा० सू० १।१।५४ ) इति पृथक् क्रियते इत्युक्तम् । "उत्तरस्य" इत्यंशस्तु औशैसोरपि प्रवर्तत एव ।

यत्तु—प्राचा "आदेः" इति सूत्रं विवृण्वता पञ्चमीनिर्देशेनेत्याद्युक्तं, तदसम्बद्धमिति स्पष्टमेव ।

---

डाणलोरिवेति । आदेशानां प्रत्ययाधिकारे पाठेऽपि वाक्यार्थबोधोत्तरमेव प्रत्ययत्वज्ञानेनोपदेशे णकारे इत्वाप्रवृत्तेस्तदुत्तरं लक्ष्ये प्रवृत्तिकाले इत्वेऽप्यनेकाल्त्वाक्षतेरिति भावः । प्रवर्तत एवेति । उपपादितमेतत् ।

---

सति विपरीतरूपापत्तिर्दुर्वारैवेति । एतादृशन्यासपक्षे आदेरित्यस्य यत्र स्थानषष्ठीनिर्दिष्टादेशस्य तस्मादित्यनेन नियमस्यतत्रैव प्रवृत्तिः स्यात् । एवञ्च 'ज्यादादीयसः' इत्यत्र ज्यादिति पञ्चम्याः परस्येत्याध्याहारेणोपपत्त्या तत्र नियमाप्रवृत्तेस्तस्मादित्यस्य तत्राप्रवृत्तावादेरित्यस्याप्यप्रवृत्त्यापत्तावलोन्त्यस्य प्रवृत्तावनिष्टापत्तिरित्यपि बोध्यम्, सिद्धान्ते तु परस्येत्यस्याध्याहारेऽपि परत्वविशिष्टबोधकशब्देन परस्यादेशविधानमस्त्येवेत्यादेरित्यस्य प्रवृत्त्या न दोषोऽत आह दिगिति ।

ननु डाणलोरिवेति दृष्टान्तोपादानं प्रकृते विरुद्धं तयोः प्रत्ययाधिकारे पाठेन प्रत्ययतया क्रमानुपयोगादाह—आदेशानामिति । आदेशानामिति बहुवचनं च्ल्यादेशसंग्रहाय प्रत्ययाधिकारे पाठे इति । इदं णत्विषयम् । डादेशस्य प्रत्ययाधिकारादन्यत्र पाठात् । वाक्यार्थबोधोत्तरम् । "षष्ठी स्थाने" इति शास्त्रैकवाक्यतया वाक्यार्थबोधोत्तरम् । एतेन तस्मिन्

---

इन दोनों को पढ़ेंगे इति चेदलम् । आदेः इस अंश में "षष्ठी स्थाने" इस अंश का सम्बन्ध हो जाने पर "आज्जसेरसुक्" इसमें आदेः इस अंश की प्रवृत्ति हो जाने से ब्राह्मणासः इत्यादि में दोष हो जायगा, आदि जो अवयव अकार उसको असुगागम होने से । अकारोच्चारण सामर्थ्य से "अतोगुणे" इससे पररूपाभाव तथा सकारोच्चारण सामर्थ्य से संयोगान्तलोपाभाव होता है । 'षष्ठीस्थाने' इसका सम्बन्ध करने पर निर्दिष्ट का अध्याहार हो जाने पर अर्थ होगा, स्थान षष्ठी निर्दिष्ट को जो कार्य होता है, वह उसके आदि को हो । इस अर्थ में 'आज्जसेरसुक्' इसमें दोष नहीं पड़ेगा, क्योंकि असुक् कित् होने से अवयवावयविभाव में षष्ठी है । किन्तु 'तस्मिन्निति' 'तस्मादिति' इन सूत्रों में 'षष्ठी स्थाने' का सम्बन्ध हो जाने पर इन सूत्रों की आगम विषय में प्रवृत्ति नहीं होगी । तथा च "छे च" "ङःसिधुट्" इत्यादि में पूर्व पर लाभ नहीं होगा ।

शित् का उदाहरण "इदम इश्" "इतः" "इह" यहाँ पर "इदम इश्" इस सूत्र से प्राग्दिशीय प्रत्यय परे रहते विधीयमान इश्, शित्वात् सम्पूर्ण के स्थान पर होता है । सर्वादेश के पूर्व इत्संज्ञा होने के कारण अनेकाल्त्वाभाव होने से । जो वृत्तिकार ने "जश्शसोः शिः" कुण्डानि तिष्ठन्ति "कुण्डानि पश्य" ये उदाहरण दिये, वे मनोरम नहीं हैं, क्योंकि सर्वादेशता के पहले "लशक्वतद्धिते"

परनित्येति । परान्नित्यं यथा । तुदति । रुणद्धि । परमपि लघूपधगुणं बाधित्वा शश्नमौ । तथारन्धेर्णिच् रन्धयति । परामप्युपधावृद्धिं बाधित्वा "रधिजभोः–" ( पा० सू० ७।१।६१ ) इति नुम् । न च सोऽपि शब्दान्तरप्राप्त्या ऽनित्य इति वाच्यम् । कृताकृतप्रसङ्गमात्रेणापि क्वचिन्नित्यताभ्युपगमात् । अन्तरङ्गं यथा–

---

शब्दान्तरप्राप्त्येति । यद्व्यक्तिसम्बन्धितया पूर्वं प्रवृत्तिस्तद्व्यक्तिसम्बन्धितयैव पुनः

---

वाक्ये प्रत्यय इत्यस्य सम्बन्धाभावेऽपि क्षत्यभावोध्वनितः । उपदेशे=आज्ञातस्वरूपज्ञापकपाणिन्याद्युच्चारणाभिव्यक्त्यव्यवहितकाले तादृशवाक्यार्थबोधसमये इत्यर्थः ।

प्रवृत्तिकाले इति । "बभूव" इत्यादिलक्ष्यसंस्कारकाले यो वाक्यार्थबोधस्तस्योत्पत्तिकाले इत्यर्थं इति मनोरमाकाराभिप्रायवर्णनमेव । नव्यमतेन प्राचोक्तं "जश्शसोः शिः" इत्युदाहरणमपि युक्तमेव, शकारस्यानुबन्धत्वयोग्यतया 'नानुबन्धकृतमनेकालत्वमिति, परिभाषाविषयत्वसत्वात् । शित्वञ्चेत्सञ्ज्ञायोग्यशकारत्वमेव । इत्सञ्ज्ञायाः प्रवृत्तिर्यद्यप्यादेशोत्तरम्भवति तथापि योग्यताऽस्त्येव अनुबन्धत्वमपीत्सञ्ज्ञायोग्यत्वमेव । ध्वनितञ्चेदम्—'अनेकाल्शित्सर्वस्येति, सूत्रे भाष्ये तत्रहि शित उदाहरणं 'जसःशो' इत्यादिप्रतिपाद्यानेकाल्त्वादेव तत्संसाध्य व्यर्थं शिद्ग्रहणं 'नानुबन्धकृतमनेकाल्त्वं' भवति इति ज्ञापनार्थमुक्तम् । इत्सञ्ज्ञायोग्यत्वरूपस्यानुबन्धत्वस्यानङ्गीकारे तत्र परिभाषाया आप्राप्त्याशित उदाहरणत्वस्यासम्भवेनभाष्यासङ्गतिरेव स्यात् । किञ्चकाणोर्नासारूप्यप्रयुक्तो विकल्पोऽन्यथा तत्रापि वाक्यार्थबोधोत्तरं प्रत्ययत्वज्ञानेनेत्सञ्ज्ञाप्रवृत्तावप्युपदेशेऽसारूप्यमस्त्येवेति । असारूप्यम्=सारूप्यभिन्नत्वम्, सारूप्यञ्च-स्वघटक यावद् वर्णघटितत्वम्, काणोः

---

इससे इत्सञ्ज्ञा नहीं हो सकती, अतः वहाँ पर डा, णल् की आनुपूर्वी की तरह अनेकालत्वेन सर्वादेश होगा ।

अथ णल् की तरह दृष्टान्तोपापादन प्रकरणविरुद्ध है, क्योंकि उसका प्रत्ययाधिकार में पाठ होने से प्रत्ययत्व रहने के कारण आनुपूर्वी अनुपयुक्ता है इति चेदलम् । आदेशों का प्रत्ययाधिकार में पाठ रहने पर भी वाक्यार्थज्ञान के बाद ही प्रत्ययत्व ज्ञान होने से, उपदेशणकार में इत्संज्ञा की अप्रवृत्ति होने से, प्रत्ययत्व ज्ञानोत्तर बभूव इत्यादिलक्ष्यसंस्कार काल में जो वाक्यार्थबोध, उसकी उत्पत्तिकाल में इत् सञ्ज्ञा होने पर भी अनेकालत्व अक्षत है ।

वस्तुतस्तु "काशिकाकारोक्त" "जश्शसोःशि" यह उदाहरण ही युक्त है, क्योंकि "इत्संज्ञायोग्यत्वमनुबन्धत्वम्" शकार अनुबन्धत्व योग्य है, अतः "नानुबन्धकृतमनेकाल्त्वम्" इस परिभाषा की प्रवृत्ति हो जायगी "अस्तेर्भूः" इत्यादि में "अनेकाल् शित् सर्वस्य" के द्वारा 'अलोन्त्य' 'सूत्र का अपवादत्वेन बाध होता है । "अष्टाभ्यऔश्" "अतो भिस् ऐस्" इत्यादि में परत्वात् "अनेकाल् शित् सर्वस्य" द्वारा आदेः परस्य का बाध होगा । "आदेः परस्य" यह "द्वीपम्" में चरितार्थ है, अनेकाल्शित् सर्वस्य "इतः" यहाँपर चरितार्थ है, अष्टाभ्य औश् इत्यादि के विषय में "अनेकाल शित् सर्वस्य" आदेः परस्य को परत्वात् बाध लेगा, "आदेः परस्य" का "अनेकाल् शित् सर्वस्य" परत्वात् बाध करता है, इसलिए "आदेः परस्य" यह पृथक् सूत्र कहा अन्यथा "स्वंरूपम्" १।१।६८ के पूर्व "तस्मादित्युत्तरस्यादेः" यह कह देते । पृथक् न्यास करने पर "अष्टाभ्यऔश्" इत्यादि सूत्रों में उत्तरांश की उपस्थिति होती है । "आदेःपरस्य" की जो प्रक्रियाकौमुदीकार ने "पञ्चमीनिर्देशेन क्रियमाणं कार्यंपरस्य ज्ञेयम्" जो व्याख्या की है वह असम्बद्ध है "नहि भिक्षुको भिक्षुकान्तरं-

उभये देवमनुष्याः। इह "प्रथमचरम्" (पा० सू० १।१।३३) इति परमपि विकल्पं बाधित्वा "सर्वादीनि" (पा० सू० १।१।२७) इति सर्वनामसञ्ज्ञा विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वात्। अपवादोऽपि यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यत एव। तद्यथा—"अयजे इन्द्रं, ग्रामे इह, सर्वे इत्थम्" अत्रान्तरङ्गेन गुणेन सवर्णदीर्घो बाध्यते। स च यद्यपि यण्गुणयोरपवादस्तथाऽपि समानाश्रये चरितार्थः। तथा च वार्तिकम्। "इण्ङ्शीनामाद्गुणः सवर्णदीर्घत्वात्" इति॥

---

प्रवृत्तौ कृताकृतप्रसङ्गित्वं प्रसिद्धमिति भावः। कृताकृतेति। व्यक्तिविशेषानाश्रयणेनेत्यर्थः। "वृद्धयौत्वतृज्वद्भाव" इत्यस्य त्वत्र न प्राप्तिः। साहचर्येण विभक्तिनिमित्तानामेव वृद्ध्यादीनां तत्र ग्रहणात्। नित्यत्वेनैव सिद्धे वाचनिकपूर्वविप्रतिपेधाश्रयणे फलाभावाच्चेति दिक्। अन्तरङ्गत्वादिति। भाष्ये त्वयच् प्रत्ययान्तरं न तु तयबादेशः, उभयीत्यत्र ङीप्तु मात्रजिति प्रत्याहाराश्रयणेन साधितः। एवं चोभयशब्दे विकल्पस्य प्राप्तिरेव नेति उक्तम्। अन्तरङ्गस्य बलवत्त्वे ज्ञापकमन्यत्र प्रपञ्चितम्। बाध्यत एवेति। निरवकाशत्वरूपस्य बलवत्त्वबीजस्याभावात्।

---

स्वम्=कप्रत्ययस्तद्घटकः ककारोऽकारश्चतद्घटितत्वमण्प्रत्ययस्य नास्तीति न सारूप्यं तयोरिति बोध्यम्।

परान्नित्यमिति। पूर्वपेक्षया परशास्त्रं विप्रतिषेधसूत्राद्बलवत्। नित्यस्य परापेक्षया बलवत्त्वे च अक्लृप्ताभावकस्याभावकल्पनापेक्षया क्लृप्ताभावकस्यैवतत्कल्पनंयुक्तमिति बीजम्। समानकालिकप्राप्तबहिरङ्गापेक्षयान्तरङ्गस्य बलवत्त्वे च लोकन्यायोबीजम्। तथाहि प्रत्यङ्गवर्ती लोकोदृश्यते, मनुष्योऽयं प्रातरुत्थाय प्रथमं शरीरकार्याणि करोति ततः मित्राणान्ततः सम्बन्धिनामिति। तथैव शास्त्रेऽपि, अन्तर्भूतनिमित्तकशास्त्रस्य प्रत्यासन्नतरत्वेन प्रथमं प्रवृतिस्ततो वहिर्भूतनिमित्तकशास्त्रस्य प्रवृत्तिरिति, तत्र बहिरङ्गं परं नित्यं वा उभयमपि विवक्षितम्। पराद् बहिरङ्गादन्तरङ्गस्योदाहरणं 'उभये देव मनुष्याः' इति, नित्यादन्तरङ्गस्योदाहरणन्तु 'ग्रामणिनि' इति, अत्र नित्यमपि नुमं बाधित्वा अन्तरङ्गत्वाद्ध्रस्वः। मूले शब्दान्तरप्राप्त्येतिकथनं सर्वस्य शब्दान्तरस्य शब्दान्तराच्छब्दान्तरे वा प्राप्त्येत्यर्थकम्। सम्बन्धसामान्यार्थकषष्ठ्याः समासः अतएवाह—यद्व्यक्तीति।

प्रत्याहाराश्रयणेनेति। "प्रमाणेद्वयसज्दघ्नञ्मात्रचः" इति मात्रशब्दादारभ्य 'द्वित्रिभ्यांतयस्यायज्वा' इति सूत्रस्यायचश्चकारपर्यन्तमित्यर्थः। अतस्तदन्तर्गतेऽपि

---

याचितुमर्हति सत्यन्यस्मिन्नभिक्षुके" इति भाष्योक्तन्यायमूलक "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्" इस न्याय का विरोध होने से।

पर से नित्य बलवान् होता है, इसका उदाहरण है, जैसे तुद्+ति, रुध्+ति इस स्थिति में "पुगन्तलघूपधस्य" को बाधकर क्रम से श श्नम् विकरण होता है। उसी प्रकार "हिंसा" संराद्धार्थक "रध्" धातु से णिच् प्रत्यय कर देने पर रन्धयति इस प्रयोग में पर उपधा वृद्धि को बाधकर "रधिजभोरचि" इस सूत्र से नुम् होता है। अथ लघूपधगुण तथा उपधा वृद्धि भी अनित्य हैं, क्योंकि जिस व्यक्ति के सम्बन्ध से पूर्व प्रवृत्ति हो उसी व्यक्ति के सम्बन्ध से पश्चात् प्रवृत्ति होना

असिद्धमिति । तेन पचावेदमित्यादावेत ऐत्वं न ।

---

तेनेति । पूर्वा तु अन्तरङ्गबहिरङ्गयोर्युगपत्प्राप्तावेवेति भावः ।

---

"कति" इत्यत्र न ङीप् 'टिड्ढाण्' इति सूत्रे अतः इत्यनुवृत्तेः न 'षट्स्वस्रादिभ्य' इति निषेधाच्च ।

ज्ञापकमिति । युगपत्प्राप्तिविषयकस्यान्तरङ्गबहिरङ्गयोरन्तरङ्गम्बलीय इति वचनस्य बोधकमित्यर्थः । प्रपञ्चितमिति । तथा च तत्र स्पष्टत्वादत्र नोक्तम् ।

समानाश्रय इति । दण्डाग्रम् । दधीदमित्यादौ । अयम्भावः । अत्र समाने स्थानिनि निमित्ते च सर्वथाऽनवकाशत्वेन यण्गुणौ बाधित्वा सवर्णदीर्घे तयोरप्राप्तावपि भिन्नस्थानि-निमित्तकेऽप्यज इ-इन्द्रमित्यादौ कृतेऽपि यणादेशेस्थानिवत्वेन दीर्घस्य प्राप्त्या न सर्वथान-वकाशत्वमिति तदप्राप्तियोग्ये विषयेऽचारितार्थ्यरूपापवादत्वमेव यस्य बीजन्तस्य येनना-प्राप्तेन्यायस्य, यद्यपि सम्भवस्तथाप्यन्तरङ्गेण बाध्यते विप्रतिषेधसूत्रे भाष्यकृता तुल्यस्था-निनिमित्तकयोरेव परस्परम्बाध्यबाधकभावस्याङ्गीकारात् ।

तेनेति । अन्तरङ्गे कर्तव्ये जातमपि बहिरङ्गमसिद्धमित्यर्थकपरिभाषान्तराश्रयणेन । अत एवाह—पूर्वात्विति । अन्तरङ्गशास्त्रत्वमस्याः लिङ्गम् । तथा चान्तरङ्गशास्त्रत्वेन रूपेण त्रैपादिकान्तरङ्गस्य "पूर्वत्रासिद्धमित्यनेनैतत्परिभाषादृष्ट्यासिद्धत्वबोधनादनया बहिरङ्गस्य त्रैपादिकान्तरङ्गशास्त्रदृष्ट्यानासिद्धत्वम् । इयञ्च त्रिपाद्यां न प्रवर्तते त्रिपाद्या-असिद्धत्वात् । अस्याञ्च" "वाह ऊठ्" 'सूत्रस्थमूड्ग्रहणं ज्ञापकमित्येषासपादसप्ताध्या-यीस्था । अन्यथा सम्प्रसारणमात्रविधानेन 'लघूपधगुणे वृद्धिरेचीतिवृद्धौ' 'विश्वौहः'

---

चाहिये, यही कृताकृत प्रसङ्गस्व है । पूर्व में श विकरण की प्राप्ति तुद् व्यक्ति से होती है, लघूपध-गुण हो जाने पर तोद् व्यक्ति से प्राप्ति रहती है । पूर्व में श्नम् विकरण की प्राप्ति रुध् व्यक्ति से है, पश्चात् रोध्व्यक्ति से है । एवं पूर्व में नुम् की प्राप्ति रध् से है । पश्चात् राध् से है, अतः अनित्य है, इतिचेदलम्, क्योंकि अनिश्चित अभाव कल्पना की अपेक्षा निश्चित है अभाव जिसका, उसके अभाव की कल्पना में लाघव है । यही परापेक्षया नित्य की बलवत्ता में बीज है । इसका अभिप्राय यह है कि लक्ष्यानुरोध से कहीं पर व्यक्ति विशेष की चिन्ता होती हैं, कहीं पर सामान्यतः प्राप्ति मात्र की चिन्ता होती हैं । नच 'वृद्धयौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिनिषेधेन' इस वार्तिक के बल से रन्ध-यति में पूर्व विप्रतिषेध से नुम् हो जायगा नित्यत्वात् यह कहना अयुक्त है इति वाच्यम् साहचर्य से विभक्तिनिमित्तवृद्धयादि का ग्रहण होने से । अपरञ्च नित्यत्वेन सिद्ध रहने पर वाचनिक पूर्व विप्रति-षेधाश्रयण में फलाभाव होने से ।

पर से अन्तरङ्ग बलवान् होता है इसका उदाहरण है "उभये देव मनुष्याः" तयप् प्रत्ययान्त होने से 'प्रथमचरम्' १।१।३३ इससे विकल्प करके सर्वनाम सञ्ज्ञा प्राप्त थी, किन्तु 'सर्वादीनि' १।१।२७ यह विभक्ति निरपेक्ष होने से अन्तरङ्ग है, अतः पर विकल्प को बाधकर इससे नित्य ही सर्वनाम सञ्ज्ञा होगी ।

वस्तुतस्तु भाष्यकारीय सिद्धान्त से तो यहाँ पर "प्रथमचरम" इसकी प्राप्ति ही नहीं है, इसी को शब्दरत्नकार कहते है । भाष्यकार ने तो अयच् प्रत्ययान्तर ही माना है, तयप् के स्थान पर आदेश नहीं माना, यदि कहो कि प्रत्ययान्तर मानने पर उभयी यहाँ पर "टिड्ढेति" सूत्र से ङीप् किस प्रकार होगा तो यह नहीं कहना चाहिये, क्योंकि मात्रच् प्रत्याहार है "प्रमाणे द्वयसज्दघ्न-ञ्मात्रचः" इसके मात्र से लेकर 'द्वित्रिभ्यां तस्यायज्वा' इति सूत्रस्थ अयच् के चकार पर्यन्त, अतः

अकृतव्यूहा इति । यद्यपि "कृतमपि कार्यं निवर्त्तयन्ति" इति परिभाषान्तरं-पठ्यते फलं च तुल्यम्, तथाऽपि "अकृत—" इत्येव लघु । "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" इति न्यायादिति भावः । न कुर्वन्तीति । यथा "निषेदुषीम्" इत्यादौ क्वसोरिटमन्तरङ्गत्वात्प्राप्तमपि भाविना संप्रसारणेन वलादित्वं नङ्क्ष्यती-त्यालोच्य न कुर्वन्तीत्यर्थः ॥

इति परिभाषाप्रकरणम् ।

---

न कुर्वन्तीत्यर्थ इति । यदि तु सेदुष इत्यादौ पदावधिकेऽन्वाख्याने सेद् वस् अस् इति स्थिते इट्सम्प्रसारणयोः प्राप्तौ प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात्पूर्वं सम्प्रसारणे वलादित्वाभावादिटः प्राप्तिरेव न, लक्ष्यानुरोधाच्चात्र पदावधिकमेवान्वाख्यानमिति तत्सिद्धिरित्युच्यते, तदैषा परिभाषा निष्फलेति बोध्यम् । अत एव एषा भाष्ये न क्वापि व्यवहृतेत्यन्यत्र विस्तरेण निरूपितम् ।

इति परिभाषाप्रकरणम् ॥

---

इत्यादिसिद्धेस्तद्वैयर्थ्यं स्पष्टमेव । सत्यां ह्येतस्यां बहिरङ्गसम्प्रसारणस्यासिद्धत्वाल्लघूप-धगुणो न स्यात् ।

ऐत्वं नेति । पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन गुणस्यासिद्धत्वादितिभावः । अस्याश्च "वाह ऊठ्" सूत्रस्थमूठ्ग्रहणं ज्ञापकम् । एतेन युगपत्प्राप्तिविषयकं "बहिरङ्गादन्तरङ्गं-बलीयः" इति, जातबहिरङ्गासिद्धत्वबोधकम् "असिद्धं बहिरङ्गमन्तरङ्गे" इति परिभाषा-द्वयम् । अतएव "असिद्धं बहिरङ्गमन्तरङ्गे" इत्युक्त्वा नाजानन्तर्यं इति वक्ष्यामि इत्युक्तिः सङ्गच्छते जातबहिरङ्गासिद्धत्वमात्रनिषेधकत्वात् तस्याः परिभाषायाः ।

परममूले अकृतव्यूहा इति । 'ऊह्यते=तर्क्यते' इति ऊहः, विशिष्ट ऊहो व्यूहः, शास्त्र-प्रवृत्तिरूपतर्कः, न कृतो व्यूहो यैः पाणिनीयैः=छात्रैः ते अकृतव्यूहाः, बहुव्रीहि समासः । पाणिनिना प्रोक्तमधीयते इति पाणिनीयाः । भाविनिमित्तविनाशइत्यध्याहारः । तथा च बहिरङ्गेणान्तरङ्गस्य निमित्तविनाशे पश्चात्सम्भाविते‌ऽन्तरङ्गन्नेति । अत्र च ज्ञापकम्

---

ङीप् हो जायगा । यदि कहो कि मात्रच् प्रत्याहारान्तर्गत तयप् भी आजायगा तो नहीं कह सकते क्योंकि प्रत्याहारान्तर्गत तयप् का पृथक्कृत्य अनुवाद मात्र है । तथा च उभय शब्द में विकल्प की प्राप्ति ही नहीं । अन्तरङ्ग के बलवत्व में क्या बीज है, यह विस्तरेण परिभाषेन्दुशेखर में वर्णित है ।

अपवाद भी यदि अन्यत्र चरितार्थ हो तो अन्तरङ्ग बाध लेता है, निरवकाशत्वरूप बलवत्व बीज का अभाव होने से । जैसे अयजे इन्द्रम्, ग्रामे इह, सर्वे इत्थम् यहाँ पर पूर्वोपस्थितिकत्वरूपा-न्तरङ्गस्वरूप गुण से सवर्णदीर्घ बाधित होता है । यद्यपि सवर्णदीर्घ, यण् गुण का अन्यतरत्वेनापवाद है, तथापि समाननिमित्तक दैत्यारिः, श्रीशः, इत्यादि में चरितार्थ है । अतएव वार्तिककार ने कहा— "इण्ङिशीनामाद्गुणः सवर्ण दीर्घत्वात्" । अर्थात् सवर्ण दीर्घ को बाधकर उत्तम पुरुष का एकवचन 'इट् को' आद्गुणः से गुण होता है । उदाहरण अयजे इन्द्रम्, ङि का उदाहरण, वृक्षे इन्द्रम्, शी का उदाहरण सर्वे इह । अन्तरङ्ग कार्य करने पर कृत बहिरङ्ग असिद्ध होता है, इत्यर्थक परिभाषान्तर स्वीकार करने पर "पचावेदम्" यहाँ 'पदद्वयसम्बन्धिवर्णद्वयापेक्ष' जातबहिरङ्ग असिद्ध होने से "एत ऐ" इस सूत्र से एकार को ऐकार नहीं होता । युगपत् प्राप्तिविषयक

"समर्थानां प्रथमा"दितिसूत्रे समर्थानामिति। तद्धिसूत्थितादिभ्यः कृतदीर्घेभ्यः प्रत्ययोत्पत्त्यर्थम्, अन्यथा अन्तरङ्गत्वाद् दीर्घे कृत एव प्रत्ययप्राप्त्या तद्व्यर्थता स्पष्टैव।

पदावधिकेऽन्वाख्यान इति। अन्वाख्यानं नाम शब्दसंस्कारः तच्च त्रिविधम्, क्रमिकम्, पदावधिकम्, वाक्यावधिकञ्चेति। तत्र प्रयोगोच्चारणक्रमानुरोधेन संस्काररूपमाद्यम्, तच्च स्वाभाविकत्वात्प्रमाणनिरपेक्षम्। पदं वाक्यं वोच्चार्यैककालावच्छेदेन तद्घटकानां संस्कारः द्वितीयं तृतीयञ्च। विप्रतिषेधसूत्रेऽन्तरङ्गपरिभाषोदाहरणदानावसरे वक्ष्यमाणिः सौत्थितिः, वृद्धिश्चप्राप्नोत्येकादेशश्च, परत्वाद्वृद्धिः स्यात्, एकादेशो भवत्यन्तरङ्गत इति भाष्योक्त्या ध्वनितम् पदावधिकान्वाख्यानं विना वृद्ध्येकादेशयोर्युगपत्प्राप्तिर्वक्तुमशक्या। तृतीये प्रमाणन्तु "न पदान्त" सूत्रस्थमस्ति पुनःकिञ्चिद्भावसाधनस्य विधिशब्दस्योपादाने सतीष्टं संगृहीतम्! आहोस्विन् दोषान्तरमेवेति। अस्तीत्याह इह कानि सन्ति, यानि सन्ति, कौ स्तः, यौ स्तः, योऽसौ पदान्तो यकारो वकारो वा श्रूयेत स न श्रूयते" इति भाष्यमेव वाक्यान्वाख्यानाभावे पूर्वत्वेन द्वष्टस्य कार्याभावात् स्थानिवत्वाप्राप्त्या तदसङ्गतमेव स्यात्।

सम्प्रसारण इति। न च लाघवान्नियमशास्त्राणां विधिमुखेन प्रवृत्या प्रकृते "वस्वेकाचाद्घसाम्" इत्यनेनैवेटः प्राप्त्या तस्यापि वसुशब्दमुच्चार्य विहितत्वेन प्रतिपदोक्तत्वादिटः प्राप्तिरस्त्येवेतीदमसङ्गतमिति वाच्यम्। 'सद्+वस्+अस्' इति स्थितौ कृतद्विर्वचनैकाच्त्वाभावेनेटोऽप्राप्त्या द्वित्वसम्प्रसारणयोश्च प्राप्तौ प्रतिपदविधानत्वेनान्तरङ्गत्वात्पूर्वं सम्प्रसारणे ततो द्वित्वे वलादित्वाभावेनेटोप्राप्त्या ग्रन्थासङ्गतेरभावात्। अन्यत्र = परिभाषेन्दुशेखरादौ यतो हि गुरुभक्तेन नागेशेन गुरुनाम्नः लघुशब्दरत्नाख्यटीकारचिता।

इति बालप्रकाशिकायां परिभाषा-प्रकरणम्।

"बहिरङ्गादन्तरङ्गं बलीयः" यह परिभाषा तो अन्तरङ्ग और बहिरङ्ग की युगपत् प्राप्त रहने पर ही प्रवृत्त होती है। यद्यपि कृतकार्य भी निवृत्त हो जाता है इत्यर्थक "कृतमपि कार्यं निवर्तयति" यह परिभाषान्तर भी पढ़ी गई है, 'अकृतव्यूहाः' तथा 'कृतमपि' इन दोनों का फल समान ही है, तथापि 'अकृतव्यूहाः पाणिनीयाः' इस परिभाषा में लाघव है, क्योंकि कीचड़ को लगाकर धोने क अपेक्षा कीचड़ को न लगाना ही श्रेयस्कर है।

पाणिनिव्याकरण अध्ययन करने वाले छात्र निमित्त के विनाश की सम्भावना रहने पर शास्त्र-प्रवृत्ति रूप तर्क नहीं करते, जैसे 'निषेदुषीम्' निपूर्वक सद् धातु से लिट् हुआ उसके स्थान पर क्वसुप्रत्यय अनुबन्धलोप द्वित्व हो जानेपर "अत एकहल्मध्ये" इससे एत्व अभ्यास लोप वस् को सम्प्रसारण पूर्वरूप षत्व ङीप् विभक्तिकार्य करने पर "निषेदुषीम्" का साधुत्व होता है। यद्यपि वस् को इट् अन्तरङ्गत्वात् प्राप्त है "वस्वेकाजाद्घसाम्" इस सूत्र से, तथापि भावी सम्प्रसारण से वलादित्व नष्ट होने की सम्भावना है, यह विचार कर इट् नहीं होता। यद्यपि "सेदुषः" इत्यादि में पदावधिकान्वाख्यान में 'सेद्+वस्+अस्' इस स्थिति में इट् सम्प्रसारण की प्राप्ति रहने पर प्रतिपदविधित्वेन शीघ्रोपस्थिति होने से प्रथम सम्प्रसारण हो जानेपर वलादित्वाभाव होने से इट् की प्राप्ति ही नहीं है। तथापि, लक्ष्यानुरोध से यहाँ पर पदावधिकान्वाख्यान नहीं माना जायगा। तथा च परिभाषा निष्फला है। अतएव भाष्य में कहीं पर इसका व्यवहार नहीं देखा गया। परिभाषेन्दु में विस्तरेण वर्णन है।

॥ हिन्दी बालप्रकाशिका में परिभाषा प्रकरण समाप्त ॥

# अथ अच्सन्धिप्रकरणम्

"इको यणचि" (पा० सू० ६।१।७७)। प्रत्याहारग्रहणेषु तद्वाच्यवाच्ये निरूढा लक्षणा। "दीर्घाज्जसि च" (पा० सू० ६।१।१०५) इति ज्ञापकात् "त्वादिभ्यः" (पा० सू० ८।२।४४) इति निर्देशाच्च। तेनेक्शब्देन षट्षष्टिर्गृह्यन्ते। यण्शब्देन सप्त। भाव्यमानत्वेन सवर्णाग्राहकत्वेऽपि गुणानामभेदकत्वेनानुनासिका-

---

ननु व्यक्तिपक्षे इक्पदोपस्थाप्योकारादिभिर्दीर्घादिग्रहणं न स्यात्, "उच्चारित एव शब्दः प्रत्यायको नानुच्चारित" इति "अणुदित्" (पा० सू० १।१।६९) सूत्रे भाष्योक्तेः। न चोच्चारितस्यैव प्रत्यायकत्वे रहसि पुस्तकमीक्षमाणस्य बोधानापत्तिरिति वाच्यम्। तत्रापि पुस्तकद्रष्टुः स्वीयसूक्ष्मोच्चारणसत्त्वादित्यत आह—प्रत्याहारग्रहणेष्विति। एतेन दीर्घेका-

---

प्रत्याहारग्रहणेष्विति। गृह्यते = बोध्यते यैः तानि ग्रहणानि, प्रत्याहार एव ग्रहणानि प्रत्याहारग्रहणानि तेषु प्रत्याहारग्रहणेषु। पदवाच्या जातिरिति, व्यक्तिरेव वा पदवाच्येति-मतद्वयम्। तथा हि व्यक्तीनामानन्त्येन तत्र शक्तिकल्पने गौरवाल्लाघवादेकस्यां जातावेव तत्कल्पनम्। गामानयेत्यादौ व्यक्तिबोधस्तु लक्षणया।

न चैवं व्यक्तीनामपि प्रत्येकमेकतया एकस्यां व्यक्तौ शक्तिर्व्यक्त्यन्तरे बोधो लक्षणयेतिनानन्त्यप्रयुक्तं गौरवमिति वाच्यम्, व्यक्तौ शक्तिस्वीकारे व्यक्त्यन्तरलक्षणायां सम्बन्धकल्पने गौरवात्। तद्दर्शयति व्यक्तौ शक्तौ व्यक्त्यन्तरेण स्वसमवेतसमवायित्वं सम्बन्धः स्वं वाच्या व्यक्तिः तत्समवेता तद्वृत्तिर्जातिस्तत्समवायित्वं व्यक्त्यन्तरे। जातौ शक्तिस्वीकारे तु स्वाश्रयत्वमेव सम्बन्धः स्वं वाच्याजातिस्तदाश्रयत्वं व्यक्ताविति, एवञ्च लक्षणायां सम्बन्धे लाघवगौरवयोः सत्वेन जातावेव शक्तिकल्पनस्य लाघवेनौचित्यम्।

किञ्च व्यक्तौ शक्तिस्वीकारेऽपि जातेर्वाच्यत्वमावश्यकम्। व्यक्तीनामानन्त्याद् व्यभिचाराच्च तत्र शक्तिग्रहानुपपत्तेः एवञ्चावश्यकत्वात् प्रथमोपस्थितत्वान्नागृहीतविशेषणबुद्धिर्विशेष्यमवगाहते इति न्यायाच्च जातावेव शक्तिर्व्यक्तिबोधो लक्षणयेतिपर्यवस्यति तदुक्तं भट्टैः—

अन्वयव्यतिरेकाभ्यामेकरूपप्रतीतितः। आकृतेः प्रथमज्ञानात् तस्या एवाभिधेयता॥

द्वितीये तु "गामानय" इत्यादि वाक्यश्रवणसमनन्तरं व्यक्त्यानयनव्यवहारस्यानादिसिद्धतया व्यवहारेण शक्तिग्राहकशिरोमणिना व्यक्तावेव पदस्य शक्तिर्ग्राह्यते। न च

---

प्रत्याहार रूप जो बोधक उसके रहने पर तद्वाच्य वाच्य में लक्षणा होती है। जैसे इक् प्रत्याहार का वाच्य है 'इ उ ऋ लृ' इनका वाच्य है षट्षष्टि (६६), यह अनादि तात्पर्यवती निरूढा लक्षणा है, आधुनिक लक्षणा नहीं "गङ्गायां घोषः" की तरह।

यदि तद्वाच्यवाच्य में लक्षणा न मानोगे तो "दीर्घाज्जसि च" यह सूत्र व्यर्थ हो जायगा, क्योंकि अक् में दीर्घादि का ग्रहण होगा नहीं तथा च गौयौं इत्यादि में पूर्वसवर्ण दीर्घ की प्राप्ति ही नहीं है, तब 'दीर्घाज्जसि च' यह व्यर्थ होकर ज्ञापन करेगा, "प्रत्याहारग्रहणेषु तद्वाच्यवाच्ये निरूढा लक्षणा।" तथा च "दीर्घाज्जसि च" इस सूत्र के ज्ञापन से और "त्वादिभ्यः" इस पाणिनिजी के उच्चारण से इक् शब्द से ६६ का तथा यण् शब्द से ७ का ग्रहण होगा।

नामपि यवलानां ग्रहणात्। अतो नास्ति यथासङ्ख्यम्। न च लक्ष्यार्थबोधात्पूर्वं-भाविनं शक्यार्थबोधमादाय यथासंख्यमस्त्विति वाच्यम्। एवमपि तृतीयचतुर्था-

---

रादेर्ग्राहकशास्त्रबलेन इकारादिभिर्बोधेऽपि तेषामिक्पदवृत्त्याऽनुपस्थितत्वेन तदुत्तरप्रत्यार्थानन्वयापत्तिरित्यपास्तम्। वृत्तिप्रयोज्योपस्थितित्वेनादोषाच्च।

ननु अणुदित्सूत्रं व्यर्थम्। न च प्रत्याहाराणामाद्यवर्णेषु चरितार्थम्। अन्यसवर्णानामिव तत्सवर्णानामपि लक्षणयैव ग्रहणसिद्धेः। न च "अस्य च्वौ" (पा० सू० ७।४।३२) इत्यादौ चारितार्थ्यम्। व्यक्तिपक्षेऽस्य प्रत्याहारसूत्रस्थतो भेदेनाण्त्वाभावादिति स्पष्टम् "अणुदित्"—(पा० सू० १।१।६९) सूत्रे भाष्ये इति चेन्न। लक्ष्यतावच्छेदकज्ञानार्थमेव तच्चारितार्थ्यात्। प्रत्याहारैस्युपलक्षणं तद्वाच्यवाच्येति च "अस्य च्वौ" (पा० सू० ७।४।३२) इत्यादावपि स्वसदृशवाच्येषु लक्षणावश्यकत्वात्। अणुदित्सूत्रगृहीतलक्ष्यतावच्छेदकिका लक्षणा विधीयमानातिरिक्तविषये एव, "अप्रत्ययः" इत्युक्तेः। अत एव "त्यदादी-

---

लाक्षणिकः स इति अनुपपत्तिज्ञानमन्तरैव व्यवहारप्रवृत्तेर्दर्शनेनानुपपत्तिं विना लक्षणायाः वक्तुमशक्यत्वात्। नचानन्त्यं व्यभिचारो वा शक्यतावच्छेदकजातेरैक्यात्। तदुक्तम्—

आनन्त्येऽपि भावानामेकं कृत्वोपलक्षणम्।
शब्दः सुकरसम्बन्धो न च व्यभिचरिष्यति॥

न चैवं नागृहीतन्यायेन जातौ वाच्यत्वमावश्यकमिति वाच्यम्, अकारणे दण्डत्वादौ कारणतावच्छेदकत्वस्य, अलक्ष्ये तीरत्वादौ लक्ष्यतावच्छेदकत्वस्य स्वीकारेण जातेरवाच्यत्वेऽपि शक्यतावच्छेदकत्वस्वीकारे बाधकाभावात्। अतएवाणुदित्सूत्रस्थमण्ग्रहणमेकशेषारम्भश्च सङ्गच्छते। जातेर्वाच्यत्वे तद्वैयर्थ्यं स्पष्टमेवेति। तस्माद् व्यक्तिपक्षो जातिपक्षश्चोभावपि शास्त्रसिद्धाविति। तत्र व्यक्तिपक्षे आशङ्कते नन्वित्यादिना।

उकारादिभिरिति। अथेक्प्रत्याहारे इकारस्य प्राथम्येन तेनापि दीर्घादीनामग्रहणे इकारादिभिरितिवक्तव्ये उकारादिभिरितिकथमुक्तमिति चेदलन्तन्त्रेणावृत्त्या वा दीर्घेकारादीनां कथञ्चिद्ग्रहणसम्भवेऽपि दीर्घोकारादीनां कथमपि बोधासम्भवेन तथोक्तेः। उच्चारित एवेति। उच्चारणेन श्रावणप्रत्यक्षविषयीकृत एव, न तु तदुपस्थाप्य इत्यर्थः। अत एव ऋगित्युक्ते संपाठमात्रं गम्यते न तु तदर्थं इति 'येन विधिसूत्रस्थं भाष्यमपि सङ्गच्छते। प्रत्यायक इति। स्वकीयार्थबोधने समर्थः। तत्रापि=पुस्तकेक्षणावस्थायामपि। स्वीयसूक्ष्मोच्चारणेति। सूक्ष्मत्वं चोच्चारणे स्वेतरश्रावणानुपयोगित्वम्। एतेनेत्यस्यापास्तमित्यत्रान्वयः। इक्पदवृत्त्येति। उच्चार्यमाणेक्पदनिष्ठवृत्त्येत्यर्थः। यद्यपि ग्राहकसूत्रेणेकारादौ दीर्घादिनिरूपितशक्तिरुद्ग्राह्यते एवञ्च दीर्घादीनामवृत्त्यैवोपस्थितिस्तथाप्यत्र दीर्घादीनामुच्चार्यमाणपदनिष्ठवृत्त्यानोपस्थितिरिति।

अन्वयापत्तिरिति। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थं बोधकत्वमिति सिद्धान्तात्।

वृत्तिप्रयोज्येति। कार्यकारणभावस्वरूपे, विषयतासम्बन्धेन शाब्दबोधंप्रति उच्चार्यमाण पदनिष्ठवृत्तिप्रयोज्योपस्थितेः कारणत्वमिति प्रयोज्यत्वं निवेश्यते। तत्त्वं च साक्षाज्ज-

---

यद्यपि विधीयमान सवर्ण का बोधक नहीं होता 'भाव्यमानेन सवर्णानां ग्रहणन्न' इस परिभाषा से निषेध हो जाने के कारण तथापि "गुणा अभेदकाः" अर्थात् यत्न न करने पर स्वरूपेण उच्चारित गुण विवक्षित नहीं होता, अर्थात् उसके सवर्ण का भी ग्रहण हो जाता है। "गुणा अभेदकाः" इससे

भ्याम् ऋकारलृकाराभ्यां प्रत्येकं त्रिंशदुपस्थितौ लृवर्णानां रेफादेशस्य ऋवर्णानां लादेशस्य च प्रसङ्गात्। तस्मादिह "स्थानेऽन्तरतम" (पा० सू० १।१।५०) सूत्रेणैवेष्टसिद्धिरित्यभिप्रेत्याह—स्थानत आन्तर्यादिति।

---

नामः" (पा० सू० ७।२।१०२) इत्यादौ न स्वसदृशवाच्येषु लक्षणा। "नाज्झलौ" (पा० सू० १।१।१०) "अणुदित्" (पा० सू० १।१।६९) इत्यत्र तु न लक्षणा तद्बोधकाले लक्ष्यतावच्छेदकाग्रहादिति भावः। तत्र प्रमाणमाह–दीर्घादिति अक्पदीयाकारेण स्वसवर्णग्रहणेऽपि तत्र "नादिचि" इत्येव सिद्धमिति भावः। तेन–लक्षणाङ्गीकारेण। भाव्यमानत्वे-

---

न्यत्वजन्यजन्यत्वैतदन्यतरत्वम्। तथा च प्रकृते इक्पदनिष्ठशक्तिजन्योपस्थितिरिकारस्य-तन्निष्ठशक्तिजन्यदीर्घादीनामुपस्थितिरिति न दोषः।

अणुदित्सूत्रमिति। उदितः सूत्रम् उदित्सूत्रम् अण्विशिष्टमुदित्सूत्रमणुदित्सूत्रमित्यर्थः। एवञ्चोदित्ग्रहणस्यावश्यकत्वेऽपि "सविशेषणे विधिनिषेधौ विशेषणमुपसङ्क्रामतः सति विशेष्ये बाधे" 'इति न्यायेन' स्वर्गीध्वस्तः 'शिखी विनष्टः' इत्यादिस्थलस्येव विशेषणे पर्यवसानं बोध्यम्। आद्यवर्णेष्विति। प्रत्याहारेऽनुबन्धसमभिहारेणाक्षरसमाम्नायिक एवायमिति प्रत्यभिज्ञायाः सम्भवेनाण्पदबोध्यत्वस्य सम्भवादिति भावः। अन्यसवर्णानामिव = द्वितीयादिसवर्णानामिव। तत्सवर्णानाम् = आदिसवर्णानाम्। प्रत्याहारवाच्यत्वस्यादिवर्णेऽपि सत्वादिति भावः।

"अस्य च्वौ" इत्यादाविति। आदिपदेन "एरच्" इत्यादिसङ्ग्रहः एतेषु प्रत्याहारग्रहणाभावादित्याशयः। अत एव शुक्लीभवतीति वनमालीभवतीत्यस्य सिद्धिः अस्य = 'अस्यच्वौ इत्यादि सूत्रस्थाकारादिवर्णस्य। भेदेनेति। यत्र प्रत्याहारनिर्देशस्तत्र यथा आद्यवर्णस्यानुबन्धसमभिव्याहारेण स एवायमिति, प्रत्यभिज्ञाविषयत्वं तथात्राभावेनैतेषु तादृशप्रत्यभिज्ञाया असम्भवेन भेदस्य निश्चितत्वेनेत्यर्थः। लक्ष्यतावच्छेदकज्ञानार्थमितितद्वाच्यवाच्यत्वरूपस्य लक्ष्यतावच्छेदकधर्मस्य लक्ष्येषु ज्ञानार्थमित्यर्थः। नन्वेवमपि व्यक्तिपक्षे 'अस्यच्वौ' इत्यादौ दोष एव, तत्रोक्तरीत्यासूत्राप्रवृत्तेः। अत आह उपलक्षणमिति। उपलक्ष्यनेऽनेति उपलक्षणम्। स्वसदृशवाच्येष्विति = स्वपदेन अस्य च्वौ घटकोऽकारः, तत्सदृशः अइउण्घटकोऽकारस्तद्वाच्या अष्टादश तत्र लक्षणा।

अणुदित्सूत्रेति। अणुदित्सूत्रेण गृहीतं लक्ष्यतावच्छेदकं यस्याः सा अणुदित्सूत्रगृहीतलक्ष्यतावच्छेदकिका। अग्रहाविति। वाक्यापरिसमाप्तिन्यायेन "नाज्झलौ" इत्यादिघटक-

---

उपस्थित जो सवर्ण उनका "भाव्यमानेन सवर्णानां ग्रहणन्न" इस परिभाषा से निषेध नहीं होता। यह मनोरमाकार का मत है।

तथा च "गुणा अभेदकाः" इस पक्ष में अनुनासिक य व ल का ग्रहण हो जाने पर भी यण् शब्द से (७) सात का ग्रहण होने से यथासङ्ख्य नहीं होगा। अथ लक्ष्यार्थबोध से पूर्वभावी शक्यार्थबोध लेकर यथासङ्ख्य है इति चेन्न लक्ष्यार्थबोध पूर्वभावी शक्यार्थ को स्वीकार कर लेने पर भी तृतीय चतुर्थ जो ऋकार लृकार वहाँ पर प्रत्येक से (३०) तीस की उपस्थिति होने पर लृवर्ण को रेफादेश तथा ऋवर्ण को लादेश की प्राप्ति होने से यहाँ पर 'यथासङ्ख्य सूत्र से कार्य नहीं हो सकता। 'स्थानेऽन्तरतमः' इस सूत्र से ही इष्ट सिद्धि होगी। इस अभिप्राय से कहा स्थानकृत सादृश्य लेकर ईकार के स्थानपर यकार हो गया।

नेति। विधीयमानविषये लक्षणाऽभावस्यानुपदमुक्तत्वादिति भावः। अभेदकत्वेनेति। शास्त्रं उच्चारितगुणानां भेदकत्वाभावेऽपि स्वरूपकृतभेदमादाय सप्तत्वसंख्या न विरुध्यते। यदि तु अणुदित्सूत्रेऽण्ग्रहणाद्यण् विषये गुणानां भेदकतैवोचितेति विभाव्यते, तदाऽपि चत्वारो यणइति यथासंख्यमसङ्गतमेव। तद् ध्वनयन्नाह—अतो नास्तीति। तत्खण्डने एवाग्रहो न तु सप्तत्वसंख्यायामिति भावः। शक्यार्थबोधमादायेति। "ल्वादिभ्यः" (पा० सू० ८।२।४४) इत्यादिनिर्देशोहिततात्पर्यानुपपत्तिग्रहस्य तत्सत्त्व एव सम्भवेन स बोध आवश्यकः। तत्र

प्रत्याहारस्य स्वशक्यतावच्छेदकधर्मावच्छिन्नबोधकत्वस्यैवसम्भवात्। ननु यथासङ्ख्याभावोपपादनाय गुणाभेदकत्वमनुचितं यण्विषयेऽप्युक्तरीत्या लक्षणया निर्वाहादत आह—विधीयमानेति। ननु यद्यभेदस्तदाभेदनिवन्धनसप्तत्वसङ्ख्याविरोध इत्यत आह शास्त्रे इति। एतेन लोके भेद एव "यदभेदकत्वेन ज्ञापकम्" "अस्थिदधि" सूत्रे उदात्त इति कथनंतच्छास्त्रे एव तथा कल्पनेत्यत्र ज्ञापकमिति ध्वनितम्। गुणेति। असतियत्ने स्वरूपेणोच्चारितो गुणो विवक्षितो न, मनोरमाकारस्य मते—'अणुदित्सवर्णस्य चाप्रत्ययः' इत्यनेन अथवा अण्प्रत्याख्यानपक्षे जातिपक्षाश्रयणेनोपस्थिताः ये सवर्णा तेषां (सवर्णानाम्)

यदि आशङ्का हो कि इक्पदवाच्य उकारादि से दीर्घादि का ग्रहण नहीं होगा, क्योंकि उच्चारित शब्द ही (प्रत्यायक) बोधक होता है, अनुच्चारित शब्द नहीं, यह अणुदित् सूत्र पर भाष्यकार ने कहा है। न च उच्चारित ही बोधक है तो एकान्त में पुस्तक देखने वालों को बोध नहीं होना चाहिये इति वाच्यम् पुस्तकेक्षणस्थल में भी स्वीय सूक्ष्मोच्चारण होने से। तो आशङ्का का समाधान है कि तद्वाच्य में अनादि तात्पर्यवती लक्षणा हो जाने से दीर्घोकारादि का ग्रहण हो जायगा।

इकारादि से दीर्घेकारादि का ग्राहक (अणुदित्) सूत्र के बल से बोध हो जाने पर भी, दीर्घेकारादि को इक् पद की वृत्ति (शक्ति लक्षणा) से अनुपस्थित होने के कारण प्रकृत्यर्थ का प्रत्ययार्थ में अन्वय नहीं होगा, एतेन अपास्तम् = अर्थात् लक्षणावृत्ति से दीर्घादि की उपस्थिति होने के कारण अनन्वय करने वाले परास्त हो गये। अथवा आलङ्कारिकों के मत में जन्य को प्रयोज्य कहते हैं, जन्य के जन्य को भी प्रयोज्य कहते हैं, वृत्तिजन्य हुआ इक्, तज्जन्य हुआ इ उ ऋ लृ तज्जन्य हुआ षट्षष्टि, तथा च दीर्घोकारादि का ग्रहण हो जायगा।

ननु प्रत्याहार ग्रहण में यदि लक्षणा स्वीकार करते हो तो 'अणुदित् सूत्रस्थ' अण् ग्रहण के विना भी निर्वाह हो जायगा अण् ग्रहण व्यर्थ है। न च प्रत्याहार में अनुबन्धसमभिव्याहार से आक्षरसमाम्नायिक ही है यह प्रत्यभिज्ञा सम्भव होने से, अण् पद बोध्यत्व होने से प्रत्याहारों के आद्य वर्ण में चरितार्थ है, इति वाच्यम् अन्य सवर्णों की तरह आदि के सवर्णों का भी लक्षणा से ग्रहण हो जाने से, अर्थात् प्रत्याहारवाच्यत्व आद्यवर्ण में होने से दोषाभाव है।

अथ "अस्य च्वौ" "परच्" में सवर्ण का ग्रहण हो इसलिए अण् ग्रहण की आवश्यकता है, इति चेत् तदपि न व्यक्तिपक्ष में 'अइउण्' जो प्रत्याहार सूत्र उसमें स्थित अकार से 'अस्य च्वौ' का अकार भिन्न होने के कारण अण्त्व नहीं रहेगा, यह अणुदित् सूत्र के भाष्य में स्पष्ट है इति चेन्न, लक्ष्यतावच्छेदक ज्ञान के लिये इसकी आवश्यकता होने से। अर्थात् लक्ष्य है ६६ (षट् षष्टि) लक्ष्य में लक्ष्यता रहेगा लक्ष्यतावच्छेदक है तद्वाच्यवाच्यत्व इस ज्ञान के लिये अण् ग्रहण आवश्यक है। क्योंकि प्रत्याहार वाच्यत्व का "आदिरन्त्येन सहेता" के बल से ज्ञान हो जाने पर भी, तद्वाच्यत्वदीर्घादि का ग्रहण अणुदित् सूत्र से ही होता है।

इसका भाव यह है शक्यसम्बन्ध को लक्षणा कहते हैं। इक् पद शक्य है वर्ण समाम्नायस्थ इकारादि वर्णचतुष्टय, वर्णसमाम्नायस्थ इकारादि वर्ण चतुष्टय का, लक्ष्य में स्ववृत्ति जातिमत्व-

च यथासंख्यसहायेन वाक्यार्थे निष्पन्ने "त्वादिभ्य" इत्यादिनिर्देशाल्लक्षणया जायमाने पुनर्वाक्यार्थबोधे लक्षितदीर्घादीनां स्ववाचकान्वयिन्येवान्वय इति भावः। स्थानेऽन्तरतम-सूत्रेणैवेति। व्यक्तिपक्षे व्यक्तीनामानन्त्येन संख्याज्ञानाभावाद्यथासंख्यासम्भवाल्लक्ष्या-सिद्धेश्चेति भावः।

---

"भाव्यमानेन सवर्णानां ग्रहणन्न भवतीति" परिभाषया ग्रहणन्न भवति। गुणा अभेदका इति परिभाषया उपस्थिताः ये सवर्णाः तेषान्तु ग्रहणं भवति। शब्दरत्नकारमते—गुणा अभेदका अनया परिभाषया उपस्थिताः ये सवर्णाः तेषामपिभाव्यमानेत्यादिपरिभाषया निषेधो भवति। स्वरूपकृतभेदमादायेति—तद्धर्मवैशिष्ट्यस्य भेदसाधकतया सप्तत्वसङ्ख्याया उपपत्तिरिति भावः। अणुदिदित्यत्राजुदिदित्येव सिद्धेऽण्ग्रहणमजभिन्नानां यणां सङ्ग्रहार्थ-मेवेति यण्विषये भेदकत्वपक्ष एवोचित इत्याशयेनाह—यदित्विति। तत्र चेति = शक्यार्थ-ज्ञानान्तरजायमाने वाक्यार्थज्ञाने इत्यर्थः।

---

सम्बन्ध में अन्वय होता है, तथा च इक् पद स्ववाच्यवृत्तिजातिमत्व, सम्बन्ध से स्ववाच्यवाच्य में लाक्षणिक है। यहाँ पर लक्ष्यतावच्छेदक रूप से ज्ञात पदार्थ का लक्षणा से ज्ञान होने के कारण, लक्ष्यतावच्छेदच्छेदकीभूत प्रत्याहारवाच्यवाच्यत्व का ज्ञान अणुदित् सूत्र के विना असम्भव है। अतः इस सूत्र की आवश्यकता है।

प्रत्याहार उपलक्षण है, तद्वाच्यवाच्य भी उपलक्षण है। उपलक्ष्यतेऽनेनेत्युपलक्षणम्। प्रत्याहार को उपलक्षण होने के कारण 'अस्यच्वौ' के अकार का भी ग्रहण हो जायगा। तद्वाच्यवाच्य को उप-लक्षण होने से स्वसदृशवाच्य में भी लक्षणा हो जायगी। स्वपदेन अस्य का अकार तत्सदृश हुआ अइउण् का अकार तद्वाच्यवाच्य है अठारह, उनका भी ग्रहण हो जायगा। अणुदित्सूत्रेण गृहीत-लक्ष्यतावच्छेदकं यस्याः सा लक्ष्यतावच्छेदकिका, लक्षणा, विधीयमानातिरिक्त विषय में ही होती है, 'अप्रत्ययः' यह कथन होने से, अतः 'त्यदादीनामः' इत्यादि में स्वसदृशवाच्य में लक्षणा नहीं होती। "नाज्झलौ" "अणुदित्", यहाँ पर लक्षणा नहीं होती, नाज्झलौ, अणुदित् के बोधकाल में लक्ष्यता-वच्छेक का अज्ञान होने से।

ननु "प्रथमयोः पूर्वसवर्णः" इस सूत्र में अनुवृत्त जो अक् पद इसमें अकार का उच्चारण है, वह प्रत्याहार बोध्य है, अतः अणुदित् सूत्र की प्रवृत्ति हो जायगी तथा च विश्वपाः इत्यादि में पूर्व-सवर्ण दीर्घ व्यावृत्यर्थ "दीर्घाज्जसि" यह सूत्र है, वह ज्ञापक किस तरह होगा इति चेन्न अक् पदांय अकारेण स्वसवर्ण ग्रहण रहने पर भी वहाँ पर "नादिचि" इस सूत्र से ही सिद्ध है। लक्षणा मानने पर इक् शब्द से ६६ का ग्रहण होता है। विधीयमानविषय में लक्षणा का अभाव होता है इसको कह चुके। यदि गुणों का अभेद है तो, भेद निमित्तक सप्तत्व संख्या कहना अनुचित है इति चेन्न शास्त्र में उच्चारित गुणों का विवक्षितत्वाभाव रहने पर भी वस्तुगत्या स्वरूपकृत भेद लेकर सप्तत्व संख्या होने से।

"अणुदित्सवर्णस्य चाप्रत्ययः" इस सूत्र में अण्ग्रहण क्यों किये नच य व ल इनके सवर्णों का ग्रहण हो इसलिए है इति वाच्यम् 'गुणा अभेदकाः' यह पक्ष स्वीकार कर लेने पर सवर्णों का ग्रहण हो जाने से दोषाभाव है। तथा च "अजुदित्" यह कहना चाहिये, किन्तु अणुदित् कह रहे हैं, अतः अण ग्रहण पड़ा व्यर्थ वह ज्ञापन किया कि, यण् विषय में "गुणा अभेदकाः" यह पक्ष होता है। इसी बात को शब्दरत्नकार ने लिखा है कि यण् विषय में गुणों की विवक्षिता ही उचित है, तथा च भेदकत्व पक्ष में शुद्ध का उच्चारण होने से शुद्धों का ही ग्रहण होगा, एवञ्च यथासङ्ख्य असङ्गत है। इसी बात का ध्वनन करते हुये मनोरमाकार ने कहा, अतो नास्ति यथा-सङ्ख्यम्। 'यथासङ्ख्य' के खण्डन में ही आग्रह है, सप्तत्व सङ्ख्या में आग्रह नहीं।

परे तु व्यक्तिपक्षे झलादिप्रत्याहारसूत्रेषु सर्वझकारादीनां ग्रहणं दुरुपपादम्। न हि तत्र लक्षणा वक्तुं शक्या, लक्ष्यतावच्छेदकाग्रहात् एवं च तत्र प्रत्याहारसूत्रेषु जातिनिर्देशेनैव निर्वाहो नान्यथा। एवं च "अइउण्" (पा० सू० १) इत्यादावपि जातिनिर्देश एवोचितः। अर्द्धजरतीयस्यानौचित्यात्। अत एव "अणुदित्—" (पा० सू० १।१।६९) सूत्रे भाष्ये प्रत्याहारेषु "अस्य च्वौ" (पा० सू० ७।४।३२) इत्यादौ च उक्तामनुपपत्तिमाशङ्क्य जात्याश्रयणमेव कृतम्। यथासंख्यसूत्रं च व्यक्तिसाम्य इव धर्मसाम्येऽपि प्रवर्तते। "स्यतासी लृलुटोः" (पा०सू० ३।१।३३) इत्यादौ यथा। नाप्यत्र पक्षे ऋकारादौ लकाराद्यापत्तिः। लृत्वादिजातेर्ऋकारादावभावात्। न च जातिपक्षे अणुदित्सूत्रेऽग्रहणप्रत्याख्याने "उपसर्गादृति—" (पा० सू० ६।१।९१) इत्यादौ ऋकारेण लृकारग्रहणाय सावर्ण्यवचनस्थाने लृवर्णस्य ऋवदतिदेशाद् लृकारे रेफापत्तिरिति वाच्यम्। क्लृप्तशिखार्थतस्यातिदेशस्यानित्यत्वावश्यकत्वात्। तत्पक्षेऽण्ग्रहणप्रत्याख्यानेऽपि "अप्रत्ययः" (पा० सू० १।१।६९) इत्यंशो वाक्यभेदेन विधीयमाने जातिग्रहणप्राप्तसवर्णग्रहणनिषेधकस्तपरपरेत्विति।

---

परेत्विति। भाष्यविदस्तु। निर्वाह इति। आवात्तामित्यादिलक्ष्याणान्निर्वाह इत्यर्थः। एवञ्च-जातिपक्षावश्यकत्वे च। धर्मसाम्येऽपि लृत्वं लुट्त्वञ्चादाय स्यतास्योर्यथासङ्ख्येन प्रवृत्तिर्भवति। अन्यथा लृशब्देन लृङ्लृटोर्द्वयोर्व्यक्त्योर्ग्रहणेन लुट्शब्देन चैकस्य लुट्लकारस्य ग्रहणेन स्यतास्योर्यथासङ्ख्यं प्रवृत्तिर्नस्यादिति। यथासंख्यसूत्रस्य व्यक्तिपक्षेऽपि धर्मसाम्यमादाय प्रवृत्तिरवश्यमभ्युपगन्तव्येति तदाशयः अतिदेशादिति। 'ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम्" इति वचने सावर्ण्यपदेन साजात्यस्य विवक्षितत्वात्। अन्यथा तत्पक्षे सवर्णग्राहकसूत्राभावेन वार्तिकस्य वैयर्थ्यमेव स्यादिति बोध्यम्। आवश्यकत्वादिति। धातुपाठे ऋकारलृकारयोः पृथगनुबन्धयोः करणेन तयोः सावर्ण्यस्य साजात्यस्य वाऽनित्यत्वज्ञापनात्। प्रत्याख्यानेऽपि—"सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात्" इति भाष्येणेति शेषः। जातिग्रहणप्राप्तेति। इदमुपलक्षणं गुणाभेदकत्वप्राप्तस्य 'अप्रत्ययः' इत्यनेन

---

'त्वादिभ्यः' इस निर्देश से कल्पित तात्पर्यानुपपत्तिज्ञान शक्यार्थबोध हो जाने पर ही सम्भव है। अतः शक्यार्थबोध आवश्यक हैं। क्योंकि लक्षणा शक्यार्थोपस्थितिमूलक हैं। शक्यार्थ ज्ञान के बाद जायमान वाक्यार्थ बोध में यथासङ्ख्य सहाय से वाक्यार्थ निष्पन्न होने पर 'त्वादिभ्यः' इत्यादि उच्चारण सामर्थ्य से लक्षणा से होनेवाला पुनः वाक्यार्थ बोध में लक्षित दीर्घादि का स्व वाचकान्वयी में हा अन्वय होगा, स्वपदेन लेगें दीर्घादि, उसका वाचक है, ह्रस्व इकार, उसका अन्वयी है यकार, उसमें दीर्घादिका का भी सम्बन्ध होगा। व्यक्तिपक्ष में व्यक्ति अनन्त होने से संख्या का ज्ञानाभाव होने से सुद्ध्युपास्यः, इत्यादि लक्ष्य असिद्ध हो जायगें। अतः "स्थानेऽन्तरमः" इससे हो इष्ट सिद्धि होगी मूलकार का आशय वर्णन करके भाष्यकारीय सिद्धान्तानुसारेण शब्दरत्नकार लिखते हैं।

परे तु व्यक्ति पक्ष में प्रत्याहारघटित "झलो झलि" इत्यादि सूत्रों में सम्पूर्ण झकारादि का ग्रहण असम्भव है, "अणुदित" सूत्र को अप्रवृत्ति होने से लक्ष्यतावच्छेदक का ग्रहण नहीं होगा, अतः वहाँ पर लक्षणा नहीं हो सकती। तथा च प्रत्याहार घटित सूत्रों में व्यक्ति पक्ष में जाति निर्देश स्वीकार करने पर ही "आवात्ताम्" इत्यादि का साधुत्व हो सकता है, अन्यथा नहीं। एवञ्च 'अइउण्' इत्यादि में भी जाति निर्देश ही उचित है, अर्द्धजरतीय अनुचित होने से। अणंश में लक्षणा, झलंश में जातिपक्ष, यही अर्द्धजरतीय है। अर्द्धजरतीय यह विग्रह करके "इवार्थे विषयात् समासाच्छः प्रत्ययः" इत्यर्थक "समासाच्च तद्विषयात्" इस सूत्र से छ प्रत्यय हो जाने पर अर्द्धजरतीय शब्द का

"अनचि च" (पा० सू० ८।४।४७) द्वे वेति। "यरोऽनुनासिके" (पा० सू० ८।४।४५) इति सूत्राद् वाग्रहणमनुवर्तते इति "नाज्झलौ" (पा० सू० १।१।१०) इति सूत्रे कैयटः। एवं च "सर्वत्र शाकल्यस्य" (पा० सू० ८।४।५१) इति सूत्रं तत्प्रपञ्चभूतं पूर्वोत्तरसूत्रद्वयं च नारम्भणीयमिति भावः।

---

सूत्रवदिति "त्यदादीनामः" (पा० सू० ७।२।१०२) इत्यादौ न दोषः। एवं चात्र यण्पदेन जात्याश्रयणेनापि न सवर्णबोधनमिति "स्वौजस्—" (पा० सू० ४।१।२) इत्यादावनुनासिकस्थानेऽपि निरनुनासिक एव। अत एव स्थानेऽन्तरतमसूत्रे भाष्येऽस्य तदुदाहरणत्वमाशङ्क्य "यथासंख्यम्" (पा० सू० १।३।१०) इत्यनेनापि सिद्धमित्युक्तम्। तेनात्र तयोः फलाविशेष उक्तः। "उञः" (पा० सू० १।१।१७) इति सूत्रे नव्यानां प्रमाद एव। न च झलादिषु झकारादिभीरूपसादृश्येन सर्वझकारादिप्रतीतिरिति वाच्यम्। अणादिष्वपि किञ्चित्साहश्यमाश्रित्य दीर्घादीनामपि ग्रहणोपपत्तौ "अणुदित्" (पा० सू० १।१।६९) सूत्रस्य, तद्वाच्येस्यस्य च वैयर्थ्यापत्तेः। "ल्वादिभ्यः" (पा० सू० ८।२।४४) इति निर्देशानामीपत्साहश्येनापि ग्रहणमित्यर्थज्ञापकताया युक्तत्वात्। तदप्युक्तम् अइउण्सूत्रे भाष्ये- "रूपसामान्याद्वा सिद्धम्" इति। अणुदित्सूत्रेऽण्ग्रहणं तु प्रत्याहाराद्यवर्णेषु णकारादिभिश्चिह्नैः प्रत्याहारसूत्रस्थोऽयमिति प्रत्यभिज्ञासत्त्वादुपायान्तरपरम्। 'आचार्याः कृत्वा न निवर्तन्ते" इति न्यायात्। इदमेवाभिप्रेत्य तत्रत्यमण्ग्रहणं प्रत्याख्यातं भाष्ये इत्याहुरिति दिक्।

---

विधीयमानः सवर्णस्य ग्राहको नेति सामान्यरूपेण निषेधस्य करणेन येन येन प्राप्तं सवर्णग्रहणं तस्य सर्वस्यापि निषेधलाभात्। जात्याश्रयेणापि—अपिनागुणाभेदकत्वस्य ग्रहः। फलाविशेष इति। स्थानेन्तरतमसूत्रसाध्यलक्ष्याणां यथासङ्ख्यसूत्रेणापि सिद्धिरित्यर्थः। तदपि रूपसादृश्येन सिद्धमित्यपि। अपिना जातिपक्षसमुच्चयः।

मूले त्र्यम्बेति। यत्तु नादिन्याक्रोशे पुत्रस्येति सूत्रे लिङ्गविशिष्टपरिभाषया पुत्रीशब्दस्याऽपिग्रहणे पुत्र्यादिनीत्यादौ नित्यनिषेधे प्राप्ते विकल्पार्थं "त्रिप्रभृतिषु" इति

---

साधुत्व होता है। जातिपक्षाश्रयण तात्पर्य से ही, "अणुदित्" सूत्र से प्रत्याहारों में तथा "अस्यच्वौ" यहाँ पर व्यक्ति पक्ष में झलादि प्रत्याहारों में सम्पूर्ण झकारादि का ग्रहण दुर्लभ है इस अनुपपत्ति की आशङ्का करके जात्याश्रयण ही किया। "यथासङ्ख्य" सूत्र व्यक्तिसाम्य की तरह धर्मसाम्य में भी लगता है "अत एव" स्यतासी लृलुटोः' इत्यादि में 'लृत्व' लुट्त्व ग्रहण करके स्यतास् की यथासङ्ख्येन प्रवृत्ति होती है, अन्यथा लृशब्द से लृङ् लृट् दो व्यक्तियों का ग्रहण होने से तथा लुट् शब्द से एक लुट् व्यक्ति का ग्रहण होने से स्यतास् को यथासङ्ख्येन प्रवृत्ति नहीं होगी। न च जाति पक्ष स्वीकार कर लेने पर ऋकार के स्थान पर लृकार होने लगेगा इति वाच्यम् लृत्वादि जाति में ऋत्वादि का अभाव होने से। ऋकार के स्थान पर लृकार नहीं होगा।

न च जाति पक्ष में "अणुदित् सवर्णस्य चाप्रत्ययः" इस सूत्र में अण् का प्रत्याख्यान कर देने पर "उपसर्गादृति" इत्यादि में ऋकार के द्वारा लृकार का ग्रहण हो, इसलिए "ऋलृवर्णयोर्मिथः" इस वार्तिक के स्थान पर लृवर्ण को ऋवत् अतिदेश हो जाने से लृकार के स्थान पर रेफ होने लग जायगा इति वाच्यम् वलृप्तशिखा में प्लुत होने से "ऋवत्" यह अतिदेश अनित्य है। अनित्यत्व के ज्ञापक और भी है ऋलृक् सूत्र में लृकार का पृथक् पाठ, धातु पाठ में ऋकार लृकार का पृथक्करण इत्यादि।

यत्तु "दीर्घादाचार्याणाम्" ( पा० सू० ८।४।५२ ) इति सूत्रे आचार्यग्रहणं-पूजार्थमित्यभिप्रेत्य वाक् वाक्क् इति भाष्योदाहृते विकल्पे उपपत्तिचिन्तार्थं-क्लिश्यन्ते, तन्मुधैव। पूजार्थतायाः प्रामाणिकैरनुक्तेः। "त्रिप्रभृतिषु=" ( पा०

क्लिश्यन्त इति। "अनचि" इत्यनुवर्त्त्य पर्युदासपरतया हलि पर एव नित्यनिषेध इति व्याख्यानेनेति भावः। विकल्प उक्त इति। एवं च "सर्वत्र शाकल्यस्य" ( पा० सू० सूत्रमावश्यकमिति तन्न लिङ्गप्रत्ययरहिते पुत्रादिनीत्यादौ पुत्रशब्दनिष्ठाकारमादाय त्रिप्रभृतिष्विितसूत्रस्य दुर्वारत्वेन निषेधवैयर्थ्यापत्त्या तद्विषयेऽप्रवृत्तेः न हि 'त्रिप्रभृतिष्वि-त्यनेन हलामेव ग्रहणमित्यत्र प्रमाणमस्ति।

किञ्च 'पुत्रशब्दस्य न द्वे स्तः' इति यथाश्रुतं न युक्तम्। पुत्रशब्दस्य द्वित्वाप्रवृत्तेः। किन्तु तदवयवपरः। अतएव "उभयत आश्रयणे नान्तादिवदि"त्यस्य न विषयः। तथा च प्राधान्यात् आदिनीति यर एव विशेषणम्। एवञ्च पुत्रादिनीत्यत्र रेफमात्रव्यवधाने चरितार्थो विधीरेफयकारव्यवधाने कथं प्रवर्तेत। अपिच "पुत्र्याः शाकटायनस्येति" वक्तव्ये त्रिप्रभृतिष्विितसूत्रं व्यर्थमेवेति।

नित्यनिषेध इति। दीर्घादाचार्याणामित्यनेनेतिशेषः। पूर्वत्र प्रसज्यप्रतिषेध-

जातिपक्ष में भाष्यकार ने "सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात्" इससे अण् का प्रत्या-ख्यान किया "अप्रत्ययः" तो जातिपक्ष में प्राप्त सवर्ण ग्रहण का निषेधक है "तपरस्तत्कालस्य" सूत्र की तरह, इसका भाव है तुल्य न्याय से जाति ग्रहण प्रयुक्त अतिव्याप्ति वारण करने के लिये तपर करण होता है। उसी प्रकार "त्यदादीनामः" इत्यादि से मकार के स्थान पर सानुनासिक अकार न हो इसलिए अप्रत्ययः यह निषेध भी जातिग्रहण प्रयुक्त सवर्ण का निषेधक है। अतः अप्रत्ययः यह योग विभाग ( वाक्य भेद ) आवश्यक है, अन्यथा अण् के चले जाने पर "अप्रत्ययः" यह भी चला जायगा। तथा च जात्याश्रयण करने पर भी यण् पद से सवर्ण का बोध नहीं होगा, "अप्रत्ययः" यह निषेध होने से। अतएव "स्वौजसमौट्" इसमें अनुनासिक उकार के, स्थान पर निरनुनासिक वकार किये। अतएव (जाति पक्ष अभिप्रेत होने के कारण ही) "स्थानेऽन्तरतमः" इस सूत्र के भाष्य में "इकोयणचि" यह "स्थानेन्तरतमः" का उदाहरण है, यह आशंका करके उत्तर दिया "यथासङ्ख्य" से भी सिद्ध हो जायगा। इससे यह स्पष्ट प्रतीत होता है कि "इकोयणचि" यहाँ पर "स्थानेऽन्तरतमः" "यथासङ्ख्य" दोनों परिभाषाओं का फल विशेष नहीं।

नच "उञ्" इति सूत्रोदाहरण के अवसर पर 'किम्विति' इस प्रयोग में अनुनासिक वकार प्रदर्शन परक दीक्षितादि ग्रन्थों की कैसे सिद्धि होगी इति वाच्यम् "उञः" इस सूत्र में नव्यों का प्रमाद होने से चिन्त्य है। नच झलादि में झकारादि द्वारा रूपसादृश्य होने से सम्पूर्ण झकारादि की प्रतीति हो जायगी अक् इत्यादि में किस प्रकार होगी, इति वाच्यम् अगादि में किञ्चित् सादृश्य का ग्रहण कर लेने पर दीर्घादि का ग्रहण हो जाने से प्रतीति हो जायगी। तथा च "अणुदित्" सूत्र तथा तद्वाच्यवाच्य में लक्षणा व्यर्थ है "ल्वादिभ्यः" इत्यादि उच्चारण से लक्षणा ज्ञापकता की अपेक्षा "ईषत् सादृश्येनापि ग्रहणम्" यह ज्ञापकता उचित है। उसी को भाष्यकार ने कहा है। "रूपसामान्याद्वासिद्धम्" अर्थात् रूपसादृश्य से सिद्ध है। 'अणुदित्' सूत्र में 'अण्ग्रहण' प्रत्याहार के आथवर्ण में णकारादि चिह्न के द्वारा प्रत्याहार सूत्रस्थ है, यह प्रत्यभिज्ञा के वास्ते आवश्यक है। यह भी उपायान्तर है, "अन्यः उपायः उपायान्तरम्" मयूरव्यंसकादित्वात् समास हो जायगा। दोनों पक्षों में दोषाभाव है, तब अण् ग्रहण पाणिनिजी क्यों किये आचार्य लोग ग्रहण करके फिर हटाते नहीं। फलान्तराभाव होने से "अणुदित्" सूत्र में अण् का प्रत्याख्यान कर दिये भाष्यकार।

सू० ८।४।५० ) इति सूत्रे शाकटायनग्रहणस्यापि तथात्वापत्तेः । न चेष्टापत्तिः । संस्स्कर्तेति त्रिसकारपरकैयटहरदत्तादिग्रन्थविरोधात् । स्वग्रन्थविरोधाच्च । अतएव प्रातिशाख्यभाष्येऽपि "आ त्वा रथम्" इति मन्त्रे तकारस्य द्वित्वविकल्पउदाहृतः । माधवेन चास्त्ते इत्यत्र सकारस्य द्वित्वविकल्प उक्तः । एवं च धात्त्रंशइत्यत्र तकारस्य द्वित्वमसदित्युक्तिरेवासतीति दिक् ।

---

८।४।५१ ) इतिवदिदमपि प्रपञ्चार्थमिति भावः । असतीति । यत्तु-"नादिनी—" ( पा० सू० ८।४।४८ ) इत्यादौ वृत्तौ "अनचि-" इति प्राप्तिमुद्भाव्य "त्रिप्रभृतिषु—" ( पा० सू० ८।४।५० ) "सर्वत्र—" इत्यनयोः प्राप्तिमनुद्भाव्य पुनः "दीर्घात्—" ( पा० सू० ८।४।५२ ) इत्यत्र "अनचि—" इति प्राप्तिरुद्भाविता हरदत्तेन । तस्यायमाशयः-निषेधविकल्पे प्राप्त्युद्भावनं नावश्यकम्, तद्विकल्पे विधिविकल्पस्य फलितत्वेन विधेरेव अप्राप्तविषयविकल्पसम्भवाद्, नित्यनिषेधे तु तदुद्भावनमावश्यकमिति । तन्न । विकल्पेऽपि निषेधप्रकरणान्नञुल्लेखस्यावश्यकत्वेन प्राप्त्युद्भावनस्यावश्यकत्वात् । मध्ये नञोऽसम्बन्धोमण्डूकानुवृत्तिरग्रे इत्यत्र मानाभावाच्च । "सर्वत्र" इति सूत्रेऽस्य द्वित्वमात्रनिषेधकतेति

---

परस्यानुवृत्तस्य पर्युदासपरत्वे शब्दाधिकाराश्रयणं क्लेशः । इदमपीति । "अनचि चे"—त्यादिसूत्रबोधितद्वित्वविकल्पघटकस्याभावांशस्य यथा—"सर्वत्र शाकल्यस्ये"तिप्रपञ्चस्तथा दीर्घादाचार्याणामित्येतदपीति तदर्थः । द्वित्वमात्रेति । प्राप्तिविशेषविवक्षायामाकांक्षावशात्,

---

"अनचि च" इस सूत्र में "यरोऽनुनासिकः" इस सूत्र से वा ग्रहण का अनुवर्तन होता है, यह "नाज्झलौ" सूत्र के कैयट में स्थित है । तथा च वा ग्रहणानुवृत्ति से ही इष्टसिद्धि हो जाने से "सर्वत्र शाकल्यस्य" एवं "अनचि च" का ही विस्तरस्वरूप "त्रिप्रभृतिषु शाकटायनस्य" दीर्घादाचार्याणा-" ये सूत्रद्वय नहीं करना चाहिये । जो "दीर्घादाचार्याणाम्" इस सूत्र में आचार्य ग्रहण को पूजार्थ स्वीकार कर वाक् वाक्क् का साधुत्व करने को "दीर्घादाचार्याणाम्" में "अनचि" का शब्दाधिकार से अनुवर्तन कर उसको पर्युदासपरक मानने पर अच् भिन्न अच् सदृश्, सादृश्यञ्च वर्णत्वेन ग्रहण होगा तथा च हल् परे रहते ही निषेध होगा । इस व्याख्यान से वाक् वाक्क् का साधुत्व करते हैं, वह व्यर्थ है, क्योंकि आचार्यग्रहण पूजार्थक, प्रामाणिक लोग स्वीकार नहीं करते । यदि पूजार्थक स्वीकार करें, तो "त्रिप्रभृतिषु शाकटायनस्य" इस सूत्र में शाकटायन ग्रहण भी पूजार्थक हो जायगा । संस्कर्त्ता यहाँ पर त्रिसकार बोधक कैयट हरदत्तादिग्रन्थ विरोध होने से तथा स्व ग्रन्थविरोध होने से इष्टापत्ति नहीं कह सकते । अत एव प्रातिशाख्य भाष्य में भी "आत्वारथम्" इस मन्त्र में तकार को द्वित्व विकल्प से बताया गया ।

माधव ने "आस्त्ते" यहाँ पर सकार को द्वित्व विकल्प से कहा, इसका अभिप्राय शब्दरत्नकार लिखते हैं कि "सर्वत्रशाकल्यस्य" की तरह "दीर्घादाचार्याणाम्" यह सूत्र भी प्रपञ्चार्थ है । तथा च जो यह कहते हैं कि 'धात्त्रंशः' इसमें द्वित्व असत् है, उनका कहना ही असत् है । जो काशिका वृत्ति में "नादिन्याक्रोशे पुत्रस्य" इस सूत्र में "अनचि च" की प्राप्ति दिखाकर "त्रिप्रभृतिषु शाकटायनस्य" "सर्वत्रशाकल्यस्य" इन दोनों सूत्रों में प्राप्ति न दिखाकर हरदत्त ने पुनः "दीर्घादाचार्याणाम्" इस सूत्र में "अनचिच" इसकी प्राप्ति दिखाई, उसका यह अभिप्राय है कि निषेध विकल्प रहने पर प्राप्ति दिखाना आवश्यक नहीं, क्योंकि निषेध विकल्प रहने पर विधि विकल्प फलित होता है ।

"स्थानिवदादेशः" (पा० सू० १।१।५६) धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशा इति प्राचोक्तम्। किं तत्परिगणनमुदाहरणमात्रं वा ? नाद्यः। सिच्क्सचङङादीनां श्नादेशस्य शानचश्चासङ्ग्रहापत्तेः। नान्त्यः। अव्ययस्याङ्गपदाभ्यां पृथग्ग्रहण-

---

बोधयितुं तदनूल्लेखाच्च। "त्रिप्रभृतिषु–" इत्येतद्विषये "नकारषकारयोर्द्विर्वचनाभावः" इति मिश्रग्रन्थेन प्राप्त्युल्लेखस्य कृतप्रायत्वाच्च। वृत्तिहरदत्तयोः "नादिन्या–" "शरोऽचि" (पा० सू० ८।४।४९) इत्यनयोरपि प्राप्त्युल्लेखस्य बहुषु पुस्तकेष्वनुपलम्भाच्चेति दिक्।

चङादीनामिति। आदिना चिण्। न केवलं च्ल्यादेशानामेवासङ्ग्रह इत्याह—श्नादेशस्येति। तदभावे ह्वादिघातामित्यत्रेड् न स्यात्। क्सादेः कादीनामित्वं न स्यात्।

---

तदुद्भावनापेक्षा, तदविवक्षायां तु निषेधेन निर्ज्ञातायाः प्राप्तेरनाकांक्षितत्वादनुद्भावनमेवोचितमित्याशयः। द्विर्वचनाभाव इति। नकारषकारयोरनचीत्यनेनैव हि द्वित्वप्राप्तिरिति तदुद्भावनं ध्वनितमिति तात्पर्यम्। मिश्रग्रन्थेनेति। हरदत्तमिश्रकृतपदमञ्जरीग्रन्थेनेत्यर्थः। पदमञ्जर्याङ्क्वचित् 'नकारदकारयोर्द्विर्वचनाभाव' इति पाठोऽपि मिलति।

दिगिति। तदर्थस्तु भाष्योदाहरणोपपत्त्यर्थं दीर्घादाचार्याणामित्यत्रानचीत्यस्य पर्युदासपरतया सम्बन्धे सर्वत्रेत्यत्रापि तत्सम्बन्धापत्तिः। इष्टापत्तौ चार्को ब्रह्मेति वृत्तिकारोक्ततदीयोदाहरणासंगतिः। असम्बन्धे मण्डूकप्लुत्यापत्तिः। स्वरितत्वे मानाभावादनुवृत्त्यसंगतिश्चेति।

नच च्ल्यादेशानां सर्वेषां ग्रहणादादिपदग्रहणमसङ्गतमिति वाच्यञ्चिणोऽग्रहणादत आह "आदिनाचिण्"। तदभावे=स्थानिवद्भावाभावे। यदि विकरणादेशस्य स्थानिवद्व्यवहाराविषयत्वं तदा तेषामादेशानामार्द्धधातुकत्वेन प्रत्ययत्वेनाङ्गसंज्ञानिमित्तत्वेन च ग्रहणं न स्यात्, इष्टापत्तौ क्रमेण दूषणान्याह।

अवाधिषातामिति। वधातोरात्मनेपदस्य दुर्लभत्वादवाधिषातामित्येवोचितम्। न च कर्मव्यतिहारे "कर्तरिकर्मव्यतिहारे" इत्यात्मनेपदं भविष्यतीति वाच्यम् तावतापि तत्र सिचः

---

विधिविकल्प रहने पर भी दो रूप बनते हैं, और निषेध विकल्प रहनेपर भी दो रूप बनते हैं। अतः दोनों का फल बराबर है। अप्राप्तविषयक विकल्प, विधि का ही सम्भव है, जहाँपर नित्य-निषेध रहेगा वहाँ पर तो प्राप्त विषयक विकल्प रहेगा, अतः नित्य निषेध स्थल में विधिविकल्प फलित होता है। अभावाभावप्रतियोगीरूप होने से। तथा च नित्य निषेध रहने पर प्राप्ति का दिखाना आवश्यक है इति चेन्न विकल्प में भी निषेध का प्रकरण होने से नञ् लिखने की आवश्यकता होने पर प्राप्ति का दिखाना आवश्यक है। दो सूत्रों में नञ् का सम्बन्ध न करके आगे मण्डूकानुवृत्ति करने में प्रमाणाभाव होने से, "सवत्रशाकल्यस्य" इस सूत्र में द्वित्वमात्र की निषेधकता बोधन करने के लिये नञ् उल्लेख आवश्यक है।

"त्रिप्रभृतिषु शाकटायनस्य" इस सूत्र के विषय में नकार षकार को द्वित्व नहीं होता इत्यर्थक "नकार षकारयोर्द्विवचनाभावः" इस मिश्रग्रन्थ से प्रतीत होता है कि प्राप्ति का उल्लेख कृतप्रायः है; बहुत काशिका वृत्ति की पुस्तकों में तथा अनेक पदमञ्जरी युक्त पुस्तकों में "नादिन्याक्रोशे पुत्रस्य" तथा "शरोऽचि" इन सूत्रों पर भी प्राप्ति नहीं दिखाई गई।

काशिकाकार ने 'स्थानिवदादेशः' इस सूत्र पर यह आशङ्का करके कि स्थानिवदादेशः इसका क्या उदाहरण है तो उसका उत्तर दिया कि "धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशा इति" इसका

शानचः शस्य च तन्न स्यात्। मा हि दर्शदित्यादौ अङि गुणो न स्यादिति भावः। ननु सिजादीनां प्रत्ययाधिकारे पाठात् श्नस्वत् प्रत्ययत्वमस्तीति न स्थानिवत्त्वोपयोगः। न च तेषां प्रत्ययत्वे च्लिविधानं व्यर्थम्। "मन्त्रे घस"-(पा० सू० २।४।८०) इति सूत्रे चङ्क्सिचामिति त्रयाणां ग्रहणे गौरवापत्तेः। सिचो लुकि तद्विषये "आदिः सिच—" (पा० सू० ६।१।१८७) इति स्वरापत्तेश्चेति भाष्यकैयटयोः स्पष्टमित्यरुचेराह–चेति। तेना-

परस्मैपदपरकत्वाभावेन 'वदव्रज' इत्यस्याप्रवृत्यारूपासिद्धितादवस्थ्यात्। न चात्रसिच्यार्धधातुकत्वाभावेऽपि चिण्वदिटासिद्धिः अस्योपदेशाभावेन तदप्राप्तेरित्याहुः। चौरादिकसंशब्दनार्थकवादिधातौ स्वरितत्वबलाद् विकल्पितणिचो णिजभावेलुङ्यातां प्रत्यये कृतेऽवादिषातामित्यस्य साधुत्वमन्ये कुर्वन्ति। तन्नस्यादिति। शानचः शकारस्य प्रत्ययत्वाभावेन "लशक्वतद्धिते" इति सूत्रेणेत्संज्ञा न भविष्यति।

माहिदर्शदिति। अङिप्रत्ययत्वानतिदेशे दृशेस्तन्निरूपितांगत्वाभावेन गुणानुपपत्तिः। "ऋदृशोऽङि गुणः" इत्यस्याङ्गाधिकारीयत्वात् प्रत्यासत्याङ्गाधिकारीयकार्याणामङ्गसञ्ज्ञानिमित्तकप्रत्ययनिमित्तकत्वनियमात्। प्रत्ययाधिकारे पाठात् प्रत्ययत्वे फलमाह— श्नमूवदिति। यद्यप्यस्यमित्वसामर्थ्यादागमत्वं तथापि प्रत्ययत्वं प्रत्ययाधिकारे पाठात्। अतएव शस्येत्वसिद्धिः। न स्थानिवत्त्वोपयोग इति। औपदेशिकार्द्धधातुकत्वे प्रत्ययत्वमादायेष्टसिद्धेरिति भावः। सिजादीनामादेशत्वेऽपि प्रत्ययत्वं द्रढयितुमाशङ्कते न चेति। तेषाम् = सिजादीनाम्। स्वरापत्तेरिति। प्रत्ययलक्षणेन सिजन्तस्यादिरुदात्तोवेत्यर्थकेन

अभिप्राय है, द्वन्द्वान्त में श्रूयमाण आदेशपद का प्रत्येक के साथ सम्बन्ध होने से अर्थ होगा 'धातु के स्थानपर जो आदेश वह धातुवत् होता है, जैसे धातु के स्थान पर भू यह आदेश, अङ्ग के स्थान पर आदेश अङ्गवत् होता है, जैसे 'किम्' इस अङ्ग के स्थान पर 'क' यह आदेश, कृत् के स्थानपर आदेश कृत्वत् होता है, अतः प्रकृत्य इत्यादि में त्वा के स्थानपर ल्यबादेश को तुक् होता है, तद्धित के स्थानपर आदेश तद्धितवत् होता है, अतएव 'दाधिकम्' यहाँपर 'कृत्तद्धित समासाश्च' से प्रातिपदिक सन्ज्ञा होती है, अव्ययादेश अव्ययवत् होने से प्रस्तुत्य इत्यादि में "अव्ययदाप्सुपः" से सुप् का लुक् होता है। सुबादेशसुप्वत् होता है, अतएव वृक्षाः इत्यादि में 'सुपि च' से दीर्घ होता है। तिङादेशतिङ्वत् होता है, अत एव "अकुरुताम्" यहाँ पर "सुप्तिङन्तं पदम्" से पद सन्ज्ञा होती है। पदादेश पदवत् होता है अतएव "ग्रामो वः स्वम्" पदादेश वस् को रुत्व होता है।

इसपर मनोरमाकार कहते हैं कि 'धात्वङ्ग' इत्यादि परिगणन है या उदाहरण परिगणन स्वीकार करने पर च्लि के स्थान पर होने वाले आदेशों का जैसे सिच्, क्स, चङ्, आदि से चिण् का ही असङ्ग्रह नहीं, अपितु श्नादेश शानच् का भी असङ्ग्रह हो जायगा, विकरणादेश को स्थानिवद्भाव का अभाव होने से।

शब्दरत्नकार क्रम से दोष देते हैं। "अवाधिषाताम्" यहाँ पर सिच् को स्थानिवद्भाव की अप्राप्ति होने से आर्धधातुक संज्ञा नहीं होगी, तथा च इट् का आगम नहीं होगा, वद् धातु परस्मैपदी होने से, उससे आत्मनेपद अप्राप्त रहेगा। वद व्यक्तायां वाचि इस धातु से अवादिष्टाम् यह प्रयोग बनेगा। अतः बन्धनार्थक बध का उदाहरण भैरवीकार ने दिया। स्थानिवद्भाव से प्रत्ययत्व आ जाने पर क्स के ककार की तथा चङ् के चकार की इत्सन्ज्ञा होती है, अब वह नहीं होगी, शब्दरत्नकार ने प्रयोग बाहुल्याभिप्राय से "कादीनाम्" में बहुवचन कहा। स्थानिवद्भाव का अभाव होनेपर शानच् में भी प्रत्ययत्व नहीं आयेगा, तथा च शकार की इत्सन्ज्ञा नहीं होगी।

वैयर्थ्यात्। प्रस्तुत्येति वृत्तिकारोक्तं तदुदाहरणमपि मन्दम्। क्त्वामात्रस्यानव्ययत्वात्, कृत्त्वेन सिद्धत्वाच्चेत्याशयेनाह—आदेश इति। अनल्विधाविति किम्?

---

ग्रहीदित्यादाविडादेशस्य ईटोऽसङ्ग्रह इत्यर्थः। इदमुपलक्षणम्। अव्ययस्य पदात्पृथग्ग्रहणवैयर्थ्यमपि दोष इति बोद्धव्यम्। अव्ययस्येति। अत्र त्वस्यैव दोषत्वमिति भावः। नन्वव्ययस्याङ्गत्वे फलाभावेन प्रत्ययय लुकालुसत्वेन च तदप्राप्त्या कथं तेनाव्ययसङ्ग्रहोऽत आह—पदेति। तत्त्वं च ततः परस्य निपातार्थमावश्यकं प्रत्ययलक्षणेन सुबन्तत्वाच्च तत्त्वमिति भावः सिद्धत्वच्चेति। अत एवात्र तुक्। न च "सर्वे सर्वपदादेशाः" इति न्यायेन "प्रस्तुत्वा" इत्यस्य स्थाने प्रस्तुत्य इत्यादेशे तस्याव्ययत्वसिद्धिरिति वृत्त्याशय इति वाच्यम्। अर्थवत्येव स्थानिवत्त्वमिति तात्पर्येण क्त्वोऽप्यर्थवत्त्वेन तादृशस्थान्यादेशभावकल्पने मानाभावादिति दिक्। अनल्विधाविति किमिति। विधिग्रहणं विशिष्टं किमर्थं-

---

"आदिसिचोऽन्यतरस्यामि"तिसूत्रेणाद्युदात्तत्वापत्तिरित्यर्थः। इदमिति। अग्रहीदित्याद्यसिद्धिरूपदूषणम्। उपलक्षणमिति। स्वबोधकत्वे सति तदितरबोधकत्वम्। फलाभावेनेति। ततः परस्यविभक्तेः "अव्ययदाप्सुपः" इति लुप्त्वेन तत्राङ्गसञ्ज्ञानिमित्तस्य कस्यचित् कार्यस्याप्रवृत्तेरित्यर्थः। मूले तदुदाहरणमिति। अव्ययमात्रोदाहरणम्। इति न्यायेनेति = सर्वेसर्वपदादेशा दाक्षिपुत्रस्य पाणिनेः, एकदेश विकारे हि नित्यत्वं नोपपद्यते। सर्वपदेत्यत्र घञर्थे कः। सर्वशब्दश्चावयवकात्स्न्र्यवाची न तु पदबहुत्वे, पदशब्दो हि, अर्थवत्परस्तथा च सर्वे, आदेशाः अर्थवत आदेशा इति। ततश्च शब्दनित्यत्वोपपत्तये 'प्रस्तुत्वा' इत्यस्य

---

'माहिदर्शत्' यहाँ पर "इरितो वा" इससे च्लि को अङ् हो जाने पर स्थानिवद्भाव के अभाव में "ऋदृशोऽङि गुणः" इससे गुण नहीं होगा, क्योंकि अङ्गाधिकारीय कार्यों में अङ्गसंज्ञानिमित्तक-प्रत्ययनिमित्तकत्व अपेक्षित होता है। सिजादिका प्रत्ययाधिकार में पाठ कर देने पर श्नम् के सदृश प्रत्ययत्व इनमें रहेगा स्थानिवद्भाव की आवश्यकता नहीं।

यदि यह आशङ्का की जाय कि सिजादिका प्रत्ययाधिकार में पाठ हो जानेपर च्लिविधान व्यर्थ हो जायगा तो नहीं कहना चाहिये, क्योंकि च्लि के अभाव में "मन्त्रेघसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः" इस सूत्र में चङ् अङ् सिच् इन तीन का ग्रहण करनेपर गौरव होगा। तथा च्लि का लुक् होनेपर "आदिसिचोऽन्यतरस्याम्" इससे आद्युदात्त नहीं होता, सिच् का लुक् होने पर तो, सिच् लुक् विषय में "आदिसिचोऽन्यतरस्याम्" से आद्युदात्तत्वापत्ति हो जायगी, यह भाष्य कैयट में स्पष्ट है, इस अरुचि के रहने पर मनोरमाकार लिखते हैं, "चासङ्ग्रहापत्तेः" परिगणन स्वीकार करने पर अग्रहीत् इसमें "ग्रहोऽलिटि दीर्घः" इसमे इट् को दीर्घ हुआ है "इट ईटि" से सलोप करके इडादेश ईट् में इट्त्व लाते हैं, उसका असङ्ग्रह हो जायेगा। अग्रहीदित्यादि असिद्धि रूप दूषण उपलक्षण है, पद से पृथक् अव्यय ग्रहण भी दोष है।

उदाहरण मात्र भी नहीं कह सकते, अङ्गपद से पृथक् अव्ययग्रहण होने से। वृत्तिकारोक्त अव्यय का प्रस्तुत्य उदाहरण भी उचित नहीं, त्वामात्र में अव्ययत्वाभाव होने से, कृत्त्वेन सिद्ध होने से कृत का उदाहरण उचित है। तथा च परिगणन तथा उदाहरण कुछ नहीं हो सकता 'धात्वङ्ग' इत्यादि, इस अभिप्राय से मनोरमाकार ने लिखा है कि आदेश स्थानिवृत्ति धर्मवाला होता है।

शब्दरत्नकार लिखते हैं, अन्त्य पक्ष में ब्राह्मणवसिष्ठन्याय का अनाश्रय होने से अव्यय का पृथक् पाठ दोष है। ननु अव्यय की अङ्ग संज्ञा का कुछ फल नहीं है, वैयाकरणों की सञ्ज्ञा फलवती

तेन तस्मात्, तस्य, तस्मिंश्च विधौ मा भूत्। अत्र अला विधौ यथा—व्यूढोरस्केन। अत्र सकारस्य स्थानिवत्त्वेन विसर्गवदट्त्वमाश्रित्य "अड्व्यवाये" ( पा० सू० ८।४।२ ) इति णत्वं प्राप्तम्। अलः परस्य—द्यौः, पन्थाः, हल्ङ्यादिलोपो न। अलो विधौ—द्युकामः, वलि लोपो न। अलि विधौ—यजेः क्तः, क इष्टः।

---

मिति प्रश्नः णत्वं प्राप्तमिति। न च सकारे स्वतोऽड्भिन्नत्वसत्त्वादड्भिन्नव्यवाये नेति निषेधात्कथं णत्वप्राप्तिरिति वाच्यम्। अतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्याभावस्यातिदेशस्वभावसिद्धत्वात्। इदं चासिद्धवत् सूत्रे कैयटे स्पष्टम्। द्युकाम इति। यद्यपि वत्वं हल्त्वाद्यपेक्षया विशेषधर्मस्तथाप्येतद्वाक्योपप्लुते "वकारवदुकारः" इति वाक्ये उपात्तधर्मापेक्षया न तस्य तत्त्वम्। सूत्रक्लृप्तस्थानन्यादेशभावमादायैवैतत्कृतवाक्योपप्लवादिति भावः॥

---

प्रस्तुत्य' इत्ययमादेशः, "प्रस्तुत्वा इति प्रयोक्तव्ये" प्रस्तुत्य इति प्रयोक्तव्यमिति यावत्। तेन शब्दान्तरतया प्रयोगसाधुतामात्र विधानेन न शब्दनित्यत्वहानिः।

प्रश्न इति। अनलि इत्येव वक्तव्ये अनल्विधाविति ग्रहणं किमर्थमिति तदाशयः। चतुर्विधविभक्त्यर्थस्य लाभाय विधिग्रहणविशिष्टमनल्विधाविति तदुत्तरम्। णत्वप्राप्तिरिति। व्यूढोरस्केनेत्यत्रेति शेषः। अयं भावः विसर्गस्य सकारे कृते स्वतोऽड्भिन्नत्वात्, अड्भिन्नव्यवायेनेति निषेधात् कथं णत्वमिति।

अतिदिश्यमानेति। अतिदिश्यमानधर्मः अट्त्वं तद्भिन्नस्वाश्रयधर्मः, अड्भिन्नधर्मः, तत्प्रयुक्तकार्यः णत्वनिषेधस्तदभावस्यार्थात् णत्वस्यातिदेशः स्वभावसिद्धत्वात्, "सामान्यातिदेशे विशेषानतिदेश" इति परिभाषयात्र स्थानिवत् सूत्रेण हल्त्वस्यैवातिदेशो भविष्यति नतुवत्वस्य अत आह यद्यपि वत्वमिति। इदमाकूतम्—यद्यपि वत्वं हल्त्वाद्यपेक्षया विशेष-

---

होती है, प्रत्यय का लुक् शब्द से लुक् होने के कारण अङ्गसंज्ञा की अप्राप्ति होने के कारण अङ्ग से अव्यय का ग्रहण कैसे होगा, इस अरुचि पर पद को कहा गया तथा च पद से अव्यय भी गतार्थ हो जायगा अव्यय का पृथक् ग्रहण व्यर्थ होने से धात्वङ्ग इत्यादि उदाहरण नहीं हो सकता। अतिङन्त पद से परे तिङन्त को अनुदात्त होता है, इत्यर्थक् "तिङतिङः" ( ८.१.२८ ) इससे "प्रातर्भवति" इसमें अव्यय से परे भवति को अनुदात्त करने के लिये पदत्व लाना आवश्यक है, वह प्रत्ययलक्षण से सुबन्तत्व लाकर आता है। "सिद्धत्वात" का अभिप्राय शब्दरत्नकार लिखते हैं, प्रस्तुत्य यहाँ पर कृत्त्व आने से ही तुक् का आगम होता है।

न च 'सर्वे सर्वपदादेशः' इस न्याय से प्रस्तुत्वा के स्थान पर "प्रस्तुत्य" यह आदेश कर देने पर उसमें अव्ययत्व की सिद्धि हो जायगी यह वृत्तिकार का अभिप्राय है, इति वाच्यम् क्योंकि ( "पद्यते = गम्यतेऽर्थोऽनेनेत्यर्थवदिहपदम्" ) सम्पूर्ण आदेश अर्थवदादेश है, तथा च अर्थवान् रहने पर ही स्थानिवद्भाव होगा इस तात्पर्य से क्त्वा में भी अर्थवत्व रहेगा, जहाँपर श्रौतस्थान्यादेश का स्थानी अनर्थक रहता है, वहाँ पर ( समुदायस्थान्यादेश ) आनुमानिक स्थान्यादेश की कल्पना होती है। तथा च समुदायस्थान्यादेश कल्पना में प्रमाणाभाव होने से वृत्तिकारोक्त चिन्त्य है।

"अनलि" यह ही कहना चाहिये विधिविशिष्ट ग्रहण क्यों करते हैं, तो उसका उत्तर देते हैं, चतुर्विधविभक्त्यर्थ लाभ के लिये विधिग्रहण विशिष्ट "अनल्विधौ" यह करते हैं। अर्थात् अलाविधिः, अल्विधिः, तृतीया समास, अलः विधिः, अल्विधिः, पञ्चमीसमास, अलोविधिः अल्विधिः षष्ठीसमास

"हशि च" ( पा० सू० ६।१।११४ ) इत्युत्वं न। अल् चेहस्थान्यवयव एव गृह्यते तेन रामायेत्यादौ "सुपि च" ( पा० सू० ७।३।१०२ ) इति दीर्घः सिद्धः। तद्विधौ हि यञादित्वमाश्रितं यञ्चादेशावयवो न तु स्थान्यवयव इति तदेतत्सकलमभिप्रेत्याह—न तु स्थान्यलाश्रय इति। आश्रयणं चेह यथाकथञ्चिन्न तु प्राधान्येनैवेत्याग्रहः। तेन प्रपठ्येत्यत्र वलादिलक्षण इण् न। तन्निषेधादिति। स्थानिवत्त्वनिषेधादित्यर्थः।

---

क इष्ट इति। यद्यपीदं रूपमुत्वे गुणेऽवादेशे च पाक्षिकल्लोपेन सिध्यति, तथापि पक्षे कविष्ट इति स्यात्; कयिष्ट इति चेष्यते इति भावः। स्थान्यवयव एवेति। उपलक्षणमेतत्स्थानिरूपोऽपीति बोद्धव्यम्। अत एव "आदेशिन्यल्याश्रीयमाणे प्रतिषेध" इति भाष्ये उक्तम्। न तु स्थान्यवयव इति। अतः प्रत्ययत्वं स्थानिवत्त्वेन भवत्येवेति भावः। अग्रहीदित्यादौ "ग्रहोऽलिटि" ( पा० सू० ७।२।३७ ) इत्यनेनेट एव दीर्घविधानान्नाल्त्वेन तस्य स्थानितेति तद्वृत्तीट्त्वाश्रयस्य सिचो लोपस्य सिद्धिरिति बोध्यम्। यथा कथंचिदिति। व्याख्यानादिति भावः।

---

धर्मस्तथापिस्थानिवदिस्यावृत्तौ, उकारः वकारवत्, अस्मिन् वाक्ये, उच्चरितधर्मः वत्वमुत्वञ्च उत्वापेक्षया वत्वेविशेषधर्मता नास्ति। ञ्चत्वल्त्वेति। यत्र स्थानिवदित्यस्यावृत्तिर्भवति तत्रस्थान्यादेशभावमादायैव, स्थानितावच्छेदकम् = वत्वम्। आदेशतावच्छेदकम् = उत्वम्।

स्थान्यवयवेति। अल्वृत्तिधर्मनिमित्तके विधौ न स्थानिवदित्यर्थे कृते रामायेत्यत्रदोषः "अत्राल्पदेनादेशावयवो यकारो गृह्यते तद्वृत्तिधर्मः यञ्त्वम्, तन्निमित्तको विधिः दीर्घविधिस्तस्मिन् कर्तव्ये स्थानिवद्भावनिषेधात् सुप्त्वाभावेन दीर्घानुपपत्तेरतोऽल्पदेन स्थान्यवयवोऽल्ग्राह्यस्तथा च स्थान्यवयवाल्वृत्तिधर्मनिमित्तके विधौ न स्थानिवत्, इत्यर्थेन न दोषः।

न च प्रपठ्येत्यत्रेडागमस्य वलादित्वनिमित्तकत्वात् वल्त्वनिमित्तकत्वाभावेन निषेधाप्राप्त्या स्थानिवद्भावेन वलाद्यार्धधातुकत्वादिट्स्यादिति वाच्यम्, घटितत्वनिवेशेनादोषात्, तथा च स्थान्यवयवाल्वृत्तिधर्मघटितधर्मनिमित्तके विधौ न स्थानिवदित्यर्थो जातः।

---

अल्विधिः अल्विधिः सप्तमी समास लाभ के लिये विधिग्रहण विशिष्ट करते हैं। इन समासों के मध्य में तृतीयासमास का प्रयोजन दिखलाते हैं, "व्यूढं विशालमुरो यस्यासौ व्यूढोरस्कस्तेन व्यूढोरस्केन" यहाँ पर सकार को स्थानिवत्त्वेन विसर्ग वृत्ति अट्त्व समझ कर "अड्व्यवाये" इससे णत्व प्राप्त होता है, किन्तु अल् करके स्थानिवद्भाव कर्त्तव्य रहने पर स्थानिवद्भाव नहीं होता।

यदि कहो कि विसर्ग को सकार हो जाने पर स्वतः अट् भिन्न होने से "अट् भिन्नव्यवाये णत्वन्न भवति" यह निषेध होने से कैसे णत्व होगा तो नहीं कह सकते, क्योंकि अतिदिश्यमान धर्म विरुद्ध स्वाश्रयधर्म प्रयुक्त कार्याभाव का अतिदेश, स्वभावसिद्ध होता है। अतिदिश्यमान धर्म है अट्त्व तद्विरुद्ध स्वाश्रयधर्म, अर्थात् सकार है आश्रय जिसका इस तरह का धर्म है, अड्भिन्नत्व तत्प्रयुक्तणत्वनिषेध तदभाव का अर्थात् णत्व का अतिदेश, स्वभावसिद्ध है। यह "असिद्धवदत्राभात् ६।४।२२ इस सूत्र के कैयट में स्पष्ट है।

द्यौः पन्थाः, इत्यादि में स्थानिवद्भाव हो जाने पर सु का "हल्ङ्यादि" लोप प्राप्त होता है किन्तु अल् से पर को विधिकर्तव्य हो तो स्थानिवद्भाव नहीं होता, यह निषेध हो जाने से हल्ङ्यादिलोप

न च रामायेत्यत्र स्थान्यवयवोऽलेकारस्तद्वृत्तिधर्मः सुप्त्वम् तद्घटितधर्मः यञादि-सुप्त्वम् तन्निमित्तकदीर्घविधौ स्थानिवत्त्वनिषेधात् । सुपिचेति दीर्घो न स्यादिति वाच्यम्, अल्वृत्तिधर्मेऽल्मात्रवृत्तित्वविशेषणदाने सुप्त्वस्याल्मात्रवृत्तित्वाभावेनादोषात् । तथा च स्थान्यवयवाल्वृत्तिधर्मघटितधर्मनिमित्तके विधौ न स्थानिवदित्यर्थः ।

न च बभूविथेत्यत्र सिब्वृत्तेरार्धधातुकत्वस्य थलि अतिदेशो न स्यात्, स्थान्यवयवाल्-सिपः सकारः तद्वृत्तिधर्मः वल्त्वम् तद्घटितधर्मः वलादि-आर्धधातुकत्वम् तन्निमित्तके इड्विधौ स्थानिवत्वनिषेधादिति वाच्यम, अल्मात्रवृत्तिधर्मे आदेशावयवाल्–अवृत्तित्व-निवेशेनादोषात् । तथा च स्थान्यवयवाल्वृत्ति–अल्मात्रवृत्ति–आदेशावयवाल्वृत्तिधर्मघटित-धर्मनिमित्तके विधौ न स्थानिवत् इत्यर्थः । न च बभूवतुरित्यत्र वल्त्वस्यादेशावयवतकार-सकारवृत्तित्वात् स्थानिवत्वनिषेधाप्राप्त्या वलाद्यार्धधातुकत्वातिदेशेनेट्स्यादिति वाच्यम् आदेशाद्यल्वृत्तित्वनिवेशेनादोषात्, वल्त्वस्य चादेशाद्यलकारावृत्तित्वात्, तथा च स्थान्यव-वाल्वृत्ति–अल्मात्रवृत्ति–आदेशाद्यलवृत्तिधर्मघटितधर्मनिमित्तके विधौ न स्थानिवत् । न च कः इत्यत्र हलन्तत्वातिदेशेन सुलोपः स्यात् हल्त्वस्यादेशाद्यल्ककारवृत्तित्वेन स्थानि-वत्वनिषेधाप्राप्तेरिति वाच्यम् । अतिदिश्यमानयोऽल्मात्रवृत्तिधर्मघटितधर्मः तन्निमित्तके विधौ न स्थानिवदित्यर्थेनादोषात् । इति प्राचीनानां मतम् ।

उक्तार्थस्वीकारेऽपि धिन्वन्तीत्यत्र दोषः, उकारवृत्त्यार्धधातुकत्वमादायेट् स्यात्, अन-ल्विधाविति निषेधस्य तु न प्राप्तिः, आर्धधातुकत्वस्याल्मात्रवृत्तिधर्मत्वाभावात् । अतः, स्थानिरूपोऽल्तद्वृत्तिधर्मः तन्निमित्तके विधौ न स्थानिवदिति द्वितीयोर्थः, स्वीकार्यस्तथा च स्थानिरूपोऽल् उकारः तद्वृत्तिधर्मः आर्धधातुकत्वम् तन्निमित्तके इड्विधौ स्थानिवत्व-

नहीं होता । "द्युकामः" यहाँ पर लौकिक विग्रह होता है, "दिवि कामोऽस्य" व्यधिकरणबहुव्रीहि समास हो जानेपर वकार स्थानिक उकार को स्थानिवद्भाव से वत्व आ जाने पर "लोपो व्योर्वलि" इससे वकार लोप प्राप्त होता है, अनल्विधौ निषेध लग जाने से नहीं होता । "सामान्यातिदेशे विशेषानतिदेशः" इस न्याय के बल से हल्त्व का ही अतिदेश होगा वत्व का नहीं, इस अरुचि का उत्तर करते हैं । यद्यपि वत्वधर्म हल्त्वादि धर्म की अपेक्षा विशेष धर्म है, अतः न्याय का विषयप्रतीत होता है, किन्तु अन्यादेश में अन्यस्थानिवृत्तिधर्मवारण करने के लिये "तदादेशः तत्स्थानि-वद्भवतीति" यह कल्पना आवश्यक है, अतः प्रत्यासक्त्या अतिदेशबोधक वाक्यजन्य ज्ञानविषय सामान्यविशेषधर्म ही न्याय का विषय होगा । तथा च "स्थानिवत्" इसकी आवृत्ति करने पर आवृत्तस्थानिवत् का अर्थ होगा "वकारवदुकारः" इस वाक्य में उच्चारित धर्म है उत्व उसकी अपेक्षा वत्व में विशेषधर्मत्व नहीं है । सूत्रनिश्चित स्थानितावच्छेदक और आदेशतावच्छेदक को लेकर ही आवृत्ति होगी, जैसे यहाँ पर स्थानितावच्छेदक वत्व है, आदेशतावच्छेक उत्व है स्थान्या-देशभाव लेकर ही स्थानिवत् की आवृत्ति होती है, यहाँ पर वत्वोत्व का उपादान होने के कारण सामान्य विशेषधर्म का अनुपादान होने से, इस न्याय का विषयाभाव होने से, वत्व का अतिदेश हो जायगा लोप प्राप्त रहेगा, अनल्विधौ निषेध लग जाने से नहीं होता ।

( अल्विधाविति ) अल् परे रहते विधिकर्तव्य हो तो स्थानिवद्भाव नहीं होता, जैसे किम् शब्द को क आदेश करके "कः" का साधुत्व हो जाने पर, यज् धातु से क्त प्रत्यय सम्प्रसारणादि करके "इष्टः" का साधुत्व हो जाने पर "क इष्टः" यहाँ पर "हशि च" से उत्व नहीं होता "अन-ल्विधौ" निषेध हो जाने से । यद्यपि यह उत्व गुण अवादेश पाक्षिक लोप करने पर सिद्ध हो सकता

निषेधाददोषः, "भोभगो" इति सूत्रस्थभाष्यमपि मानम्। तत्र हि विसर्गे रुत्वमतिदिश्ययत्व-माशंक्यानल्विधावितिनिषेधेन समाहितम्। प्राचीनमते रुत्वस्याल्मात्रवृत्तित्वाभावात् निषेधाप्राप्तिरिति भाष्यविरोधः स्पष्ट एव।

न च रामायेत्यत्र स्थानिरूपोऽल् एकारः तद्वृत्तिधर्मः सुप्त्वम् तन्निमित्तकदीर्घविधौ स्थानिवत्वनिषेधात् सुपि चेति दीर्घो न स्यादिति वाच्यम्। किञ्च-अग्रहीदित्यत्र स्थानि-रूपोऽल् इकारः तद्वृत्तिधर्मः इट्त्वं तन्निमित्तकसलोपविधौ स्थानिवत्वनिषेधात् "इटईटि" इति सिज्लोपो न स्यादिति वाच्यम्, अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रय-धर्मिकारोपप्रकारीभूतधर्मनिमित्तके विधौ न स्थानिवदित्यर्थेनादोषादत्र च स्थानिता-वच्छेदकं ङेत्वम्, इट्त्वञ्च। स्थानषष्ठीप्रकृत्यर्थतावच्छेदकस्यैव स्थानितावच्छेदकतेति। तच्च नाल्त्वव्याप्यमिति न दोषः। धिन्वन्तीत्यत्र चाल्त्वव्याप्यधर्मं इक्त्वन्तदवच्छिन्ना स्थानिता उकार निष्ठा तन्निरूपितादेशता वकारनिष्ठा तदाश्रयो वकारस्तद्धर्मिकारोपो-'वकार आर्धधातुकत्वान्भवतु' इत्याकारकस्तत्र प्रकारीभूतधर्म आर्धधातुकत्वम् तन्निमित्तके इड्विधौ स्थानिवत्वनिषेधादिण्न भवति।

न च "हल्ङ्याब्भ्यो" सूत्रवार्तिकभाष्यविरोधस्तत्र हि 'अतिखट्वः, निष्कौशाम्बिरित्यत्र सुलोपवारणाय सूत्रकृता दीर्घग्रहणं कृतम्' वार्तिककृताङ्याब्ग्रहणेऽदीर्घ इति वार्तिकं-कृतम्, भाष्यकृता च ङी-ई, आ-आबितिप्रश्लेषः कृतस्तत्र चानल्विधाविति निषेधेनैव सुलोपवारणं भवतीति सूत्रवार्तिकभाष्यकृतां प्रयत्नो विफलस्तथाहि अल्त्वधर्मः अच्त्वम् तद्धर्मावच्छिन्ना स्थानिता ईकारनिष्ठा आकारनिष्ठा च तद्धर्मिकारोपः 'इकारः ङीप्त्ववान् भवतु' 'अकारः आप्त्ववान् भवतु' इत्याकारकस्तत्र प्रकारीभूतो धर्मः ङीप्त्वं, आप्त्वञ्च तन्निमित्तकसुलोपे स्थानिवत्वनिषेधादिति वाच्यम्, आरोपप्रकारीभूतधर्मेण साक्षादवच्छि-न्नोद्देश्यताके विधौ न स्थानिवत् इत्यर्थेनादोषात्, अत्र चोद्देश्यता न साक्षाद्ङीप्त्वाव-च्छिन्ना आप्त्वावच्छिन्ना च।

---

है, तथापि पक्ष में "कयिष्ट यह भी होने लगेगा। होना चाहिये रुत्व यत्व वैकल्पिक यकार लोप करके "क इष्टः" कयिष्टः। अनल्विधौ यहाँ पर अल् पद से स्थानी का ही अवयव अल् लेते हैं, अतः "स्थान्यवयवाल् वृत्ति धर्मनिमित्तके विधौ न स्थानिवत्" यह अर्थ होता है।

मनोरमाकार ने जो "स्थान्यवयव एव" कहा, उसको शब्दरत्नकार अर्थान्तर का उपलक्षण मानते हैं, अर्थात् अल् शब्द स्थान्यवयव का बोधक है, और स्थानिरूप अल् का भी बोधक है, अतः प्रकृत सूत्र (स्थानिवत् १।१।५६) के भाष्य में भाष्यकार ने कहा "आदेशिन्यल्याश्रीयमाणे प्रति-षेधः" 'आदेशिनि' यहाँपर सम्बन्धी की आधारत्वेन विवक्षा कर सप्तमी माननेपर "स्थान्यवयव" अर्थ होता है। "आदेशिन्यलि" समानाधिकरण मानने पर "स्थानिरूप" अर्थ होता है, अथवा सम्बन्धी की जहाँ पर आधारत्वेन विवक्षा करते हैं, वहाँ पर सम्बन्ध यदि 'इतर सम्बन्धानवच्छिन्नविशेष्य-विशेषणभाव स्वीकार करेंगे, तो "स्थानिरूप अल्" का लाभ हो जायगा। अवयवावयविभावस्वीकार करेंगे, तो स्थान्यवयवाल् का लाभ हो जायगा। "स्थानिरूपाल्" यह इतर सम्बन्ध अवयवावयवि-भाव से रहित शुद्ध विशेष्यविशेषण रूप है। "स्थान्यवयवाल्" यह इतर सम्बन्ध अवयवावयविभाव से विशिष्ट विशेष्यविशेषणभाव रूप है।

"स्थान्यवयवाल् वृत्ति धर्मनिमित्तके विधौ न स्थानिवत्" यह अर्थ स्वीकार कर लेनेपर "रामाय" इत्यादि में "सुपि च" (७।३।१०२) इससे दीर्घ हो जाता है, क्योंकि दीर्घविधि में यञादित्व का

"अचः" ( पा० सू० १।१।५७ )। अल्विध्यर्थमिति। तेन वव्रश्चेत्यत्र वस्य सम्प्रसारणं न। उरदत्वस्य स्थानिवत्त्वेन सम्प्रसारणतया "न सम्प्रसारण—" ( पा० सू० ६।१।३७ ) इति निषेधात्। न चोरदत्वं परनिमित्तं नेति वाच्यम्। अङ्गाक्षिप्ते प्रत्यये परे तद्विधानात् 'प्रागभ्यासविकारेभ्योऽङ्गाधिकारः' इति पक्षं दूषयित्वा 'आसप्तमसमाप्तेः' इति पक्षस्यैव आकरे सिद्धान्तितत्वात्। किं च पूर्वसूत्रेण स्थानिप्रयुक्तमतिदिश्यते नत्वादेशप्रयुक्तं वार्यते। नायकः, पावक इत्यादौ "एचोऽयवायावः" ( पा० सू० ६।१।७८ ) इत्यादीनामप्रवृत्तिप्रसङ्गात्। अनेन तु वार्यते। शब्दाधिकारमाश्रित्य भावाभावयोरुभयोरप्यतिदेशोऽयमिति स्वीकारात्।

दूषयित्वेति। "अङ्गस्य" ( पा० सू० ६।४।१ ) इति सूत्रे भाष्ये इति शेषः। एतदसिध्यैव दूषयित्वेत्यर्थः। विस्तरस्त्वन्यत्र द्रष्टव्यः। अनेन तु वार्यत इति। स्थानिनि सति यद्भवति

न च एवमपि लोमनी अत्र, सामनी अत्र "ईदूदेद्द्विवचनमिति" प्रगृह्यसञ्ज्ञा न स्यात्, अत्र अल्त्वव्याप्यधर्मः औङ्त्वम् तद्धर्मावच्छिन्ना स्थानिता औकारनिष्ठा तन्निरूपितादेशता ईकारनिष्ठा, तद्धर्मिकारोपः, 'ईकारः द्विवचनत्ववान् भवतु' इत्याकारकः, तत्र प्रकारीभूतो धर्मः द्विवचनत्वं तेन साक्षादवच्छिन्नोद्देश्यताकप्रगृह्यसंज्ञाविधौ स्थानिवत्वनिषेधात् प्रगृह्यसञ्ज्ञा न स्यादिति वाच्यम् "अल्त्वव्याप्यधर्मेण साक्षादवच्छिन्नस्थानिता इत्याद्यर्थकरणेनादोषात्" नपुंसकाच्चेत्यस्य औङ्मिन्नस्य क्लीवात् परस्य शी स्यात् इत्यर्थकरणेन स्थानितायाः साक्षात् परत्वेनावच्छिन्नत्वात्, अल्त्वव्याप्यधर्मेण साक्षादवच्छिन्ना या स्थानिता तन्निरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्नोद्देश्यताकविधौ न स्थानिवदित्यर्थः।

तेनेति। अलाश्रयविधावपि स्थानिवद्भावस्वीकारेण। भाष्ये इति। तथाहि—"अङ्गस्य ६।४।१" आकुतोऽयमधिकारः। आसप्तमाध्यायपरिसमाप्तेरङ्गाधिकारः। यदि तर्ह्यासप्तमाध्यायपरिसमाप्तेरङ्गाधिकारो "गुणो यङ्लुको" रिति यङ्लुक्ग्रहणं कर्तव्यम्। प्रागभ्यास-

आश्रयण किया है, यशादि आदेशावयव है, स्थान्यवयव नहीं हैं, अतः "अनल्विधौ" इससे स्थानिवद्भाव का निषेध नहीं होता। इसी अभिप्राय से न तु "स्थान्यलाश्रयः" यह लिखा गया। 'नतु-स्थान्यवय' इस प्रतीक को लेकर शब्दरत्नकार कहते हैं, स्थानिवद्भाव का निषेध न होने से स्थानिवत्वेन प्रत्ययत्व आता है। अग्रहीत इत्यादि में "ग्रहोऽलिटि" इससे इट् को दीर्घ होने से इट्त्व अल् मात्र धर्म नहीं है, अतः स्थानिवद्भाव से इट्त्व लाकर "इट ईटि" ( ८।२।२८ ) से सिच् लोप होता है व्याख्यानात्।

प्राधान्येन या अप्राधान्येन जिस किसी प्रकार अलाश्रयण रहने पर "अनल्विधौ" यह निषेध लगता है। अतः प्रपठ्य यहाँ पर अप्राधान्येन अलाश्रयण रहने पर भी अनल्विधौ निषेध लग जाने से स्थानिवद्भाव का अभाव हो जाने पर वलादि लक्षण इट् नहीं हुआ। तन्निषेध का अभिप्राय है स्थानिवद्भाव का निषेध होने से "अनचि च" ( ८।४।४७ ) से द्वित्व हो जायगा।

स्थान्यवयवाल्वृत्तिधर्मनिमित्तक कार्य रहने पर भी "अचः परस्मिन्पूर्वविधौ" १।१।५७ इससे स्थानिवद्भाव हो जाने से "वव्रश्च" के वकार को सम्प्रसारण नहीं होता इसका तात्पर्य है, व्रश्च् धातु से लिट्, द्वित्व हो जाने पर "हलादिशेषः" को बाधकर सम्प्रसारण पूर्वरूप "उरत्" से अत्व, रपरत्व, आदि हल्, शेष रहने पर "उरत्" से जो अत्व का विधान किया गया है, उसमें स्थानि-

"न पदान्त" (पा० सू० १।१।५८) इति सूत्रे यलोपदीर्घादिग्रहणं चेह लिङ्गम् । अत एव गणयतीत्यादौ न वृद्धिः । स्थानिनि सत्यभवन्त्यास्तस्या आदेशेऽप्यभावातिदेशात् । उक्तं च "काममतिदिश्यतां वा सच्चासच्चापि नेह भारोऽस्ति" इति ।

---

तदादेशेऽपि भवति तत्र सति यन्न भवति तदादेशेऽपि न भवतीत्यर्थात् । अजादेशोऽच्कार्यं लभते न लभते चेति वाच्योऽर्थः, तत्रोपपत्तिमाह—शब्देति । पूर्वसूत्रे स्थानिवत्पदस्य तद्वत्कार्यं लभत इत्येतन्मात्रार्थकस्येहोभयार्थकत्वात्तदाश्रयणमिति भावः । यलोपदीर्घादीति । यलोपदीर्घादी येषामित्यर्थः । यलोपादयो दीर्घादयश्चेति यावत् । तेन स्वरा-

---

विकारेभ्यः पुनरङ्गाधिकारे सति प्रत्ययलक्षणेन सिद्धम् । अस्तु तर्हि प्रागभ्यासविकारेभ्योऽङ्गाधिकारः । यदि प्रागभ्यासविकारेभ्योऽङ्गाधिकारो वव्रश्च वकारस्य सम्प्रसारणं प्राप्नोति ।

आसप्तमाध्यायपरिसमाप्तेः पुनरङ्गाधिकारे सत्युरदत्वस्य स्थानिवद्भावान्न सम्प्रसारणे सम्प्रसारणमिति प्रतिषेधः सिद्धो भवति । सचेदानीमपरिहारो भवति, यत्तदुक्तमङ्गान्यत्वाच्च सिद्धमिति' अस्तु तर्ह्यासप्तमाध्यायपरिसमाप्तेरङ्गाधिकारः । ननु चोक्तं "गुणो यङ् लुकोरिति यङ् लुग्ग्रहणं कर्तव्यमिति" क्रियते न्यास एव "अयं भावः यद्यपि अत्र लोपोऽभ्यासस्य ७।४।५८ इत्यतः प्रागङ्गाधिकारस्वीकारे "न लुमताङ्गस्येति" प्रतिषेधाभावेन "प्रत्ययलोपे प्रत्ययलक्षणम्" इति सहकारेण गुणसिद्धेः "गुणो यङ्लुकोः" इत्यत्र लुग्ग्रहणाभावप्रयुक्तलाघवतास्ति तथापि वव्रश्चेत्यादि लक्ष्याणां साधुत्वार्थमासप्तमपरिसमाप्तेरङ्गाधिकारः स्वीकृतः भाष्यकारेण "गुणो यङ्लुको"रिति न्यासस्तु वर्तते एव ।

न भवतीति । उक्तार्थस्वीकारे ण्यन्तदिव्धातोः क्विपि णिलोपे च कृते "च्छ्वोः"

---

वद्भाव से सम्प्रसारण आजानेसे "न सम्प्रसारणे सम्प्रसारणम्" ६।१।३७ से निषेध हो जाने के कारण वकार को सम्प्रसारण नहीं होता । यदि कहो कि "उरत्" से जो अत्व हुआ है, वह परनिमित्तक नहीं है । तो नहीं कह सकते अङ्गाक्षिप्त प्रत्यय परे रहते ही अत्व का विधान होने से । वव्रश्च यह प्रयोग असिद्ध होने के कारण "अङ्गस्य" इस सूत्र के भाष्य में "प्रागभ्यासविकारेभ्योऽङ्गाधिकारः" अर्थात् "अत्र लोपोऽभ्यासस्य" ७।४।५८ इसके पूर्व अङ्गाधिकार है, इस पक्ष को दूषित करके सप्तमाध्यायपर्यन्त अङ्गाधिकार है, इस पक्ष को स्वीकार किया । यह कैयटादि ग्रन्थों में विस्तरपूर्वक वर्णित है ।

"स्थानिवदादेशोऽनल्विधौ" यह सूत्र भावातिदेश करता है, अर्थात् स्थानी के रहने पर जो कार्य होता है, वह आदेश के रहने पर भी होगा । जैसे "सुद्ध्युपास्यः" इत्यादि में स्थानी के रहने पर द्वित्व निषेध प्राप्त होता है, वही द्वित्वनिषेध यणादेश हो जानेपर भी प्राप्त होगा । अभावातिदेश न करने से अर्थात् आदेश प्रयुक्त कार्यों का निषेध न होने से "नायकः" "पावकः" इत्यादि में आदेश प्रयुक्त कार्य "एचोऽयवायावः" आय्, आव् होते हैं । "अचः परस्मिन्पूर्वविधौ" यह अभावातिदेश भी करता है" अर्थात् स्थानी के रहने पर जो नहीं होता, वह आदेश हो जाने पर भी नहीं होगा । स्कार्थ अजादेश का फलितार्थ है, वाच्यार्थ है—अच् के स्थान पर ही जो आदेश वह अच् कार्य को प्राप्त नहीं करता, अर्थात् आदेश प्रयुक्त कार्य नहीं होता । "अचः परस्मिन्पूर्वविधौ" में स्थानिवत् का शब्दाधिकार करते हैं । शब्दाधिकार का अभिप्राय इस प्रकार होता है, निश्चित अर्थ का परित्याग कर शब्दमात्र का सम्बन्ध जहाँ पर होता है, वहाँ पर शब्दाधिकार माना जाता है । जहाँ पर वह स्मार्थ सम्बद्ध का ही सम्बन्ध होता है, वहाँ पर अर्थाधिकार माना जाता है ।

स्यादेतत्। पूर्वत्वस्य सावधित्वेन सन्निहितस्यैव अवधित्वमुचितम्। सन्निहितं-चेह त्रयं स्थानी, आदेशो, निमित्तं च। तत्र न तावत्स्थानी अवधिस्तस्यादेशेना-पहारात्। नाप्यादेशनिमित्ते, वैयाकरण इत्यत्र ऐकारस्यायादेशापत्तरित्या-शङ्क्याह—अचः पूर्वत्वेन दृष्टस्येति। पूर्वत्वमुपलक्षणं न तु विशेषणमिति भावः। एतेन "अचः पूर्वत्वविज्ञानादैचोः सिद्धम्" इति वार्तिकं व्याख्यातम्॥

---

दीनामपि सङ्ग्रहः। यलोपादीत्येव सिद्धे एवमुक्तिर्वैचित्र्याय। न हि यलोपादिविषये भावातिदेशप्रसक्तिरिति भावः। न वृद्धिरिति। "अत उपधायाः" (पा० सू० ७।२।११६) इति वृद्धिर्नेत्यर्थः। "क्विलुगुपधात्व"—(वा०) इति निषेधस्तूपधात्वनिमित्तकप्रत्यय-विधावेव नान्यत्रेति भाष्ये स्पष्टम्। अयादेशापत्तेरिति। यणः स्थानिवत्त्वेनाच्त्वादिति भावः। पूर्वत्वं चात्र व्यवहिताव्यवहितसाधारणं, स्वरे निषेधात्। अतो यण्निमित्ताकारापेक्षयाऽ-प्यैकारस्य पूर्वत्वमस्तीति तत्पक्षेऽप्ययं दोष इति भावः। आदेशेनापहारात्कथं स्थानिनोऽ-वधित्वमित्यत आह—उपलक्षणमिति।

---

६।४।१९ इत्यूठि एकारस्यायादेशो न स्यात्। णिचि सत्यभवतस्तस्य णिलोपेऽप्यभावाति-देशप्रसङ्गादिति चेन्न आदेशे स्थानिवृत्तिसम्भावनायां यत्कार्यं प्राप्नोति तद्भवति यन्न प्राप्नोति तन्न भवतीत्यर्थेनादोषात्। न वृद्धिरिति। अकारे सति गकाराकारस्योपधात्वाभावेना-भवन्त्या वृद्धेरकारलोपेऽपि अभावातिदेशेन "अत उपधायाः" इति वृद्धिर्न भवति, एवञ्च-गणयतीति फलमभावातिदेशस्य। भावातिदेशफलन्तु "निगाल्यते" तत्र णिचि सति लत्वं

---

तथा च शब्दाधिकार होने से भावातिदेश तथा अभावातिदेश दोनों अतिदेशों को करता है। तथा च स्थानिनिमित्तक होता है, आदेशनिमित्तक नहीं होता। भावातिदेश का उदाहरण है। निगाल्यते, अभावातिदेश का उदाहरण है गणयति यह संस्कृत टीका बालप्रकाशिका में स्पष्ट है। शब्दाधिकार मानने में शब्दरत्नकार युक्ति देते हैं, पूर्वसूत्र में स्थानिवत् का अर्थ "तद्वत् कार्यं लभते" मात्र था, अर्थात् स्थानिवत् कार्य को प्राप्त करता है। "अचः परस्मिन् पूर्वविधौ" में "स्थानिप्रयुक्तं लभते" भावाभावातिदेश होने से शब्दाधिकाराश्रयण करते हैं। "अचः परस्मिन्पूर्वविधौ" अभावातिदेश करता है इसमें प्रमाण है, 'न पदान्त' सूत्र में यलोप दीर्घादि ग्रहण। अतः गणयति इसमें "अत उपधायाः" ७।२।११६ इससे वृद्धि नहीं होती स्थानी अकार के रहने पर उपधा का अभाव होने से वृद्धि नहीं होती, वह अकार लोप हो जाने पर भी नहीं होगी, अभावातिदेश होने से। भाष्यकार ने स्पष्ट कहा कि अभावातिदेश स्वीकार करने पर भी अधिक सूत्र पठन रूप भाराभाव होने से यह सूत्र भावातिदेशाभावातिदेश उभय करता है। यलोपदीर्घादि का भाव रत्नकार लिखते हैं, "यलोप-दीर्घो आदी येषाम्" यह विग्रह होने से। इसका भाव होता है यलोपादि, दीर्घादि, क्योंकि कृतैक-शेष आदि द्वन्द्वान्त में श्रूयमाण है। बहुव्रीहि समास होने से स्वरादि का भी सङ्ग्रह हो जायगा। यलोपादि कहने से भी स्वरादि का ग्रहण हो जायगा इस प्रकार कथन वैचित्र्यप्रदर्शनार्थ है, वैचित्र्य यही है कि स्थल विशेष पर स्पष्ट बोधनार्थ अधिक शब्द का भी प्रयोग होता है। यलोपादि के विषय में भावातिदेश की प्राप्ति ही नहीं है। अतिदेश का अभिप्राय होता है, आरोप, 'अतस्मिन् तत्सत्ता'।

यदि कहो कि "गणयति" यहाँ पर उपधात्व प्रयुक्त कार्य रहने से "क्विलुगुपधात्वचङ्पर निर्ह्रासकुत्वेषूपसंख्यानम्" इस वार्तिक के बल से स्थानिवद्भाव हो जायगा तो नहीं कह सकते, क्योंकि यह वार्तिक उपधात्व निमित्तक प्रत्यय विधि में ही स्थानिवद्भाव का निषेध करती है।

"न पदान्त" ( पा० सू० १।१।५८ ) पदस्य चरमावयव इति । वृक्षं वेतीति वृक्षवीः । वातीति वृक्षवाः तमाचष्टे वृक्षव् । विच् । इह "लोपो व्योः—" ( पा० सू० ६।१।६६ ) इति वलोपो न । स्थानिवत्त्वात् न च "न पदान्त—" ( पा० सू० १।१।५८ ) इति निषेधः । इह विधेयस्य लोपस्य पदानवयवत्वात् । पदान्तस्य

---

अन्तःशब्दस्य चरमावयववाचित्वं विधिशब्दो भावसाधनः कर्मषष्ठ्या समासेन पदचरमावयवे कर्त्तव्ये इत्येवं व्याख्याने फलमाह—वृक्षमिति । विजिति । क्विपि सूठ् स्यादिति भावः । स्थानिवत्त्वादिति । णिलोपस्य टिलोपस्य वा स्थानिवत्त्वादित्यर्थः । नन्वस्य

---

भवति, तल्लत्वं णिलोपेऽपि । व्याख्यातमिति । पूर्वत्वस्योपलक्षणतया स्थानिभूताज्निरूपितस्यैव पूर्वत्वस्य ग्रहणेन "वैयाकरणः" सौवश्विः, इत्यत्र स्थानिभूताज्निरूपितपूर्वत्वाभावेन ऐकारौकारयोः श्रवणं सिद्धमित्यर्थकं वार्तिकं सङ्गतमित्यर्थः ।

परममूले नपदान्तेति । नन्वस्मिन्सूत्रे द्विर्वचनादिग्रहणं न कर्तव्यं द्विर्वचनादीनां त्रैपादिकत्वेनासिद्धत्वात्तेषु कर्त्तव्येषु स्थानिवद्भावस्याप्राप्तिरिति चेन्न तद्ग्रहणेन वतिघटितातिरिक्तातिदेशानां त्रिपाद्यामपि प्रवृत्तिज्ञापनेन चारितार्थ्यसम्भवात् ।

तथाच "स्थानिवदादेश इत्यस्य" अन्तादिवच्च इत्यस्य "व्यपदेशिवदेकस्मिन् इत्यस्य च त्रिपाद्यामपि प्रवृत्त्या_रामः, अमी, अचैषीदित्यादीनां सिद्धिः ।

---

अन्यत्र नहीं यह भाष्यकार ने स्पष्ट कहा है, तथाहि "ननु चैतदप्युपधात्वविधिं प्रति न स्थानिवदित्येव सिद्धम्" विशेषत एतद् वक्तव्यम् क्व प्रत्ययविधाविति इह माभूत् पटयति, लघयति ।

"अचः परस्मिन्पूर्वविधौ" में पूर्व शब्द सावधिक है अतः सन्निहित में ही अवधित्व उचित है । सन्निहित तीन है, स्थानी, आदेश, निमित्त । स्थानी अवधि नहीं हो सकता, आदेश से अपहृत हो जाने से । आदेश निमित्त भी अवधि नहीं हो सकते, "वैयाकरणः" यहाँ पर ऐकार को आयादेश होने लगेगा, इसी आशङ्का से कहा गया अच् से पूर्वत्वेन दृष्ट को विधिकर्तव्य हो तो । पूर्वत्व उपलक्षण होने से, स्थानिभूत अच् निरूपित पूर्वत्व का ग्रहण होता है । "वैयाकरणः" यहाँ पर स्थानिभूत अच् निरूपित पूर्वत्वाभाव होने से ऐकार का श्रवण होता है, एतत्तात्पर्यक "अचः पूर्वत्वविज्ञानादैचोः सिद्धम्" यह वार्तिक भी सङ्गत हो जाता है । वैयाकरणः यहाँ पर यण् में स्थानिवद्भाव से अच्त्व लाकर आयादेश होने लगेगा । पूर्वत्व यहाँ पर व्यवहित अव्यवहित साधारण लिया जाता है, स्वर में स्थानिवद्भाव का निषेध होने से । अतः यण् निमित्त आकारापेक्षया ऐकार में पूर्वत्व है इसलिए निमित्त को अवधि मानने पर भी यही दोष होगा । आदेश से अपहृत हो जाने पर स्थानी में कैसे अवधित्व है इस आशङ्का को दूर करने के लिये कहा पूर्वत्वम् उपलक्षणम्, न तु विशेषणम् । "अविद्यमानं सद् व्यावर्तकमुपलक्षणम् यथा काकवन्तो देवदत्तस्य गृहाः । विद्यमानं सद् व्यावर्तकं विशेषणं यथा रूपवान् घटः ।"

"विधानं विधिः" विपूर्वक धा धातु से भाव में "उपसर्गे घोः कि" इससे कि प्रत्यय करने पर, कर्म में प्रत्ययाभाव होने से कर्म अनुक्त हो जायगा तथा च "कर्तृकर्मणोः कृति" २।३।६५ से पदान्त शब्द से षष्ठी हो जायगी पश्चात् 'षष्ठी' सूत्र से समास हो जाने पर पदान्तविधि होता है । अन्त शब्द चरमावयव वाचक है, अतः भाव साधनपक्ष में अर्थ होता है, पदचरमावयव कर्त्तव्य में स्थानिवद्भाव नहीं होता । 'वृक्षं वेतीति वृक्षवीः', अथवा वृक्षं वातीति वृक्षवाः यहाँ पर क्विप् का सर्वापहारीलोप होता है, अन्यतर से आचष्टे अर्थ में णिच् प्रत्यय कर देने पर वृक्षविधातु से विच् प्रत्यय करने पर इट् का आगम प्राप्त रहेगा किन्तु "नेड्वशिकृति" से निषेध होने से इट् का अभाव रहेगा, णिलोप,

स्थाने विधौ नेति व्याख्याने तु नेदं सिध्येत् । "सुबन्ताण्णिच्" इति हरदत्तादि-मतेऽन्तर्वर्तिसुपा पदत्वात् । न च "इष्ठवत्" इत्यतिदिष्टेन णिचि भत्वेन पदत्वबाधः, णेर्लुप्तत्वात् । न च प्रत्ययलक्षणम् । वर्णाश्रयत्वादिति भावः । द्विर्वचनादौ चेति ।

---

पदत्वाभावात्कुतोऽसिद्धिरत आह—सुबन्तादिति । अन्तर्वर्तिसुब्निमित्तकपदत्वस्यैकदेश-विकृतन्यायेन वान्तेऽपि सत्त्वमिति भावः । प्रत्ययलक्षणमिति । स्थानिवत्त्वेन प्रत्ययनिमित्त-कार्यमित्यर्थः । वर्णाश्रयत्वादिति । "णाविष्ठवद्-" इत्यनेन "यचि भम्" इति शास्त्रस्यैवाति-देशस्तच्च वर्णाश्रयम्, एवं च स्थानिवत्त्वस्याप्रसक्तिः । कार्यातिदेशेऽपि यन्निमित्तवैकल्य-

---

नेदं सिध्येदिति । विधीयते इति विधिः कर्मणि प्रत्यये सति कर्मण उक्तत्वात् षष्ठ्य-प्राप्तात: 'स्थाने' इत्यस्याध्याहारं कृत्वा षष्ठीञ्च विधाय "पदान्तस्य स्थाने विधिकर्तव्ये स्थानिवद्भावो न भवति" इत्यर्थस्वीकारे वृक्षं वातीति विग्रहे क्विपि सर्वापहारिलोपं तमाचष्टे वृक्षवि विच्यनुबन्धलोपे "वेरपृक्तस्य" इत्यनेन वकारलोपे "णेरनिटि" इति सूत्रेण णिलोपे कृते वृक्षव् इत्यत्रोक्तार्थस्वीकारे लोपस्य विधीयमानत्वात् स्थानिवद्भावनिषेधेन वकारस्य लोपः स्यात् । विधानं विधिरिति भावे प्रत्यये तु कर्मणि षष्ठी भविष्यति तथाच पदचरमावयवे कर्त्तव्ये स्थानिवद्भावो न भवति । अत्र चरमावयवकर्तव्यता नास्ति किन्तु लोपकर्तव्यतास्ति तथा चानेन स्थानिवद्भावनिषेधाद्वलोपो न ।

ननु मनोरमायां न च प्रत्ययलक्षणमित्याशङ्कावार्तिककारमते वा भाष्यकारमते इति चेन्न वार्तिककारसिद्धान्ते प्रत्ययलक्षणसूत्रस्याप्राधान्येनालाश्रयणे विध्यर्थतया समाधान-ग्रन्थविरोधात् । भाष्यकारसिद्धान्ते तस्यान्यार्थकतया स्थानिवद्भावस्यैवापत्तिविषयत्वात् ।

अतो नेदं युक्तमिति शंकां निराकर्तुं प्रत्ययलक्षणपदमन्यार्थकमित्याशयेनोक्तं स्थानिव-त्वेनेत्यदि ।

---

विच् का सर्वापहारी लोप करने पर "वृक्षव्" में "अचः परस्मिन् पूर्वविधौ" से णिलोप अथवा टिलोप का स्थानिवद्भाव हो जाने पर "लोपोव्योर्वलि" से वकार का लोप नहीं होता। पदचरमा-वयवकर्त्तव्यता में "नपदान्त" सूत्र से स्थानिवद्भाव का निषेध होने से। प्रकृत में पदचरमावयव-कर्त्तव्यता नहीं है, अपितु अभावकर्त्तव्यता है।

"विधीयते इति विधिः" कर्मसाधन में कर्मोक्त हो जाने से कर्म में षष्ठी नहीं होती, अतः शेष में षष्ठी करके "स्थाने" का अध्याहार करने पर अर्थ होगा, पदान्त के स्थान पर विधि कर्तव्य रहने पर स्थानिवद्भाव नहीं होता। तथा च वृक्षव् यहाँ पर पदान्त के स्थान पर लोप विधीयमान होने से स्थानिवद्भाव का निषेध हो जाने से वकार का लोप हो जायगा। अतः भाव साधन ही यहाँ पर सिद्धान्तपक्ष माना जाता है।

"पदचरमावयवे कर्तव्ये" का लाभ किस तरह होता है, इसको शब्दरत्नकार ने स्पष्ट कर दिया, उन्होंने लिखा है, अन्त शब्द चरमावयववाची है, विधिशब्द भाव साधन है, कर्म में षष्ठी करके समास करने पर उक्तार्थ हो जायगा। वृक्षवि, धातु से यदि क्विप् प्रत्यय करेंगे तो ऊठ् होने लगेगा, अतः विच् प्रत्यय करके, उदाहरण दिया गया। यदि कहो कि कर्मसाधन में भी दोष नहीं है, क्योंकि प्रातिपदिक से णिच् होता है, पदान्त के स्थान पर विधेय न होने से स्थानिवद्भाव का निषेध नहीं होगा, स्थानिवद्भाव हो जायगा वकार का लोप नहीं होगा, तो नहीं कह सकते, क्योंकि हरदत्त के मत से द्वितीयान्त से णिच् प्रत्यय होने से अन्तर्वर्ती सुप्निमित्तक पदत्व एकदेशविकृत न्याय से वान्त में रहने पर पदान्त के स्थान पर विधीयमानता स्पष्ट है।

यलोपादय आदिशब्दग्राह्याः। "वरे" इति तु वरे योऽजादेशः स न स्थानिवदिति व्याख्येयम्। सहविवक्षाऽभावेऽपि निपाताद् द्वन्द्वः सप्तम्यलुक् च। अथोदाहरणानि,

---

प्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तातिरिक्तसर्वनिमित्तकत्वमतिदेशस्यापीत्यङ्गीकाराद्वर्णाश्रयत्वाक्षतिः। प्रत्ययलक्षणसूत्रं तु भाष्यकृता प्रत्ययस्य यत्रासाधारणं रूपमाश्रीयते तत्रैव प्रत्ययलक्षणमिति नियमार्थत्वेन स्थापितं न स्वप्राधान्येनालाश्रयणे विध्यर्थमिति भावः। न च "अचः परस्मिन्" (पा० सू० १।१।५७) इति णिलोपस्य स्थानिवत्त्वेन भत्वं सुलभमिति वाच्यम्। णिलोपस्येव टिलोपस्यापि स्थानिवत्त्वापत्तौ वान्ते भत्वस्य दुर्लभत्वेन तत्र पदत्वानिवृत्तेः। "प्रकल्प्य चापवादविषयम्" इति न्यायेन निषेधविषये तत्प्रतिबन्धाय स्थानि-

---

शास्त्रस्यैवेति। इष्ठनि प्रत्यये कृते यच्छास्त्रं प्रकृतेः कार्यविधायकत्वेन प्रवर्तते तदिहापीति यतोहि शास्त्रातिदेशे प्रत्यासत्त्या शास्त्रस्यैवातिदेशो भवति।

यदि च प्राधान्यात् कार्यातिदेश एवाश्रीयते तथापि वर्णाश्रयता भसञ्ज्ञां न विमुञ्चतीत्याशयेनोक्तं कार्यातिदेशेऽपीत्यादि।

यन्निमित्तेति। यस्य निमित्तस्याभावप्रयोज्या, उपदेशस्य प्रधानशास्त्रस्याप्रवृत्तिस्तन्निमित्तातिरिक्तानि यानि यानि तत्र निमित्तानि तन्निमित्तकत्वमतिदेशशास्त्रस्यापीत्यर्थः। वर्णाश्रयत्वाक्षतिरिति। ननु वृक्षव् इत्यत्र णिलोपे स्वादित्वाजादित्वोभयाभाव-

---

यदि आशङ्का करो कि इष्ठवत् अतिदेश होने से णिच् परे रहते भत्वेन पदत्व का बाध हो जायगा तो नहीं कह सकते, क्योंकि लोप हो जाने से णित्वाभाव है। "प्रत्ययलोपे प्रत्ययलक्षणम्" से णित्व नहीं आ सकता, क्योंकि भसंज्ञा में अजादि निमित्त होने से वर्णनिमित्तकत्व है, अतः "वर्णाश्रये नास्ति प्रत्ययलक्षणम्" निषेध लग जायगा।

"न च प्रत्ययलक्षणम् वर्णाश्रयत्वात्" इसका अभिप्राय शब्दरत्नकार लिखते हैं। "प्रत्ययलोपे प्रत्यय लक्षणम्" यह सूत्र नियमार्थ है, सिद्ध रहने पर नियम होता है, 'स्थानिवत्' १।१।५६ इस सूत्र से सिद्ध रहा "प्रत्ययलोपे प्रत्ययलक्षणम्" नियमार्थ होता है, नियमाकार है। "प्रत्यय का जहाँ पर असाधारण रूपाश्रयग हो वहीं पर "प्रत्ययलक्षणम्" होता है। इस कारण "सुदृषत्प्रासादः" यहाँ पर स्थानिवद्भावेन असन्तत्व लाकर "अत्वसन्तस्य" से दीर्घ नहीं होता, क्योंकि असन्तत्व प्रत्ययाप्रत्ययोभय साधारण वृत्ति है।

यदि कहो कि अल्विधि में जहाँ पर अप्राधान्येनालाश्रयण है, जैसे "अतृणेट्" यहाँ पर "तृणह इम्" इस सूत्र से हलादिपित् सार्वधातुक परे रहते इम् का आगम होता है, इसके लिये "प्रत्ययलोपे प्रत्ययलक्षणम्" आवश्यक है तो नहीं कह सकते, स्थानिवत् सूत्र को नियामकत्व सिद्ध करने के लिये, नियम्यस्थानिवत् सूत्रमात्र की विषयता आवश्यक होने से "प्रत्ययलोपे प्रत्यय लक्षणम्" में "अनल्विधौ" की अनुवृत्ति आवश्यक होने पर हलादित्व को अल्त्व व्याप्यधर्म घटित होने से प्रत्ययलक्षण की अप्रवृत्ति होगी। अतः भाष्यकार ने तृणहानि इत्यादि में इम् का आगम न हो, अतृणेट् में इम् का आगम हो, इसलिए "तृणह इम्" ७।३।९२ इस सूत्र में हल् पद का अनुवर्तन न करके "नाभ्यस्तस्य" सूत्र से "न" तथा "अच्" का अनुवर्तन करके अजादिपरे रहते इमागम नहीं होता, यह निषेध हो जाने पर प्रयोगों का साधुत्व हो जायगा, इसके लिये प्रत्यय लक्षण आवश्यक नहीं है। यह कहा। अतः शब्दरत्नकार उक्त मनोरमा का अभिप्राय कहते हैं, यदि कहो कि स्थानिवद्भाव से प्रत्यय निमित्तकत्व आ जायगा तो नहीं कह सकते, क्योंकि "णाविष्ठवत्" इससे "यचिभम्" शास्त्र का ही अतिदेश होगा वह वर्णाश्रय है, तथा च अनल्विधौ निषेध लग जायगा। कार्यातिदेशपक्ष

पदान्ते—कानि सन्ति, कौ स्तः। द्विर्वचने—सुद्ध्युपास्यः। वरे—यायावरः। "यश्च यङ" इति वरच्। अतो लोपः स च "आतो लोप इटि च" (पा० सू०

६।४।६४) प्रवृत्तेश्च। हरदत्तादिमते त्वस्यनेनाहचिर्बोधितः। तद्बीजं स्वयं पक्षो न सूत्रवार्तिक-भाष्यसंमत इति प्रातिपदिकात्तदुत्पत्तौ पदत्वाभाव इति। चरमावयवे कार्यं इति व्याख्याने फलं तु एषो यन् हसति इत्यादौ यणः स्थानिवत्त्वाद् "एतत्तदोः" (पा० सू० ६।१।१३२) इति सुलोपाभावः। इणः शतरि यन्निति रूपम्। उत्वे च न स्थानिवद्, अनेन निषेधादिति तत्त्वम्। कानि सन्तीति। वाक्यसंस्कारपक्ष एतत्। तत्र पक्षे पूर्वोपस्थितनिमित्तकत्वरूपान्तर-

प्रयुक्ता "यचि भम्" इति शास्त्रस्याप्रवृत्तिरिति तदतिरिक्तनिमित्तकत्वाभावेन कथं-वर्णाश्रयत्वमतिदेशस्येति चेत् ? न यन्निमित्तवैकल्येनेत्यत्र निमित्तपदेन सादृश्यप्रति-योगितावच्छेदकधर्मव्यापकधर्मस्य ग्रहणेनादोषात्। तथाहि णिः इष्ठवद्भवति इत्यति-देशीयसादृश्यप्रतियोगितावच्छेदकीभूतो य इष्ठत्वरूपो धर्मस्तद्व्यापकीभूतोधर्मः स्वादित्व-रूपो न त्वजादित्वरूपो "भूयिष्ठः" इत्यादौ व्यभिचारादिति यन्निमित्तपदेन स्वादित्वस्यैव ग्रहणेनाजादित्वस्य तदतिरिक्ततयातिदेशस्य तदपेक्षणेन वर्णाश्रयत्वमक्षतमिति न दोषः।

में भी यन्निमित्त = स्वादित्व निमित्तन्यूनता प्रयुक्त उपदेश शास्त्र = यचिभम् शास्त्र की अप्रवृत्ति है, तन्निमित्तातिरिक्त अजादित्वादि जितने निमित्त हैं, वे अतिदेश शास्त्र के भी होगें। प्रकृत में स्वादित्वा-तिरिक्त अजादित्व होने से कार्यातिदेशपक्ष में भी वर्णाश्रयता है, अनल्विधौ से स्थानिवद्भाव का निषेध हो जायगा।

वार्तिककार के मत में "प्रत्ययलोपे प्रत्ययलक्षणम्" की अप्राधान्येनालाश्रयण में प्रवृत्ति होती है, अर्थात् अल्विधि में भी प्रत्यय लक्षणार्थ इस सूत्र को स्वीकार करते हैं, अतृणेट् इत्यादि में कोई दोष नहीं है। यदि कहो कि "अचः परस्मिन्" इस सूत्र से णिलोप का स्थानिवद्भाव हो जाने पर वृक्षव् की भ संज्ञा हो जाने पर पदान्त के स्थान पर विधेय नहीं हैं, अतः स्थानिवद्भाव हो जाने पर वकार का लोप नहीं होगा, कर्मसाधनपक्ष में भी दोष नहीं है, तो नहीं कह सकते, णिलोप की तरह टिलोप का भी स्थानिवद्भाव होने पर वान्त में भत्व दुर्लभ होने से वान्त में पदत्व रहेगा, दूसरी बात अपवाद के विषय को छोड़कर उत्सर्गशास्त्र की प्रवृत्ति होती है, अतः "अचः परस्मिन्" इस बाध्यशास्त्रीयोद्दे-श्यतावच्छेदकावच्छिन्न में "नपदान्त" यह बाधकशास्त्रीयोद्देश्यतावच्छेदकाविच्छन्नातिरिक्तत्वेन संकोच हो जाने से "पदचरमावयवविधिविषयत्वावच्छिन्नातिरिक्तो यः परनिमित्ताजादेशः सः स्थानिवत्" यह अर्थ होगा वृक्षव् यहाँ पर णिलोप कर देने पर ही वलोप की प्राप्ति है, पद चरमावयवविधिविषय होने से, अतः स्थानिवद्भाव नहीं होगा। अर्थात् निषेध का विषय रहने पर निषेधका बाधक स्थानि-वद्भाव नहीं होगा। हरदत्तादि के मत से सुबन्त से णिच् होता है, भाष्य वार्तिककार के मत से तो प्रातिपदिक से णिच् की उत्पत्ति होती है, तथा च पदत्वाभाव होने से शब्दरत्नकार भावसाधन पक्ष का अन्य फल देते हैं, "एषो यन् हसति" यह, इण् धातु से शतृ प्रत्यय करने पर यन् का साधुत्व होता है, "एतत्तदोः" से सुलोप कर्त्तव्यता रहने पर स्थानिवद्भाव हो जाता है, क्योंकि पदचरमावयव कर्त्तव्यता नहीं है, अपितु अभाव कर्तव्यता है, अतः स्थानिवद्भाव का निषेध नहीं होता। "हशि च" से उत्वकर्त्तव्यता रहने पर स्थानिवद्भाव हो जाता है; विधि को यदि कर्म-साधन मानेगें, तो पदान्त के स्थान पर विधेय होने से सुका लोप होने लगेगा, अतः भाव साधन मानना चाहिये।

द्विर्वचनादि में आदि शब्द से यलोपादि का ग्रहण होगा। वरे का अर्थ होता है वरच्प्रत्यय परे

६।४।६४ ) इत्यालोपे कर्तव्ये न स्थानिवत् । यलोपे--याति: । यातेर्यङन्तात् क्विच् अतो लोपः । यलोपः अल्लोपस्य स्थानिवत्त्वादातो लोपः यलोपः । न च पुनरालोपः शङ्क्यः । चिणो लुङ्न्यायेनातो लोपस्यासिद्धत्वात्स्थानिवद्भावाच्च । स्वरे--

ह्रस्वमादायान्तरङ्गाणां पूर्वं प्रवृत्तेरिकारादेः स्थानिभूतादचः पूर्वत्वं द्रष्टव्यम् । एतन्मूलकमेव वाक्यसंस्कारपक्षे श्रुतवर्णक्रमेणैव लक्ष्यसंस्कार इति वदन्ति । न स्थानिवदिति । तेन आतो-लोपो नेति भावः । न च पूर्वमल्लोपस्ततो वलि लोप इति क्रमसत्त्वादकारेणार्द्धधातुकत्वा-घलाभात्कथमतिदेशेन तल्लाभः । सम्भावनामात्रेणापि तल्लाभस्य वरेग्रहणेन ज्ञापनात् । अस्ति चात्रापि यदि पूर्वं यलोपः स्यात्तदाऽकारेण प्रत्ययत्वं लब्धं स्यादिति सम्भावना । फलं तु यातिरित्यादिसिद्धिरिति दिक् । क्विजिति । "क्विब्वचौ च संज्ञायाम्" ( पा० सू० ३।३।१७४ ) इत्यनेन क्विन् तु न । "अप्रत्ययात्" ( पा० सू० ३।३।१०२ ) इत्यनेन बाधात् ।

अलुगिति । नन्वत्र समासे सति सप्तम्यालुका भवितव्यम् तत्कथं 'वरे' इति निर्देशोऽत-आह सप्तम्यलुक् च । श्रुतवर्णक्रमणेति । यस्य वर्णस्य पूर्वं श्रवणं तत्कार्यस्यान्तरङ्गत्वात् पूर्वप्रवृतिरिति क्रमेणेत्यर्थः ।

यायावर इति । अत्यर्थं यातीति विग्रहे 'धातोरेकाचः' इत्यादिना यङ्, द्विर्वचनम्, अभ्यासस्य ह्रस्वः "दीर्घोऽकितः" इति दीर्घस्ततो वरच्, अतो लोपे कृते "लोपो व्योर्वलि" इति यकारलोपः, अल्लोपस्य स्थानिवत्वमाश्रित्य, आतो लोपे प्राप्ते वरे योऽजादेशः स न स्थानिवदिति निषेधे सत्युक्तप्रयोगस्य सिद्धिः । बाधादिति । वासरूपोऽस्त्रियामिति सूत्रे

रहते जो अजादेश है उसका स्थानिवद्भाव नहीं होता । सहविवक्षा का अभाव रहने पर भी निपात-नाद् द्वन्द्व हो जायगा और सप्तमी का अलुक् भी हो जायगा ।

"न पदान्त" १।१।५८ इसके उदाहरण मनोरमाकार लिखते हैं । पदान्त का उदाहरण वाक्य संस्कार पक्ष में "कानि सन्ति कौ स्तः" है । वाक्य संस्कारपक्ष में पूर्वोपस्थिति निमित्तकत्व रूप अन्त-रङ्गत्व लेकर अन्तरङ्गों की पहले प्रवृत्ति होने से इकार में स्थानिभूत ( अकार रूप ) अच् से पूर्वत्वेन दृष्टत्व होने से यण् प्राप्त रहेगा, पदचरमावयव कर्त्तव्य होने से स्थानिवद्भाव का निषेध हो जायगा । वाक्य संस्कार पक्ष में श्रुतवर्ण क्रमानुसार लक्ष्यसिद्धि, अतरङ्गमूलक है । द्विवचन का उदाहरण है सुद्ध्युपास्यः द्वित्व कर्तव्य रहने पर स्थानिवद्भाव का निषेध हो जाने पर द्वित्व होता है । वरे का उदाहरण है "यायावरः या धातु से यङ् द्वित्व अभ्यास को ह्रस्व "दीर्घोऽकितः" से अभ्यास को दीर्घ 'यायाय' धातु से "यश्चयङः" इससे वरच् अनुबन्धलोप "अतोलोपः" से अकार का लोप "लोपो व्योर्वलि" से यकार का लोप "आतो लोप इटि च" इससे आकारलोप कर्त्तव्यता रहने पर स्थानि-वद्भाव का निषेध होता है, क्योंकि वरच् प्रत्यय परे रहते जो अजादेश है, उसका स्थानिवद्भाव नहीं होता । अतः आकार का लोप नहीं होगा । ननु पहले आकार का लोप हुआ है पश्चात् यकार का लोप हुआ है, तथा च अकार में आर्धधातुकत्वाभाव होने से कैसे स्थानिवद्भाव से आयेगा तो इसका समाधान करते हैं, सम्भावना मात्र से भी आर्धधातुकत्व का लाभ हो जायगा "सम्भावना का स्वरूप है "यदि पूर्वं यकार लोपः स्यात्तदाकारे प्रत्ययत्वं स्यात्तस्य चार्धधातुकसंज्ञा स्यात्" इसका फल है याति की सिद्धि होना । वरे ग्रहण से यह ज्ञापन होगा, अन्यथा वरे ग्रहण व्यर्थ हो जायगा ।

य लोप का उदाहरण है—याति । यङन्त या धातु से क्विच् "यायाय ति" इस स्थिति में "अतो लोपः" से अकार का लोप यकार का लोप अकार को स्थानिवद्भाव होने से आकार का लोप हो जायगा, यकार लोप कर्तव्यता में स्थानिवद्भाव का निषेध होने से "लोपोव्योर्वलि से यकार

चिकीर्षकः सनोऽतो लोपो "लिति" ( पा० सू० ६।१।१९३ ) इति ककारेकारस्य उदात्तत्वे कर्तव्ये न स्थानिवत्। सवर्णानुस्वारयोः—शिण्ढि[1]। दीर्घे–प्रतिदीव्ना।

---

न स्थानिवदिति। स्थानिवत्त्वे हि स्वराप्रवृत्तिरेव स्यात्। अकारस्य तु न, स्वविधौ स्थानिवत्त्वनिषेधात्। लित्त्वं तु कारक इत्यादौ सावकाशमिति भावः। शिण्ढीति। नन्वत्रानुस्वार-

---

अस्त्रियामित्यत्र स्त्रीशब्दः स्वर्यते, स्वरितत्वेनाधिकार्थस्य प्रतीतिर्भवति तथा चास्त्रियामिति स्त्र्यधिकारोक्तप्रत्ययातिरिक्तबोधकस्तेन चिकीर्षा, जिहीर्षेत्यादौ "स्त्रियां क्तिन्" इत्यस्य अप्रत्ययादित्यनेन, नित्यं बाधः। चिणोलुङ्न्यायेनेति। यथा अपाचितरामित्यत्र लक्ष्यभेदाल्लक्षणभेदमाश्रित्य आभीयत्वेन। "चिणो लुक्" इत्यस्यासिद्धत्वेन चिण्व्यवधानात् चिणोलुगिति सूत्रेण तराम् घटकतकारलुङ्न। तथैव यातीत्यत्रापि, आभीयत्वेनाकारलोपस्यासिद्धत्वेन यकारलोपो न। मूले सवर्णानुस्वारग्रहणस्य शिण्ढीत्युदाहरणन्तत्र शिपेर्लोटि तस्य "हेर्धिः" श्नम्, अल्लोपे, अनुस्वारे, ष्टुत्वजश्त्वपरसवर्णेषु, "झरोझरी"

---

का लोप हो जायगा। पुनः या घटक आकार के लोप की शङ्का नहीं करना चाहिये। क्योंकि जैसे अपाचितराम् यहाँ पर "चिणो लुक्" से त शब्द का लुक् हो जाने पर तराम् घटक तकार का लोप करनेपर लक्ष्य भेद से सूत्र भिन्न होने के कारण आभीयत्वेन पहला "चिणो लुक्" असिद्ध होने से तराम् घटक तकार का लोप नहीं होता। उसी प्रकार आभीयत्वेन प्रथम "आतो लोप इटि च" असिद्ध हो जायगा "आतोलोप इटि च" से आकार का लोप नहीं होगा। याति में "क्तिन्" का "अप्रत्ययात् से" बाध होने के कारण "क्तिच्क्तौ च सञ्ज्ञायाम्" से क्तिच् प्रत्यय होता है।

स्वर का उदाहरण है "चिकीर्षकः" चिकीर्ष धातु से ण्वुल् प्रत्यय अक आदेश "अतो लोपः" से अकार का लोप हो जायगा, लित् प्रत्यय से अव्यवहित पूर्व को उदात्त होता है, स्थानिवद्भाव का निषेध हो जाने पर, स्वरविधि में व्यञ्जन अविद्यमान की तरह हो जाने से ककारोत्तर ईकार को उदात्त होता है। स्थानिवद्भाव हो जाने पर ईकार को उदात्त नहीं होगा। अकार को स्थानिवद्भाव नहीं होगा, क्योंकि "स्वविधौ न स्थानिवत्" इससे निषेध हो जाने से। न च "लिति च" इति सूत्रारम्भ सामर्थ्य से स्थानिवद्भाव हो जायगा, तो नहीं कह सकते। 'कारकः' इत्यादि में चरितार्थ होने से।

---

१. शिण्ढीति—शिष्लृधातोः मध्यमपुरुषगतैकत्वविवक्षायां सिपि तस्य हौ "हुझल्भ्योर्हेर्धिरित्यनेन धौ कृते श्नमि "श्नसोरल्लोपः" इत्यनेनाकारलोपे "झलां जश् झशि" इत्यनेन षकारस्य डकारे ष्टुत्वे "झरोझरि सवर्णे इत्यनेन डकारलोपेऽनुस्वारे परसवर्णे।

ननु अल्लोपस्य "अचः परस्मिन्" इत्यनेन स्थानिवद्भावात् कथमनुस्वारपरसवर्णाविति चेन्न नपदान्तेत्यादिना निषेधात्।

न च अचः स्थाने यो लोपरूपादेशस्तस्मादनुस्वारस्य पूर्वत्वेनानुस्वारस्याचः पूर्वत्वं नास्ति किन्तु लोपात् पूर्वता विद्यतेऽतोऽचः परस्मिन् विधावित्यनेन स्थानिवद्भावो न स्यादिति वाच्यम् स्थानिवदादेशोऽनल्विधावित्यनेनानुस्वारेऽचः पूर्वत्वेन दृष्टस्वरूपमशास्त्रीयधर्ममादायाचः परस्मिन्पूर्वविधावित्यस्य प्रवृत्तौ स्थानिवद्भावेन स्थानिभूदचः पूर्वमनुस्वारेऽपि सत्वात्।

न चाशास्त्रीयधर्मस्यातिदेशो न भविष्यति स्थानिवदादेशोऽनल्विधावित्यनेनेति वाच्यम् सवर्णग्रहणेनाशास्त्रीयधर्मारोपस्यापि ज्ञापनादन्यथा सवर्णविधौ अनुस्वारस्याचः पूर्वत्वेन दृष्टत्वाभावात् स्थानिवद्भावाप्राप्तौ स्थानिवद्भावनिषेधार्थंसवर्णग्रहणं व्यर्थं सञ्ज्ञापयति, अशास्त्रीयधर्मस्याचः पूर्वत्वेन दृष्टत्वस्याप्यारोपो भवति।

 


स्यादिष्टादचः पूर्वत्वेन स्थानिवत्त्वाप्रवृत्तिः। नचास्मादेव ज्ञापकात्तस्याशास्त्रीयत्वेऽपि स्थानिवत्त्वेन तत्त्वम्। फलाभावात्। तद्घटितसन्निवेशापेक्षस्य ततः पूर्वत्वस्यातिदेश-

ति वा डकारलोपे पञ्चमीसमासेन स्थानिवत्त्वन्न, आदिष्टादचः पूर्वत्वात्। आदिष्टादच इति। ननु आदिष्टआदेशः, तथा चादेशाभिन्नादच इत्यर्थो लभ्यते। सचानुपपन्नः, अचोऽनादेशत्वादिति चेन्न आदिष्टादित्यस्य आदेशत्वेन बुद्धिविषयीभूतादादेशादिति यावदित्यर्थेनादोषात्। न चेति। ननु नकारवृत्तिस्थानिभूतादचः पूर्वत्वम् "स्थानिवदादेशः" इत्यनेन स्थानिवत्त्वादनुस्वारस्य स्थानिभूतादचः पूर्वत्वेन दृष्टत्वमक्षतम्। न च "स्थानिवदादेशः" इत्यस्य शास्त्रत्वात् प्रत्यासत्या शास्त्रीयधर्मातिदेश एव तत्प्रवृत्तिरुक्तधर्मश्च न शास्त्रीयः, मुखप्रविष्टशास्त्रकारीयसङ्केतविषयतावच्छेदकधर्मस्यैव शास्त्रीयत्वादिति वाच्यम् परसवर्णे निषेधसामर्थ्येनाशास्त्रीयत्वेऽपि तेनातिदेशस्य ज्ञापनादिति मनसि निधायाह न चेति। तत्त्वमिति। स्थानिभूतादचः पूर्वत्वेन दृष्टत्वमित्यर्थः।

सवर्णानुस्वार का उदाहरण है शिण्ढि। शिष्लृ धातु से मध्यमपुरुषगतैकत्व विवक्षा करने पर सिप् हो जायगा "सेर्ह्यपिच्च" इससे सि को 'हि' हो जायगा, "रुधादिभ्यःश्नम्" करके "मिदचोन्त्यात् परः" इस सूत्र सहकार से इकरोत्तर श्नम् अनुबन्धलोप "श्नसोरल्लोपः" इससे नकार घटक अकार का लोप हो जायगा हि को धि हो जायगा, "झलां जश् झशि" से ष् को ड् हो जायगा, ष्टुत्व हो जायगा। अनुस्वार कर्त्तव्यता में स्थानिवद्भाव का निषेध होने से अनुस्वार हो जायगा, परसवर्ण कर्त्तव्यता में स्थानिवद्भाव का निषेध होने से परसवर्ण हो जायगा। यहाँ पर आशङ्का होती है कि शिण्ढि सवर्ण विधि का उदाहरण नहीं हो सकता, क्योंकि "अचःपरस्मिन्पूर्वविधौ" यह स्थानिभूत अच् से पूर्वत्वेन दृष्ट को स्थानिवद्भाव करता है, यहाँ पर अनुस्वार अजादेश से तो पूर्वत्वेन दृष्ट है।

न चाशास्त्रीयधर्मारोपे न किञ्चित्फलमिति वाच्यम् समाद्येतिफलस्य जागरूकत्वात्। तथाहि सम्पूर्वकाद्धातोः णिचि क्त्वा प्रत्यये उपधावृद्धिप्राप्तौ पूर्वविप्रतिषेधेन णेर्लोपे स्थानिवद्भावेन णित्त्वमादाय उपधावृद्धौ ल्यपि "अदोजग्धिर्ल्यप्तिकिती"त्यनेन जग्ध्यादेशो न भवति आद् इत्यत्र स्थानिवदादेशोऽनल्विधाविति सूत्रेणाचः पूर्वत्वेन दृष्टत्वमादाय "अचः परस्मिन्विधावि"त्यनेन स्थानिवद्भावसत्त्वात्।

अत आह अनुस्वारपूर्विकाया अकारविशिष्टायाः रचनायाः अपेक्षा यस्मिन् असौ तद्घटित सन्निवेशापेक्षः तस्य स्थानिभूदचः पूर्वत्वस्यातिदेश सहस्रेणाप्यतिदेष्टुमशक्यात्वाच्चार्थात् अतिदेशसहस्रेणाप्यनुस्वारेऽचः पूर्वत्वदृष्टत्वन्नागमिष्यति। नचाविद्यमानस्यैवारोपो भवतीति वाच्यम् "भो भगो" इतिसूत्रस्थभाष्यरीत्यानल्विधौ इति निषेधाच्च तथाहि–अल्त्वव्याप्यधर्मावच्छिन्न स्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मनिमित्तके विधौ न स्थानिवत्।

अल्त्वव्याप्यधर्मः नत्वमिति तदवच्छिन्नो नकारो अल्त्वव्याप्यधर्मावच्छिन्नस्थानिता नकारनिष्ठा तन्निरूपितादेशतानुस्वारनिष्ठा तदाश्रयोऽनुस्वारः। [ अनुस्वारः धर्मी = विशेष्यः यस्मिन्नसौ ] अनुस्वारविशेष्यकः आरोपः "अनुस्वारः अचः पूर्वत्वेन दृष्टत्ववान् भवतु" अत्र प्रकारीभूतोऽचः पूर्वत्वेन दृष्टत्वम् तन्निमित्तकविधिः अचः परस्मिन्पूर्वविधौ इत्यनेनस्थानिवद्भावः तत्कर्त्तव्ये स्थानिवत्सूत्रेण स्थानिवद्भावो न भविष्यति।

अतः स्थानिवद्भावनिषेधार्थं सवर्णग्रहणे न युक्तमित्यभिप्रायः तत्र साक्षाद्धर्मावच्छिन्नोद्देश्यताकविधौ न स्थानिवत् इति निवेशेनादोषात्।

तथा च अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मेण साक्षाद्धर्मावच्छिन्नोद्देश्यताके विधौ न स्थानिवदित्यर्थो निष्पन्नः।

सहस्रेणाप्यतिदेष्टुमशक्यत्वाच्च । "ओभगो" (पा० सू० ८।३।१७) इति सूत्रस्थभाष्यरीत्या तस्य स्थानिभूताल्वृत्तिधर्मत्वेन "अनल्विधौ" इति निषेधाच्च । विशेषणतयाऽलाश्रयणाच्च । भाष्ये "पूर्वत्रासिद्धे" इत्यवष्टभ्य वरे-यलोप-स्वर-भिन्नानां द्विर्वचनादीनां ग्रहणस्यात्र प्रत्याख्यानेन तस्य च णत्वे प्रतिप्रसवेनात्र स्थानिवत्त्वेन परसवर्णाभावस्यैव लाभादिद-मुदाहरणं चिन्त्यम् । णत्वग्रहणे च प्रतिप्रसववार्तिके लक्षणप्रतिपदोक्तपरिभाषा नेत्युपपाद-यिष्यते ।

---

[ अत्राचः पूर्वत्वेन दृष्टत्वप्रकारीभूतधर्मेणाजादेशरूपोद्देश्यता साक्षाद्धर्मावच्छिन्ना नास्ति अतः स्थानिवद्भावो भविष्यतीत्यरुचेराह विशेषणतयालाश्रयणाच्च अर्थात् अल्मात्र-वृत्तिधर्मघटितधर्मनिमित्तके विधौ न स्थानिवदित्यर्थस्वीकारे न किञ्चिदपि दूषणमत्र अल्मात्र वृत्तिधर्मः अच्त्वम् तद्धर्मघटितधर्मः अचः पूर्वत्वेन दृष्टत्वम् तन्निमित्तकविधिः "अचः परस्मिन् पूर्वविधौ" इत्यनेन स्थानिवद्भावस्तत्कर्तव्ये "स्थानिवदादेशोऽनल्विधौ" इत्यनेन स्थानिवद्भावो न भविष्यति ।

नच स्थान्यवयवाल्मात्रवृत्तिधर्मघटितधर्मनिमित्तके विधौ न स्थानिवदित्यर्थस्यापेक्षा-विद्यते यद्यपि अचः पूर्वत्वेन दृष्टत्वमल्मात्रवृत्तिधर्मघटितधर्मोस्ति तथापि स्थान्यवयवाल्मात्र-वृत्तिधर्मघटित धर्मो नास्ति ।

अत्र तु स्थानी नकारस्तथाचानल्विधौ इत्यस्य प्रवृत्तिर्नभविष्यति अचः पूर्वत्वेन दृष्टत्वं स्थानिवत्सूत्रेणागमिष्यतीत्यरुचेराह पूर्वत्रासिद्धे इत्यादिः ।

अयं भावः त्रिपादिस्थे कार्ये कर्त्तव्ये स्थानिवद्भावो न भविष्यति इत्युक्त्वा वरेयलो-पस्वरभिन्नानां द्विर्वचनादीनां ग्रहणस्य प्रत्याख्यानं कृत्वा "पूर्वत्रासिद्धे" इत्यस्य बाधकत्वेन "तस्य दोषः संयोगादिलोपणत्वेषु" इति वार्तिकस्योपन्यासः कृतः तथा च प्रतिप्रसववार्ति-केण स्थानिवद्भावात् परसवर्णाभावस्यैव लाभादिदमुदाहरणं चिन्त्यम् अनयारीत्यापि व्याख्यानं कर्तुं शक्यते । ]

फलाभावादिति । अशास्त्रीयत्वेऽप्युक्तधर्मस्यातिदेशस्वीकारे फलाभावादित्यर्थः । फलाभावादशास्त्रीयस्याप्यादेशं स्वीकृत्य परसवर्णग्रहणं न कार्यमितिभावः । न च 'समाद्य' इत्यस्य सिद्धिरेव फलम् । अत्र सम् अद् इय इति स्थिते पूर्वविप्रतिषेधेनोपधावृद्धेः

---

पर अच् से पूर्वत्वेन दृष्ट नहीं है, अतः उक्त उदाहरण नहीं हो सकता, स्थानिवद्भाव की अप्रवृत्ति होने से यदि कहो कि परसवर्ण कर्तव्यता में स्थानिवद्भाव की प्राप्ति नहीं है, तो निषेध करने को "न पदान्त" सूत्र में सवर्ण ग्रहण क्यों किये, वह पड़ेगा व्यर्थ और ज्ञापन करेगा, शास्त्रकारीय सङ्केतितावच्छेदक जो अच्त्वादि उससे भिन्न अर्थात् अशास्त्रीय धर्म का भी अतिदेश होता है। अतः यहाँ पर "स्थानिवदादेशोऽनल्विधौ" से अचः पूर्वत्वेन दृष्टत्व का आरोप हो जायगा, तब इसका समाधान करते हैं, इसका कोई फल नहीं है, अतः अतिदेश नहीं होगा।

यदि कहो कि सम् पूर्वक अद् धातु से णिच् क्त्वा ल्यप् उपधा वृद्धि को बाधकर पूर्वविप्रतिषेधेन णि का लोप उपधावृद्धि "अदोजग्धिर्ल्यप्तिकिति" करके जग्धादेश प्राप्त रहता है स्थानिवद्भाव हो जाने से नहीं होता। यहाँपर स्थानिवद्भाव से अचः पूर्वत्वेन दृष्टत्व का आरोप होता है, एकदेश विकृतन्याय से आद् को अद् मान लेगें तो नहीं कह सकते, अधिक विकार होने से। अतः फलाभाव नहीं है, इस आशङ्का से दूसरा समाधान देते हैं, अच् घटित रचना विशेष की अपेक्षा है, जिसमें एतादृश जो "अचःपूर्वत्वेन दृष्टत्व" है वह, सहस्रों अतिदेशों द्वारा भी अशक्य है, इस पर आशङ्का करते हैं,

किं च "दीर्घादाचार्याणाम्" ( पा० सू० ८।४।५२ ) इत्युत्तरम् "अनुस्वारस्य ययि" ( पा० सू० ८।४।५८ ) "वा पदान्तस्य" ( पा० सू० ८।४।५९ ) "तोर्लि" ( पा० सू० ८।४। ६० ) "उदःस्था" ( पा० सू० ८।४।६१ ) "झयो हो–" ( पा० सू० ८।४।६२ ) "शश्छोऽटि" ( पा० सू० ८।४।६३ ) इति षट्सूत्रीपाठोत्तरं "झलां जश् झशि" ( पा० सू० ८।४।५३ ) "अभ्यासे चर्च" ( पा० सू० ८।४।५४ ) "खरि च" ( पा० सू० ८।४।५५ ) "वाऽवसाने" ( पा० सू० ८।४।५६ ) "अणोऽप्रगृह्यस्य" ( पा० सू० ८।४।५७ ) इति, पञ्चसूत्र्याः पाठ इति

---

पूर्वं णिलोपे ततस्तस्य स्थानिवत्त्वेन णित्वबुद्ध्या वृद्धौ कृतायामेकदेशविकृतन्यायेनाद्ग्रहणेन ग्रहणाज्जग्ध्यादेशस्य प्राप्तौ "अचः परस्मिन्" इति स्थानिवत्वमिष्यते, सचानादिष्टादचः पूर्वत्वस्यातिदेश एव घटते इति वाच्यम् णिलोपादन्तरङ्गत्वेनोपधावृत्तेरनादिष्टादचः पूर्वत्वस्य सुलभत्वात् । "सन्वल्लघुनि" इतिसूत्रे "प्रत्याहारग्रहणेन" वृद्धेर्लोपो बलीयान् "इति तु यत्रैकस्थानित्वं वृद्धिलोपयोस्तद्विषयम्" । नन्वसत एव धर्मस्यारोपार्थमतिदेशशास्त्रमत आह भोमगोरिति । अनुस्वारनिष्ठादेशतानिरूपिता, या, न, निष्ठास्थानिता तस्या अल्त्वव्याप्यनत्वधर्मावच्छिन्नतया "अनुस्वारः स्थानिभूतादचः पूर्वत्वेन दृष्टत्वान् भवतु" इत्यारोपप्रकारीभूतस्थानिभूतादचः पूर्वत्वेन दृष्टत्वरूपधर्मनिमित्तके "अचः परस्मिन्" इति स्थानिवद्भावरूपे कार्ये 'अनल्विधौ' इति निषेधादनुस्वारे स्थानिभूतादचः पूर्वत्वेन दृष्टत्वालाभ इति भावः । भाष्यरीत्येति । तत्सूत्रस्थभाष्यरीत्या अल्त्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकरणधर्मनिमित्तताके कार्ये कर्त्तव्ये स्थानिवद्भावो न भवतीत्यनल्विधावित्यस्यार्थेन लोपस्याल्त्वव्याप्यत्वावच्छिन्नस्थानिताकत्वेन तन्निषेधादित्यर्थः ।

विशेषणतयेति । नन्वारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्नोद्देश्यकविधावेव निषेधप्रवृत्तेः "अचः परस्मिन्" इति स्थानिवत्त्वस्य चात्तथात्वाददोषोऽतआह विशेषणतयेति ।

---

जो धर्म उसमें न रहे, उसी का तो, आरोप होता है, सम्भव रहने पर आरोप करने की क्या आवश्यकता, इस अरुचि पर उत्तर देते हैं, "भोमगो" इस सूत्र के अनुसार अनल्विधौ का अर्थ है, "अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मनिमित्तके विधौ नस्थानिवत्" अल्त्वव्याप्य नत्वधर्मावच्छिन्नास्थानिता, नकार में तन्निरूपितादेशता अनुस्वार में तदाश्रय अनुस्वार है, तद्धर्मिकारोप है "अनुस्वारः अचः पूर्वत्वेन दृष्टत्ववान् भवतु" यहाँ पर प्रकारीभूत धर्म है, अचः पूर्वत्वेन दृष्टत्वरूपधर्म, तन्निमित्तक "स्थानिवदादेशोऽनल्विधौ" से स्थानिवद्भाव कर्तव्यता में अनल्विधौ निषेध लग जाने से अनुस्वार में स्थानिभूत अच् से पूर्वत्वेन दृष्टत्व नहीं आयेगा, यह नव्यमत से समाधान है ।

प्राचीनों के मत से भी समाधान करने के लिये कहते हैं, विशेषणतया अलाश्रयण होने से अनल्विधौ यह निषेध लग जायगा । अचः पूर्वत्वेन दृष्टत्व अल्मात्र वृत्तिधर्म घटित धर्म है, क्योंकि यहाँ पर अच् विशेषणतया निमित्त है । "स्थान्यवयवाल्वृत्तिधर्मघटित धर्मनिमित्तकेविधौ न स्थानिवत्" स्थान्यवयव हुआ अकार स्थान्यवयवाल्वृत्तिधर्म है अच्त्व तद्धर्मघटित धर्म हुआ अचः पूर्वत्वेन दृष्टत्व इसको निमित्त मानकर स्थानिवद्भाव कर्तव्य रहने पर अनल्विधौ निषेध लग जायगा ।

वस्तुतः यह उदाहरण चिन्त्य है, क्योंकि भाष्यकार ने "पूर्वत्रासिद्धे न स्थानिवत्" अर्थात् त्रिपादिस्थ कार्य कर्त्तव्य रहने पर स्थानिवद्भाव नहीं होता । यह कहकर वरे यलोपस्वर के अतिरिक्तद्विर्वचनादि का प्रत्याख्यान किया है । णत्व कर्तव्यता में "पूर्वत्रासिद्धे न स्थानिवत्" इसका "तस्य दोषः संयोगादि लोप णत्वेषु" इससे बाध हो जाने पर परसवर्णाभाव होने से, अर्थात् यहाँ पर स्थानि-

जशि–सग्धिश्च मे। अदनं ग्धिः। अदेः क्तिनि "बहुलं छन्दसि" ( पा० सू० २।४ ३९ ) इति घस्लादेशः। "घसिभसोर्हलि–" ( पा० सू० ६।४।१०० ) इत्युपधा-लोपः। "झलो झलि" (पा० सू० ८।२।२६) इति सलोपः। धत्वम्। घस्य जश्त्वम्। "सहस्य सः–" ( पा० सू० ६।३।७८ ) इति सूत्रात् स इत्यनुवर्तमाने "समानस्य च्छन्दस्यमूर्द्धप्रभृत्युदर्केषु" इति सूत्रेण सः। चरि—जक्षतुः॥

---

भाष्यसम्मताष्टाध्यायीपाठपक्षे परसवर्णदृष्ट्या "झलां जश् झशि" ( पा० सू० ८।४।५३ ) इत्यस्य "झरो झरि" ( पा० सू० ८।४।६५ ) इत्यस्य चासिद्धत्वेन यर्परत्वाभावात्तदप्राप्ते-रिति चेत्, सत्यम्। पाद्यतेः क्विपि पाद्धसतीत्यादौ "झयो ह—" इति पूर्वसवर्णे पञ्चमीसमासेन प्राप्तस्थानिवद्भाववारणार्थत्वात्। हरितशब्दादाचक्षाणण्यन्तात् क्विपि हरिद्धसतीत्यादौ उक्तरीत्या प्राप्तस्य तस्य वारणार्थत्वाच्च। अत्राल्लोपस्यापि तत्प्राप्त्या

---

ननु "अनल्विधौ" इति निषेधोऽल्त्वव्याप्यधर्मस्य स्थानिघटकाल्वृत्तित्वे एव प्रवर्तते, प्रकृते चाच्त्वरूपाल्त्वव्याप्यो धर्मो न नकाररूपस्थानिघटकाल्वृत्तिरिति निषेधाप्राप्तिरत आह–भाष्ये इति, न पदान्त सूत्रभाष्ये हि "द्विर्वचनादीनि च" इति वार्तिकव्याख्यावसरे द्विर्वचनादीनि च न पठितव्यानि भवन्ति, पूर्वत्रासिद्धेनैवसिद्धानि भवन्तीत्युक्तं–तथा चात्र-भाष्यप्रामाण्याद् णत्वरूपपरसवर्णाभावो लभ्यते इति नेदमुदाहरणं सम्भवतीति भावः। उपपादयिष्यते इति। रषाभ्यामित्यादिणत्वविधायकेष्वपि "अपदान्तस्यमूर्द्धन्यः" इत्यस्य

---

वद्भाव हो जाने से परसवर्णाभाव होगा। यदि कहो कि जहाँपर प्रतिपदोक्त णकार होगा वहाँ पर यह वार्तिक लगेगी तो यह नहीं कह सकते, क्योंकि णत्व ग्रहण में प्रतिपदोक्त परिभाषा नहीं लगती, कारण णकार का उच्चारण करके कहीं विधान नहीं है। यह अट्टन् शब्द में बताया जायगा।

किञ्च "दीर्घादाचार्याणाम्" ( पा० ८।४।५२ ) इसके बाद अनुस्वारस्य ययि (पा० सू० ८।४।५८) वापदान्तस्य ( पा० ८।४।५९ ) तोर्लि ( ८।४।६० ) उदस्था ( ८।४।६१ ) झयो हो ( ८।४।६२ ) शश्छोटि ( ८।४।६३ ) इस षट् सूत्रीपाठ के बाद "झलां जश् झशि" ( पा० सू० ८।४।५३ ) "अभ्यासे चर्च" ( पा० सू० ८।४।५४ ) "खरि च" पा० सू० ८।४।५५ "वावसाने" ( पा० सू० ८।४।५६ ) अणोऽप्रगृह्यस्य ( पा० सू० ८।४।५७ ) इस पञ्च सूत्री का पाठ है, इस भाष्यसम्मत अष्टाध्यायीपाठ में "झलांजश्झशि" ( ८।५।५३ ) झरोझरि ( पा० सू० ८।४।६५ ) इसको असिद्ध होने से यय् परत्वाभाव रहने पर परसवर्ण की अप्राप्ति है, अर्थात् शिनप् धि इस अवस्था में अकार लोप अनु-स्वार ष्टुत्व हो जाने पर जश्त्व असिद्ध होने के कारण परसवर्ण नहीं होगा। अतः सवर्ण का उदा-हरण "पाद्धसति" देना चाहिये। पादि धातु से क्विप् सर्वापहारी लोप णि लोप "झयोहोऽन्य" इससे पूर्वसवर्ण करने पर "अचः परस्मिन् पूर्वविधौ" से स्थानिवद्भाव हो जायगा, क्योंकि इसमें पञ्चमीसमास भी माना जाता है। पूर्वस्माद्विधिः, पूर्वविधिः, पूर्व से पर को कार्य कर्तव्य रहने पर स्थानिवद्भाव होने लगेगा उसको निषेध करने के लिये सवर्ण ग्रहण किया गया है।

यद्यपि 'क्वौलुप्तन्न स्थानिवत्" असार्वत्रिक है, तथापि यहाँ पर इससे स्थानिवद्भाव का निषेध हो सकता है। अतः इसका असाधारण उदाहरण नहीं हुआ इस आशङ्का से "हरिद्धसति" इस उदाहरण को देते हैं, यहाँ पर हरित प्रातिपदिक से आचष्टे अर्थ में णिच् टिलोप हरति धातु से क्विप् णिलोप हो जानेपर "झयोहः" पूर्वसवर्ण कर्तव्यता में पूर्वविधौ, में पञ्चमी समास होने से स्थानि-वद्भाव प्राप्त रहेगा सवर्णविधि कर्तव्यता में स्थानिवद्भाव का निषेध हो जायगा। यहाँ पर अकार को भी स्थानिवद्भाव प्राप्त रहेगा, अतः "क्वौ लुप्तन्नस्थानिवत्" का विषय नहीं है।

"संयोगान्तस्य" ( पा० सू० ८।२।२३ ) तदन्तस्येति । अलोऽन्त्यपरिभाषयेति भावः । यद्यपि विशेषणेन तदन्तविधिलाभात्संयोगस्येत्येव सूत्रयितुमुचितं तथाऽपि प्रत्येकं संयोगसञ्ज्ञेति पक्षे दृषत्करोतीत्यादौ लोपं वारयितुं संयोगावन्तौ यस्येति

---

क्वौ लुप्तमित्यस्य विषय एव न । हरिन्नमतीत्यादौ अनुनासिके तद्व्यावृत्त्यर्थत्वाच्च । "हयवरट्" सूत्रभाष्यरीत्या तत्र सवर्णग्रहणापकर्षेण तस्यापि सवर्णविधित्वादित्यन्यत्र विस्तरः । सत्रेण स इति । "सग्धिः स्त्री सहभोजनम्" इत्यमरात्सहस्य सादेश इति प्रतीयते । "झलो झलि" ( पा० सू० ८।२।२६ ) इति सिच एव लोप इति पक्षे छान्दसो-वर्णलोपो बोध्यः । स्पष्टं चेदं "घि च" ( पा० सू० ८।२।२५ ) इति सूत्रे भाष्ये । लोके तु सग्धिरित्यसाध्वेवेति बोध्यम् ॥

---

सम्बन्धं कृत्वाऽऽन्तरतम्यान्नकारस्य णकाररूपमूर्द्धन्यादेशेनैव सिद्धे "रषाभ्याम्" इति सूत्रेण ग्रहणस्य, पदान्तस्य इति णत्वनिषेधकसूत्रस्य च भाष्यकृता प्रत्याख्यातत्वेन प्रपिपदोक्तण-काराभावेन प्रतिपदोक्तपरिभाषाया अप्रवृत्तिरितिभावः । हरिन्नमतीत्यादौ इति ।

वस्तुत इदमुदाहरणमपि न युक्तम् । अनुनासिकात् प्राग् "झलां जशोऽन्ते" इति दकारे कृते पश्चादनुनासिके कर्त्तव्ये दस्य स्थानिभूतादचः पूर्वत्वाभावेन स्थानिवत्वाप्रवृत्तेः तस्मात्पादशब्दादाचक्षणाण्यन्तात् क्विपि पान्नयति गान्नयतीत्युदाहरणं बोध्यम् ।

---

पर वास्तविक यह भी उदाहरण नहीं हो सकता क्योंकि पञ्चमी समास अनित्य है, अतः अनित्य-त्वेन स्थानिवद्भाव का वारण हो सकता है, अतः हरिन्नमति सवर्ण का उदाहरण देते हैं। यहाँ पर "अचः परस्मिन्" से स्थानिवद्भाव हो जाने पर "यरोऽनुनासिके" ८।४।४५ से पदान्तयत्वाभाव होने के कारण अनुनासिकाभाव प्राप्त रहा, "नपदान्त" सूत्र से सवर्ण विधि में स्थानिवद्भाव का निषेध हो जाने से अनुनासिक होता है। "हयवरट्" सूत्र के भाष्यानुसार "यरोऽनु" में सवर्ण का अपकर्ष होने से "यरोनु" इस सूत्र में भी सवर्ण विधित्व है। दीर्घ का उदाहरण है "प्रतिदीव्ना" प्रतिपूर्वक दिव् धातु से औणादिक कनिन् प्रत्यय से प्रतिदिवन् शब्द की निष्पत्ति होती है, तृतीयागतैकत्व की विवक्षा करने पर भ संज्ञा "अल्लोपोऽनः" से अकार लोप हो जाने पर "अचः परस्मिन् पूर्वविधौ" से स्थानिवद्भाव हो जानेपर "हलि च" से दीर्घाभाव प्राप्त रहा दीर्घविधि में स्थानिवद्भाव का निषेध होने से दीर्घ होता है।

जश्विधि के प्रति स्थानिवद्भाव नहीं होता, इसका उदाहरण "सग्धिः" है। "अदनंग्धि" अद् धातु से भाव में क्तिन् "बहुलं छन्दसि" से धस्लादेश "घसिभसोर्हलि" से उपधाभूत अकार का लोप "झलोझलि" से सकार का लोप "झषस्तथोर्धोधः" से धत्व उपधा लोप का स्थानिवद्भाव होने से "झलां जश्झशि" से जश्त्व की अप्राप्ति है, जश् विधि के प्रति स्थानिवद्भाव का निषेध होने से जश्त्व होता है। "झलोझलि" से सिच् के सकार का ही लोप होता है। इस पक्ष में छान्दसत्वात् वर्ण लोप करना चाहिये। "समानाग्धिः" विशेषण समास "समानस्यच्छन्दस्यमूर्द्धप्रभृत्युदर्केषु" इस सूत्र से स भाव हो जायगा। इस सूत्र में "सहस्य सः" ६।३।७८ से स का अनुवर्तन आता है। अमरकोशकार की दृष्टि से सह को स आदेश प्रतीत होता है, क्योंकि उन्होंने लिखा है, "सग्धिः स्त्रीसह भोजनम्"। लोक में सग्धिः असाधु है। वस्तुतस्तु 'षघ हिंसायाम् धातु से क्तिन् प्रत्यय करने पर लोक में भी सग्धिः प्रयोग होता है, यह "घि च" सूत्र के भाष्य में स्पष्ट है। तात्पर्य रहने पर धातुओं का अनेकार्थ होने से अर्थ असंगत नहीं होगा। धात्वर्थ उपलक्षणीभूत है, इसमें प्रमाण है, [ कुर्द, खुर्द, गुर्द, गुद, 'क्रीडायामेव' ] क्रीडायामेव का एवकार। "क्रीडायाम्" धात्वर्थ है, एवकार

द्विवचनान्तेन समासलाभार्थमन्तग्रहणम्। वृत्तौ हि उपसर्जनानामेकत्वसंख्यौत्सर्गिकी द्वित्वादिकं तु प्रयत्नलभ्यमिति भाष्ये स्थितम् ॥

---

विशेषणेन = पदस्येत्यधिकारप्राप्तविशेषणेन संयोगस्येत्यनेन। एकत्वसंख्येति। अभेदैकत्वसंख्येति तदर्थः। संख्यासामान्याभाव इति यावत् विग्रहे एकवचनं तु औत्सर्गिकं सुबन्तत्वसम्पत्तिमात्रफलकमिति समर्थसूत्रे भाष्ये स्पष्टम्। भाष्ये स्थितमिति। संयोगसञ्ज्ञासूत्रस्थे इत्यर्थः। एवं च प्रत्येकं संयोगसञ्ज्ञापक्षस्यानन्तरा इति सूत्राक्षरस्वारस्यविरोधेन

---

अभेदैकत्वसंख्येति। वृत्तौ यत्किञ्चित्पदजन्यपृथगुपस्थितिविषयार्थकत्वेन दृष्टानां शब्दानांविशिष्टविषयकैकशक्त्यैवोपस्थितिजनकत्वरूपैकार्थीभावबलादेवोपसर्जनपदार्थे संख्याविशेषानवगतिरित्यभेदैकत्वसंख्येत्युक्तम्। अभेदरूपा एकत्वसंख्येतितदर्थः। तत्राभेदश्च न भेदत्वावच्छिन्नप्रतियोगिताकाभावः, यत्किञ्चिद् भेदस्य सर्वत्र सत्त्वेनाप्रसिद्धिप्रसङ्गात्। किन्तु उपसर्जनीभूतपदार्थतावच्छेदकावच्छिन्नप्रतियोगिताकभेदाभावरूपः। राजपुरुषः, इत्यत्रराजत्वावच्छिन्नप्रतियोगिताकभेदाभावस्य राजमात्रे सत्त्वेन "राजसम्बन्ध्यभिन्नः पुरुषः" इत्येव विशिष्टविषयको बोध इति, संख्यासामान्याभाव एव फलति, तत्र तात्पर्यवशात्तु एकत्वादिविशिष्टस्य बोधः।

---

से यह ज्ञापित होता है कि यहाँ के अतिरिक्त धात्वर्थ उपलक्षण है अर्थात् जो अर्थ लिखा है वह धात्वर्थ है, और उसके अतिरिक्त भी धात्वर्थ होता है तात्पर्य रहने पर।

चर् विधि के प्रति अजादेशस्थानिवत् नहीं होता, इसका उदाहरण है, "जक्षतुः" अद् धातु से लिट् द्विवचन "लिट्यन्यतरस्याम्" से घस्लादेश "गमहनजनखनघसाम्" से उपधालोप द्वित्व अभ्यास कार्य उपधा लोप को स्थानिवद्भाव होने से "खरि च" करके चर्त्व प्राप्त नहीं रहेगा। चर् विधि के प्रति स्थानिवद्भाव का निषेध होने से चर्त्व होता है।

पदस्य का अधिकार आने से तथा स्थानषष्ठीलिङ्कपरिभाषा के साथ एक वाक्यता होने से "संयोगान्त" जो पद उसके अन्त्य का लोप होता है, यह अर्थ होता है। यद्यपि पद विशेष्य होगा, संयोग विशेषण होगा "येन विधिस्तदन्तस्य" से संयोगान्त का लाभ हो जायगा "संयोगस्य लोपः" यही सूत्र करना उचित है। तथापि प्रत्येक संयोग संज्ञा पक्ष में "दृषत्करोति" इत्यादि में संयोगान्त लोप वारणार्थ द्विवचनान्त के साथ समास करने के लिये अन्त ग्रहण आवश्यक है। क्योंकि समासादि वृत्ति में उपसर्जनीभूत पदार्थ की एकत्व संख्या औत्सर्गिकी होती है। उक्तैकत्व संख्या, का भाव है अभेदैकत्व संख्या "संख्याविशेषाणामविभागेनावस्थानमभेदैकत्वसंख्या। यथोक्तम्—यथौषधिरसाः सर्वे मधुन्याहितशक्तयः, अविभागेन वतन्ते तां संख्यां तादृशीं विदुरिति कैयटेनोक्तम्" संख्याविशेष अर्थात् एकत्वादि की जो अविभागेन अर्थात् संख्यात्वेन स्थिति को अभेदैकत्वसंख्या कहते हैं, इसमें वाक्यपदीय का प्रमाण देते हैं। जैसे मधु में सम्पूर्ण रसों का रसत्वेन ज्ञान होता है, उसी प्रकार सम्पूर्णसंख्या संख्यात्वेन मान होती है। आहित शब्द का यहाँ पर स्थापित अर्थ नहीं है, किन्तु त्यक्त अर्थ है, ( आहिताः=त्यक्ताः विरोधशक्तयः यैः, ते आहितशक्तयः ) अविरोधेन वर्तमान अभेदैकत्व संख्या समझो। द्वित्वादिक तो प्रयत्न लभ्य हैं। यह संयोग संज्ञाविधायक सूत्र में स्थित है।

एकत्व संख्या का अभिप्राय शब्दरत्नकार लिखते हैं, अभेदैकत्वसंख्या = अभेदरूपा एकत्व संख्या इसी का फलितार्थ है "संख्या सामान्याभावः", "राजपुरुषः" यहाँ पर "राजत्वावच्छिन्नप्रतियोगिताकभेदाभावः" राजमात्र में रहेगा तथा च "राजसम्बन्ध्यभिन्नपुरुषः" यही विशिष्ट विषयक

"यण—" इति वाचनिकम्। यद्वा वाच्यो व्याख्येयः। व्याख्या च द्वेधा—"झलो झलि" ( पा० सू० ८।२।२६ ) इत्यतो झल्ग्रहणमपकृष्य झल एव लोपो विधीयत इति। अन्तरङ्गे लोपे कर्तव्ये बहिरङ्गस्य यणोऽसिद्धत्वमिति वा। न च षाष्ठी असिद्धपरिभाषा त्रिपादीस्थत्वेनासिद्धमन्तरङ्गं लोपं न पश्यतीति वाच्यम्। कार्यकालपक्षाभ्युपगमात्। न च "नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः" इति निषेधः।

---

फलाभावेन चासङ्गतत्वमिति तत्रैव भाष्ये ध्वनिततयाऽन्त्यमन्तग्रहणं व्यर्थमेव, न तु फलान्तरेऽभिनिवेशः कार्य इति भावः।

यत्तु संयोगेति लुप्तषष्ठीकम्, तच्च पदस्येति चान्तविशेषणम्, संयोगान्तस्य सतः पदान्तस्येत्यर्थमन्तग्रहणमिति। तन्न। तादृशलक्ष्याभावात्। अत एव "ध्वसोः ( पा० सू० ६।४।११९ ) सूत्रे "द्विशकारको निर्देशः" इति भाष्ये उक्तम्। त्वद्रीत्या संयोगान्तलोपस्य दुर्वारत्वेन शकारद्वयाभावात्तदसंगतिः स्पष्टैव॥

अपकृष्येति। तच्च षष्ठ्या विपरिणम्य वाक्यभेदेन सम्बध्यते। तेन पूर्ववाक्यस्य क्वचिद्झल्यपि प्रवृत्तिः। उत्तरवाक्येन च तस्य क्काचित्कत्वं ज्ञाप्यते। तेन च नातिप्रसङ्गः।

---

सूत्राक्षरस्वारस्यविरोधेनेति। अविद्यमाना अन्तरा येषां ते अनन्तरा अव्यवहिताः इत्यर्थः, "द्वयोश्चैवान्तरा कश्चिद् विद्यते न वा" इति भाष्येण स्वाव्यवहितपूर्वत्वसामानाधिकरण्य-स्वाव्यवहितोत्तरत्वसामानाधिकरण्यैतदुभयसम्बन्धेन यत्किञ्चिद्वस्तुविशिष्टद्वित्ववतोरेव व्यवहितपदार्थतया पर्युदासन्यायेन तद्भिन्नस्यापि द्वित्वविशिष्टस्यैव ग्रहणौचित्येन च सूत्राक्षरस्वारस्यभङ्गः स्पष्ट एवेतिभावः। अत्र यत्किञ्चिद्वस्तुपदेन व्यवधायकवस्तुनो ग्रहणं बोध्यम्। यथा रामशब्दे आविशिष्टद्वित्ववत्त्वं रेफमकारयोः, द्वित्वस्य रेफ-

---

बोध होगा, इसी का नाम संख्या सामान्याभाव है, क्योंकि अभेद का अर्थ होगा भेदाभाव। वह उपसर्जनीभूतपदार्थतावच्छेदकावच्छिन्नप्रतियोगिताकभेदाभावरूप है। विग्रह में स्वाभाविक एकवचन सुबन्तत्वरूप सम्पत्ति लाभार्थ है। यह "समर्थः पदविधिः" इस सूत्र के भाष्य में स्पष्ट है। मनोरमाकार ने अन्तग्रहण करने के लिये जो भाष्य प्रमाणरूप में उपस्थित किया है, वह एकदेशी है, सिद्धान्तभूत नहीं है। इस बात को शब्दरत्नकार लिखते हैं। प्रत्येक वर्ण की संयोग संज्ञा होती है, यह पक्ष "अनन्तराः" सूत्राक्षरस्वारस्य के विरुद्ध होने से अर्थात् अनन्तर का अर्थ होता है, व्यवधान रहित अर्थात् अव्यवहित। दो के मध्य में तीसरे के रहने पर व्यवधान होता है, यदि तीसरा नहीं है तो अव्यवहित हुआ इससे निकलता है, प्रत्येक वर्ण की संयोग सञ्ज्ञा नहीं होती। फलाभाव होने से असङ्गत है, यह "हलोऽनन्तराः संयोगः" सूत्र के भाष्य से ध्वनित है। अतः अन्तग्रहण नहीं करना चाहिये, अन्तग्रहण का जो फलान्तर है, उसका आग्रह भी नहीं करना चाहिये, अर्थात् फलाभाव है।

जो यह कहते हैं कि संयोग यह लुप्तषष्ठीक है, संयोग और पद ये दोनों अन्त के विशेषण होगें, तथा च अर्थ होगा संयोगान्त रहते हुये जो पदान्त इस अर्थ को करने के लिये अन्त ग्रहण किये उनका कहना अनुचित है, इस तरह का लक्ष्य नहीं मिल सकता। इस अर्थ का अभाव होने के कारण ही "ध्वसोः" ६।४।११९ इस सूत्र में द्विशकारक निर्देश भाष्यकार ने किया। आपके कथनानुसार तो संयोगान्त लोप दुर्वार होने से शकारद्वय का अभाव होने से भाष्य असङ्गत हो जायगा।

"यणः प्रतिषेधो वाच्यः" यह वार्तिक वचनरूपेण ही पढ़ी गई है, अथवा वाच्य है, वांच्य का अर्थ होता है व्याख्येय, व्याख्यान दो प्रकार से हो सकता है, उसको दिखाते हैं। "झलोझलि" ८।२।२६

तस्यानित्यत्वात् । उत्तरकालप्रवृत्ते लोपे अजानन्तर्याभावाच्च । तथा च वार्तिकम्–"संयोगान्तस्य लोपे यणः प्रतिषेधः" "न वा झलो लोपाद्", "वहिरङ्गलक्षणत्वाद्वा" इति इह यथोद्देशपक्षे आद्यं वार्तिकद्वयम्, तृतीयं तु कार्यकालपक्षे इति विवेकः ।

---

ध्वनितं चेदम् "अमो मश्" (पा० सू० ७।१।४०) इत्यत्र भाष्ये । तत्र हि मद्वयात्मकमादेशं विधाय शित्वं प्रत्याख्यातम् । एकस्य मस्य संयोगान्तलोप इति च कैयटेन व्याख्यातम् । अनित्यत्वादिति । तत्र च ज्ञापकं "केऽणः" (पा० सू० ७।४।१३) इति निर्देशः । 'क इ अण' इति स्थिते लक्ष्यगतपरत्वमाश्रित्य प्राप्त इकारस्य यण् असिद्धपरिभाषया तत्र व्यावर्त्यते । "अन्तरङ्गं बलीयः" इति परिभाषान्तरं नास्त्येवेति भावः ।

---

मकारवृत्तित्वात् रेफमादाय स्वाव्यवहितपूर्वत्वसामानाधिकरण्यम्, मकारमादाय स्वाव्यवहितोत्तरत्वसामानाधिकरण्यमिति लक्षणसमन्वयः । कैयटेनाप्युक्तम्—महासञ्ज्ञाकरणेन संयुज्यन्ते वर्णा यत्रेतिव्युत्पत्त्या समुदायप्रतीतेस्समुदितस्यैव संयोगसंज्ञा न तु प्रत्येकमिति । ध्वनिततयेति । समुदायसंज्ञासिद्धये सह ग्रहणं कर्तव्यमिति पूर्वमभिधायगर्गदण्डन्यायेन तत्सिद्धौ सह ग्रहणं प्रत्याख्यातम्, नत्वेकस्य संयोगसञ्ज्ञायाः किञ्चिदसाधारणं फलं दत्तम् तेन ध्वनितमित्यर्थः । अपकृष्येति । झलोझलीत्यतः सिंहावलोकितन्यायेन झल्ग्रहणमिहानुवर्तते । तच्च षष्ठ्या विपरिणम्येति । यणो लोपाभावः । निषेध इति । यत्रान्तरङ्गे बहिरङ्गे वा अज्निष्ठाजानन्तर्यकार्यमस्ति तत्र बहिरङ्गपरिभाषा न प्रवर्तते इति हरदत्तमतेन बहिरङ्गे यणि, अज्निष्ठाजानन्तर्यसत्वात् निषेधः प्राप्नोतीति भावः ।

अजानन्तर्याभावाच्चेति । कैयटमते तु परिभाषार्थः—अज्निष्ठान्यानन्तर्यनिमित्तके-

---

से झल् का अपकर्ष कर लेते हैं, और षष्ठ्यन्तत्वेन विपरिणाम करके वाक्यभेद से सम्बन्ध करते हैं । पहले वाक्य का अर्थ होगा, संयोगान्त जो पद तदन्त का लोप होता है, यह एक वाक्य का अर्थ होगा, झल् का अपकर्ष कर लेने पर अर्थ होगा, झलन्त जो संयोग तदन्त जो पद तदन्त का लोप होता है, दूसरा वाक्यार्थ होगा । प्रथम वाक्य से ही सर्वत्र लोप सिद्ध रहा द्वितीय वाक्य सामर्थ्य से पूर्व को अनित्य मानेगें । पूर्ववाक्य की क्वचित् झल् भिन्न में प्रवृत्ति से सुद्ध्युपास्य इत्यादि में अतिव्याप्ति दोष नहीं आयेगा, अपकर्षकरण भाष्यध्वनित है । इसको दिखाते हैं, 'अमोमश्' ७।१।४० इस सूत्र के भाष्य में भाष्यकार ने मद्वयात्मक मकार आदेश विधान करके शित्व का प्रत्याख्यान किया, एक मकार का संयोगान्त लोप किया गया, इससे निकलता है कि अपकर्ष होता है, पहले वाक्य की झल्भिन्न में भी प्रवृत्ति होती है, अन्यथा संयोगान्त लोप कैसे होगा । इस प्रकार यह प्रथम व्याख्यान हुआ ।

दूसरी व्याख्या है अन्तरङ्ग लोप कर्त्तव्यता में बहिरंग यण् असिद्ध हो जाता है । बहिरङ्गशास्त्रीय निमित्त समुदाय के मध्य में अन्तर्भूत निमित्त है, जिसके वह अन्तरङ्ग कहलाता है । अन्तरङ्गशास्त्रीय समुदाय से बहिर्भूत है, निमित्त जिसके वह बहिरङ्ग कहलाता है । यण् शास्त्र को लोप की अपेक्षा, अधिक निमित्त अपेक्षित है, अतः वह बहिरङ्ग है । षाष्ठी "वाह ऊठ्" से ज्ञापित असिद्ध परिभाषा, त्रिपादीस्थत्वेन असिद्ध अन्तरङ्ग लोप को नहीं देखती, यह नहीं कहना चाहिये, कार्यकाल पक्ष स्वीकार होने से ।

यदि कहा जाय कि अन्तरङ्ग अथवा बहिरङ्ग में अज्निष्ठ अजानन्तर्य निमित्तक कार्य कर्तव्य रहने पर बहिरङ्ग परिभाषा नहीं लगती, इत्यर्थक "नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः" इस परिभाषा से निषेध

यत्त्वाहुः—वार्तिककृतो वचनं, प्रत्याख्यानप्रकारद्वयं तु भाष्यकृत इति, तन्निर्मूलम्, मतभेदे प्रमाणाभावात्। यदप्याहुः—'काव्यं, कलत्रं, शाल्वं चाचक्षाणः काव् कलत् शाल् अदभ्रयतेरधब् इति। तदपि न। पक्षत्रयेऽपि संयोगान्तलोपस्य दुर्लभत्वात्। आद्यपक्षद्वयैकरूप्यार्थं पूर्वं पूर्वमन्तरङ्गं परं परं बहिरङ्गमित्यल्लोपणिलोपयोरसिद्धत्वस्य सुवचत्वात्। अत एव कातन्त्रपरिशिष्टे शुक्लयतेः क्विपि शुक्ल् इत्युदाहृतम्। वान्तयोः क्विपि ऊठो दुर्वारत्वात्। न च स्थानिवत्त्वम्।

वस्तुतः "ओमाङोश्च" (पा० सू० ६।१।९५) इत्याङ्ग्रहणादनित्यमिदम्। तद्धि शिव+आ+इहीति स्थिते परमपि सवर्णदीर्घं बाधित्वा धातूपसर्गकार्यत्वेनान्तरङ्गत्वादाद्गुणे वृद्धिबाधनार्थम्। उदाहरणं तु अक्षद्यूरिति। अन्यथा अन्तरङ्गे यण्यूठसिद्धः स्यात्।

मतभेद इति। न वेति वा शब्दस्वारस्येन वचनारम्भवादिन एव प्रत्याख्यानप्रकारो, भाष्यकृत्तु 'तत्तर्हि वक्तव्यं न वक्तव्यम्' इत्यादिशब्दैरेव प्रत्याचष्टे इति सर्वं वार्तिककृत एवेति भावः। काविव्यादि। संयोगान्तलोपादिति भावः। ननु पूर्वपूर्वस्थानिकमन्तरङ्गमित्यर्थो न भाष्यसम्मतः। किं तु पूर्वपूर्वनिमित्तकमित्येव। किं च प्रातिपदिकाद् णिजुत्पत्तेरेव भाष्यसम्मततया बहिर्भूतसुब्निमित्तकसंयोगान्तलोपोऽपि बहिरङ्ग इत्यरुचेराह—वान्तयोरिति। काव्येऽन्तरङ्गे कर्तव्ये बहिरङ्गमसिद्धं नेति। अन्तरङ्गे संयोगान्तलोपेऽजानन्तर्यनिमित्तकत्वं नास्तीत्यस्य न प्रसक्तिरिति तात्पर्यम्। नास्त्येवेति। "असिद्धं बहिरङ्गमन्तरङ्गे" इति परिभाषाया एव अन्तरङ्गे कर्तव्ये जातं समकालप्राप्तञ्च बहिरङ्गमसिद्धमित्यर्थस्वीकारेण सकलेष्टसिद्धौ एतत्परिभाषातिरिक्ता समानकालप्राप्तान्तरङ्गबलवत्त्वबोधिका परिभाषा नैव स्वीकर्तव्या। वस्तुतस्तु त्रिपाद्यामबहिरङ्गपरिभाषायाः वक्ष्यमाणरीत्या अप्रवृत्तिरेवेति बहिरङ्गपरिभाषया प्रकृते लक्ष्यस्य साधनं न युक्तं तत्समर्थनाय पूर्वपूर्वस्थानिकमन्तरङ्गमित्यस्य स्वीकारक्लेशश्चायुक्त इत्यत आह वस्तुत इति।

न भाष्य सम्मत इति। पूर्वपूर्वस्थानिकमन्तरङ्गमित्यर्थः प्रकृत्यैकाच् ६।४।१६३ इति सूत्रभाष्यविरुद्धः तत्र भाष्येकारेणोक्तम्।

अथेष्ठेमेयःसु प्रकृतिभावे किमुदाहरणम्। प्रेयान् प्रेष्ठः। नैतदस्ति। प्रादीनामसिद्धत्वान्न भविष्यति। इदं तर्हि श्रेयान् श्रेष्ठः।

"प्रकृत्यैकाजिष्ठेमेयः सु चेदेकाच उच्चारणसामर्थ्यादवचनात्प्रकृतिभावः"। प्रकृत्यैकाजिष्ठेमेयःसु चेत्तन्न। किं कारणम्। "एकाच उच्चारणसामर्थ्यादन्तरेणापि वचनं प्रकृति-

हो जायगा क्योंकि—यहाँ पर बहिरङ्ग यण्, अज्निष्ठ अजानन्तर्य निमित्तक है, तो अनुपयुक्त है, परिभाषा को अनित्य होने से। अनित्यत्व का ज्ञापक "केऽणः" ७।३।१३ निर्देश है, 'क इ अण,' इस स्थिति में अन्तरङ्ग गुण होता है, इकार को यण् नहीं होता, यदि "नाजानन्तर्ये" की सर्वत्र प्रवृत्ति रहती तो असिद्ध परिभाषा की प्रवृत्ति नहीं होती, लक्ष्यगतपरत्व लेकर यण् होने लगता, पर पाणिनीय जी ने अन्तरङ्ग गुण किया इससे जानते हैं कि "नाजानन्तर्ये" अनित्य है। "अन्तरङ्गं बलीयः" यह परिभाषान्तर नहीं है। क्योंकि इसी का अर्थ होता है, अन्तरङ्ग कर्तव्य रहने पर जात बहिरङ्ग और समकाल प्राप्त बहिरङ्ग असिद्ध होता है।

पद संस्कार स्वीकार कर लेने पर "केऽणः" निर्देश बन जायगा, उससे "नाजानन्तर्ये" को अनित्य नहीं कर सकते, इस अरुचिपर कहते हैं, वस्तुतः "ओमाङोश्च" ५।१।९५ इसमें आङ् ग्रहण

कौ विधिं प्रति तन्निषेधात्। विचि "लोपो व्योः—" ( पा० सू० ६।१।६६ ) इति लोपस्य प्रसङ्गाच्च। गिरिवेश्मयतेस्तु क्विपि यणः प्रतिषेधार्थं वचनारम्भपक्षे गिरिवेडित्युचितम्। प्रत्याख्यानपक्षे तु मान्तमेवेति दिक्।

---

यलोपे स्थानिवत्त्वनिषेधात् "लोपो व्योः" ( पा० सू० ६।१।६६ ) इति कृते वान्तत्वमिति ऊठ् दुर्वारोऽन्त्ये च स्वत एवेति तत्र यलोपं बाधित्वोठ् दुर्वार इत्यर्थः विचीति। काव्यशब्दे इति शेषः। यलोपे स्थानिवत्त्वनिषेधात्। एवं च प्राचीनोक्तं संयोगान्तलोपोदाहरणत्वम-युक्तमिति भावः। शाल्वे तु अल्लोपादेः स्थानिवत्त्वान्न तत्प्रसक्तिरिति बोध्यम्। मान्तमेवेति। अस्य प्राप्नोतीति शेषः। तस्मात्तत्पक्षेऽपि वाक्यभेदेन व्याख्याय गिरिवेडित्येव। अन्यथा-ऽऽरम्भप्रत्याख्यानयोः फलभेदः स्यादितिभावः। दिगिति। दिगर्थस्तु संयोगान्तलोप-संयोगादिलोपविषयकतयाऽऽरब्धस्य "यणः प्रतिषेध"—इतिवचनस्य संयोगान्तलोप-

---

भावः" एकाच उच्चारणसामर्थ्यादन्तरेणापि वचनं प्रकृतिभावो भविष्यति। "विन्मतोस्तु-लुगर्थम्" विन्मतोस्तु लुगर्थं प्रकृतिभावो वक्तव्यः। स्रग्वितरः, स्रजीयान्, स्रग्वितमः, स्रजिष्ठः, स्रुग्वत्तरः स्रुचीयान्। स्रुग्वत्तमः स्रुचिष्ठः।

ननु च विन्मतोर्लुक्टिलोपं बाधिष्यते। कथमन्यस्योच्यमानमन्यस्य बाधकं स्यात्। असति खल्वपि सम्भवे बाधनं भवत्यस्ति च सम्भवो यदुभयं स्यात्। यथैव खल्वपि विन्मतोर्लुक् टिलोपं बाधत एवं नस्तद्धिते इत्येतमपि बाधेत। यतरो नौ व्रह्मीयान्, व्रह्म-वत्तरः इति।

यत्तावदुच्यते कथमन्यस्योच्यमानमन्यस्यबाधकं स्यादिति। इदं तावदयं प्रष्टव्यः, यदि तर्हि विन्मतोर्लुङ्नोच्येत किमिहस्यादिति। टिलोप इत्याह। टिलोपश्चेन्नाप्राप्ते टिलोपे विन्मतोर्लुगारभ्यते सबाधको भविष्यति। यदप्युच्यतेऽसति खल्वपिसम्भवे बाधनं भवत्यस्ति च सम्भवो यदुभयं स्यादिति।

---

से जानते हैं "नाजानन्तर्ये" अनित्य है, क्योंकि "शिव+आ+इहि" यह स्थिति रहनेपर सवर्णदीर्घ को बाधकर धातूपसर्ग कार्य अन्तरङ्ग होने से "आद्गुणः" से गुण हो जाने पर वृद्धि का बाध करने के लिये आङ्ग्रहण हैं, "नाजानन्तर्ये" लगने पर तो दीर्घादि हो जायँगे, आङ्ग्रहण व्यर्थ है, वही अनित्यता का ज्ञापन करता है, अतः इस परिभाषा की यहाँ पर प्रवृत्ति नहीं होती। "नाजानन्तर्ये" का उदाहरण है "अक्षद्यूः, अक्षैर्दीव्यतीति" विग्रह करके "क्विप च" ३।२।७६ से क्विप् प्रत्यय समास क्विप् का सर्वापहारी लोप "च्छ्वोः" इत्यादि सूत्र से वकार को ऊठ् अनुबन्ध लोप, अन्तरङ्ग यण् कर्त-व्यता रहनेपर ऊठ् असिद्ध होने लगेगा, किन्तु अच् निष्ठ अन्यानन्तर्यनिमित्तक अन्तरङ्ग यण् कर्तव्यता में बहिरङ्ग ऊठ् असिद्ध नहीं होगा, यण् हो जायगा। उत्तरकाल प्रवृत्त लोप में अजानन्तर्य का अभाव भी है, क्योंकि कैयट की रीति से अन्तरङ्ग में ही अज्निष्ठअन्यानन्तर्य निमित्त होना चाहिये, वह अन्तरङ्ग लोप में नहीं है। वे वार्तिक ये है, "संयोगान्तलोपे यणः" "न वा झलो लोपात्"। "बहिरङ्ग-लक्षणात्वाद्वा"। क्रमशः प्रथम तथा द्वितीय वार्तिक यथोद्देश पक्ष विषयक हैं। तृतीयवार्तिक कार्यकाल-पक्ष विषयक है, जो यह कहते हैं कि वार्तिककार का तो "संयोगान्तलोपे यणः प्रतिषेधो वाच्यः" यह वचन है, प्रत्याख्यान प्रकारद्वय भाष्यकार का है। वह निर्मूल है मतभेद में कोई प्रमाण नहीं है। 'न वा' इस शब्द के स्वारस्य से समझते हैं कि वार्तिककार का ही प्रत्याख्यान प्रकार है। भाष्यकार तो "तत्तर्हि वक्तव्यं न वक्तव्यम्" इत्यादि शब्दों के द्वारा प्रत्याख्यान करते हैं। इस स्थल पर तो सम्पूर्ण आरम्भ और प्रत्याख्यान वार्तिककार का ही है।

 


विषयकस्य "झलो लोपात्" इति प्रत्याख्यानम् । अत एव तत्र "संयोगान्तलोपो झलोलोप" इति भाष्ये व्याख्या कृता । "बहिरङ्गलक्षणत्वाद्वा" इत्यस्य तु बहिरङ्गो यणादेशोऽन्तरङ्गो लोप इति व्याख्यानेन वार्तिकस्वारस्येन चेदृशानां लक्ष्याणामनभिधानमेव । वस्तुतस्तृतीयं वार्तिकं विसर्जनीयसूत्रभाष्ये कार्यकालपक्षमुपक्रम्य "अयुक्तोऽयं परिहारो-न वा बहिरङ्गलक्षणत्वाद्वा" इत्यनेन दूषितमित्यलम् ।

---

सत्यपि सम्भवे वाधनं तद्यथा-दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति सत्यपि सम्भवे दधिदानस्य तक्रदानं निवर्तकं भवति । एवमिहापि सत्यपि सम्भवे विन्मतोर्लुक्टिलोपं वाधिष्यते । यदप्युच्यते यथैव खल्वपि विन्मतोर्लुक्टिलोपं वाधत एवं नस्तद्धित इत्येतमपि बाधेतेति । न वाधते । किं कारणम् । येन नाप्राप्ते तस्य वाधनम् । नाप्राप्ते टिलोपे विन्मतोर्लुगारभ्यते । नस्तद्धित इत्येतस्मिन् पुनः प्राप्ते चाप्राप्ते च ।

अथवा पुरस्तादपवादा अनन्तरान् विधीन् वाधन्ते नोत्तरानित्येवं विन्मतोर्लुक्टिलोपं—बाधिष्यते । यदि तर्हि विन्मतोर्लुक् टिलोपं बाधते पयिष्ठ इति न सिध्यति पयसिष्ठ इति प्राप्नोति । यथा लक्षणमप्रयुक्ते इति ।

अयं भावः पूर्वपूर्वस्थानिकस्यान्तरङ्गत्वे विनो लुकः परस्थानिकत्वेन वहिरङ्गतया सिद्धत्वात् पुनष्टिलोपस्य प्राप्त्यभावेनैव तत्सिद्धौ निरवकाशेन लुकाजातिपक्षमाश्रित्य त-न्न्यायेन बाधाश्रयणं वृथा स्यात् तथा च भाष्यप्रामाण्येन पूर्वपूर्वं निमित्तकत्वमन्तरङ्गत्वम् परपरनिमित्तकत्वं वहिरङ्गत्वं स्वीकरणीयमिति ।

---

जिन प्राचीनों ने काव्यादि शब्दों से आचक्षाण अर्थ में णिच् तदन्त से क्विप् अनुबन्धलोप णिलोप सुब्लुक् हो जाने पर संयोगान्त लोप हो जाने पर काव्, कलत्, शाल् अधव् बनाया है वह अनुचित है । उक्त तीनों पक्षों में संयोगान्त लोप दुर्लभ है, क्योंकि तीसरे पक्ष में पक्ष द्वय के साथ एकरूपता लाने के लिये पूर्व पूर्व अन्तरङ्ग होता है, पर बहिरङ्ग होता है, तथा च अल्लोप णिलोप असिद्ध हो जाने से यण् का लोप नहीं होगा । लोप नहीं होता, इसलिए कातन्त्र परिशिष्टकार ने शुकिङ्ग धातु से क्विप् करके शुक्ल उदाहरण दिया । पूर्व पूर्व स्थानिक अन्तरङ्ग होता है, यह अर्थ भाष्य सम्मत नहीं है, किन्तु पूर्व पूर्व निमित्तकत्व ही भाष्य सम्मत है, और भी प्रातिपदिक से णिजुत्पत्ति भाष्यसम्मत होने से बहिर्भूत सुब्निमित्तक संयोगान्त लोप भी वहिरङ्ग हो जायगा तो लोप होने लग जायगा इस पक्ष में । इस अरुचि पर लिखते हैं, काव्य में णिच् क्विप् णिलोप हो जाने पर यलोप कर्तव्यता में स्थानिवद्भाव का निषेध होने से, 'लोपो व्योः ६।१।६६ से लोप हो जाने पर वान्तत्व रहने से क्विप् परे रहते ऊठ् दुर्वार है ।

यदि कहा जाय कि स्थानिवद्भाव हो जायगा तो अनुपयुक्त है । क्विविधि के प्रति स्थानिवद्भाव का निषेध होने से । शाल्व् में स्वतः सिद्ध वलोप को बांधकर ऊठ् प्राप्त रहेगा । विच् कर देने पर काव्य शब्द में "लोपोव्योः" से लोप होने लगेगा यलोप में स्थानिवद्भाव का निषेध होने से । अतः प्राचीनोक्त संयोगान्त लोप का उदाहरण अयुक्त है । शाल्व में तो अल्लोपादिका स्थानिवद्भाव हो जाने से संयोगान्त लोप प्राप्त ही नहीं रहेगा ।

गिरिवेश्म शब्द से णिच् क्विप् णिलोप कर देने पर वचनारम्भ पक्ष में लोप पत्व जश्त्व हो जाने पर गिरिवेड् बनता है, प्रत्याख्यान पक्ष में मान्तत्व प्राप्त होता है, किन्तु प्रत्याख्यान पक्ष में भी वाक्य भेद होने से लोप होता है, गिरिवेड् ही बनता है । अन्यथा आरम्भ प्रत्याख्यान में फल भेद हो जायगा । संयोगान्त लोप तथा संयोगादि लोप विषयता है, जिसकी इस तरह का वचन "यणः

इति पक्ष इति। पक्षद्वयस्यापि भाष्ये स्थितत्वादिति भावः। चत्वारि रूपाणीति। यत्तु वदन्ति—धकारयकारोभयद्वित्वे उभयोः पुनर्द्वित्वे लोपविकल्पेऽन्यतरद्वित्वे च नव रूपाणि। तथा हि—एकधं च त्रिधा। एकयं द्वियं त्रियं च। एवं द्विधं त्रिधं च त्रिधेति। न चान्तरङ्गे द्वित्वे बहिरङ्गपरिभाषा न प्रवर्त्तते इति विसर्जनीयसूत्रे भाष्यकैयटयोर्व्यवस्थापितत्वादिति अत्रेदं वक्तव्यम्-पुनर्द्वित्वमशुद्धम्। एकस्यां व्यक्तौ एकं लक्षणं सकृदेव प्रवर्त्तत[1] इति "एकः पूर्वपरयोः"

---

उभयद्वित्वेति। द्विधं द्वियमेकम्। पुनर्द्वित्वे त्रिधं त्रियम्। अन्यतरेति। एकधं द्वियं-त्रियं च एकयं द्विधं त्रिधं च। द्वयोरपि द्वित्वे अन्यतरस्य पुनर्द्वित्वे द्विधं त्रियम्, त्रिधं-द्वियं च। अनुभयद्वित्वे एकधमेकयम्। लोपविकल्पान्यतरद्वित्वयोः समफलतासम्भवमात्रेण तु तदुक्तिः। एकः पूर्वपरयोरिति। तत्र हि यथाऽनयोः पूलयोः कटं कुर्विस्याद्यो

---

भाष्येस्थितत्वादिति। अनचि चेत्यत्र भाष्ये यदि यण इति पञ्चमी मय इति षष्ठी उल्क्का वल्म्मीकमित्युदाहरणम्। अथ मय इति पञ्चमी यण इति षष्ठी दध्य्यत्र मव्व्वत्रेत्युदाहरणम्।

न च लोपस्य वैकल्पिकत्वेन लोपे फलविशेषाभावाल्लोपकथनं व्यर्थमत आह—सम्भवमात्रेणेति। तदुक्तिः। लोपविकल्पोक्तिरिति भावः।

यत्तु "एकः पूर्वपरयोः" इति शास्त्रे आधानादिसंस्काराणां यथा सकृदेवानुष्ठानं-भवति तथैव गुणवृद्धयादीनामेकस्मिन् प्रयोगेऽनुष्ठानं स्यात्, तथा च प्रतिपुरुषमेक एव गुणादिघटितः साधुः स्यादन्येऽपशब्दाः स्युः इत्याशंक्य ज्योतिष्टोमादिशास्त्र दृष्टान्तेन प्रति

---

प्रतिषेधो वाच्यः'" है। संयोगान्तलोप विषयक वचन का तो "झलोलोपात्" करके प्रत्याख्यान हो गया। इस कारण से भाष्य में "संयोगान्तलोपो झलो लोपः" इस तरह की व्याख्या की है। बहिरङ्ग लक्षणत्वाद्वा, इसका तो "बहिरङ्गो यणादेशः" "अन्तरङ्गो लोपः" इस व्याख्यान से तथा वार्तिक स्वारस्य से प्रतीत होता है, बहिरङ्गत्वानाश्रय संयोगान्तलोप विषय यण् घटितों का अनभिधान है। वस्तुतः तृतीय वार्तिकरूपवचन विसर्जनीय सूत्रभाष्य में 'अयुक्तोऽयं परिहारो न वा बहिरङ्गलक्षणत्वाद्वा" इससे दूषित है।

मय् से परे जो यण् उसको द्वित्व होता है, यण् से परे जो मय् उसको द्वित्व होता है, ये दोनों पक्ष "अनचि च" इस सूत्र के भाष्य में स्थित है। "सुद्ध्युपास्यः" यहाँ पर धकार यकार को द्वित्व

---

१. "लक्ष्ये लक्षणं सकृदेव प्रवर्तते" इति स्वीकारे राम इत्यस्य प्रातिपदिकसञ्ज्ञायां सोरुत्पत्तिर्नस्यादतः, लक्ष्ये तल्लक्षणं सकृदेव प्रवर्तते इति वक्तव्यम्। एवमपि 'आद्गुणः' इत्यस्य "खट्वेन्द्र इत्यत्र चारितार्थ्येन" मालेन्द्र इत्यत्र आद्गुण इत्यस्य प्रवृत्तिर्नस्यादतः "तल्लक्ष्ये तल्लक्षणं सकृदेव प्रवर्तते एवं स्वीकारे क्वापि न दोषः। ततस्तल्लक्ष्यत्वं नाम किमित्याकाङ्क्षायां तल्लक्ष्येण वर्णसमुदायो गृह्यते, अन्यथा उपास्य इत्यत्र सकारद्वित्वे विसर्गद्वित्वन्न स्यात् पूर्वमाश्रितस्यैवेदानीमाश्रयणं-वर्णसमुदायग्रहणे तु पूर्वं अस् इत्यत्र इदानीं अः इत्यस्य चाश्रयणे लक्ष्यभेद इति न दोषः। एवं-सति पथे इत्यत्र पुनः टिलोपापत्तिः स्यात् प्रथमं पथिन् इत्यस्य इदानीं पथ इत्यस्य सत्वात्, स्वीयोद्देश्यतावच्छेदकावच्छिन्नत्वेनाश्रीयमाणो यावान् शब्दसमुदायस्तादृशसमुदायाघटकवर्णाघटितत्वमिति स्वीकारेणादोषात्। पूर्वं भस्यटेर्लोप इति शास्त्रीयो द्देश्यतावच्छेदकेन भत्वेन अवच्छिन्नवर्णसमुदायः पथिन् इति पश्चात् समुदायः पथिति पूर्वाश्रितसमुदायाघटको वर्णः पश्चादाश्रितसमुदाये नास्तीति भिन्नलक्ष्यत्वाभावेन पुनष्टिलोपो न स्यादेवं कृते, सुद्ध्युपास्य इत्यत्र धस्य द्वित्वे जश्त्वे दकारस्य द्वित्वं-

( पा० सू० ६।१।८४ ) इति सूत्रे भाष्ये सिद्धान्तितत्वात् । अन्यथा द्वित्वानामानन्त्यापत्तेः । न च "झरो झरि" ( पा० सू० ८।४।६५ ) इति "हलो यमाम्—"

---

एकवाक्यतयैव बोधादेकत्वविवक्षणेनोभयसम्बन्ध्येककटकरणप्रतीतिस्तथा आदचि पूर्वपरयोर्गुण इत्यादावपि द्वन्द्वनिर्देशाद्विधेयगतसंख्याविवक्षणाच्चोभयोः स्थाने एक एवादेशो-

---

प्रयोगङ्गुणादिविधायकशास्त्राणां प्रवृत्तिर्भविष्यतीत्याद्युक्त्या "लक्ष्ये लक्षणस्य इति न्यायस्याविषयोऽयमितिप्राचीनोक्तिखण्डनपरः "पुनर्द्वित्वमित्यादि ग्रन्थो न युक्त इति केचित् तन्न भाष्याशयानवबोधादिति प्रकटयितुं भाष्याशयं वर्णयति तत्र हीत्यादिना । तत्र="एकः पूर्वपरयोः" इति सूत्रभाष्ये ।

---

विकल्प होने से चार रूप होते हैं। जो यहाँ पर कहते हैं, धकार यकार दोनों का द्वित्व करने पर दो धकारक दो यकारक, दोनों को फिर द्वित्व करने पर तीन धकारक, तीन यकारक धकार यकार के मध्य में किसी एक को द्वित्व करने पर एक धकारक, दो यकारक, तीन यकारक. एक यकारक दो धकारक तीन धकारक, दोनों को द्वित्व करने पर अन्यतर को पुनः द्वित्व करने पर दो धकारक तीन यकारक, तीन धकारक दो यकारक रूप होते हैं, अर्थात् सुध् ध् य् य् उपास्यः (१) सुध् ध् ध् य् य् य् उपास्यः (२) सुध् य् य् उपास्यः (३) सुध् य् य् य् उपास्यः (४) सुध् ध् य् उपास्यः (५) सुध् ध् ध् य् उपास्यः (६) सुध् धं य् य् य् उपास्यः (७) सुध् ध् ध् य् य् उपास्यः (८) दोनों को द्वित्व न होने पर सुध् य् उपास्यः (९) "झरोझरि सवर्णे" ८।४।६५ हलोयमाम् ८।४।६४ से लोप विकल्प तथा अन्यतर द्वित्व का समान फल है, केवल सम्भावना मात्र को लेकर विकल्पोक्ति है।

अन्तरङ्ग द्वित्व करने पर बहिरङ्ग यण् असिद्ध नहीं होगा। त्रैपादिक अन्तरङ्ग रहने पर बहिरङ्ग परिभाषा नहीं लगती, "खरवसानयोर्विसर्जनीयः" ८।३।१५ इस सूत्र पर भाष्यकार ने स्पष्ट कहा है कि "न चात्रान्तरङ्गयोर्युगपत्समवस्थानमस्ति, किं कारणम् असिद्धत्वात्" उनका कहना ठीक नहीं, धकार यकार को द्वित्व करने पर फिर द्वित्व करना ठीक नहीं, क्योंकि एक लक्ष्य में एक लक्षण एक वार ही प्रवृत्त होता है। "एकः पूर्वपरयोः" ६।१।८४ इस सूत्र के भाष्य में सिद्धान्तित है।

---

स्यात्तदा वैशिष्ट्यनिवेशो विधेयः वैशिष्ट्यञ्च स्वाघटकत्वस्वघटकोद्देश्यकविकारातिरिक्तत्वैतदुभयसम्बन्धेन दकारस्य समुदायघटकत्वं यद्यप्यस्ति तथापि समुदायोद्देश्यकविकारातिरिक्तत्वाभावेनैकसत्वे द्वयं नास्तीति न्यायेन समुदायविशिष्टो दकारो न किन्तु कश्चन उदासीनस्तादृशवर्णाघटितत्वमेवास्तीतिभिन्नलक्ष्यत्वाभावेन न दोषः स्वघटकोद्देश्यकविकारेतरत्वनिवेशनेनाविकारकृतलक्ष्यभेदानाश्रयणे, उद्वोढामितिभाष्यं मानं तत्र सिज्लोपस्यासिद्धत्वात् प्रथमं वृद्धौ कृतायां पुनर्वृद्धिमाशंक्य लक्ष्ये लक्षणमिति न्यायेन वारितम् । अन्यथा विकारस्य सत्वेन न्यायस्याविषयत्वेन कथं वारणं भवेत् ।

एवं काण्डे, इत्यत्र पर्जन्यवल्लक्षणेन ह्रस्वे पुनः ह्रस्वत्वं प्राप्तं तत्र सप्तम्यधिकरणे निवेशेनादोषात्, तव जातगुणस्य तन्मात्रोद्देश्यकत्वाभावेनादोषात् । यून इत्यत्र वस्य सम्प्रसारणे स्वघटकमात्रोद्देश्यकविकारातिरिक्तत्वाभावेन लक्ष्यैकत्वेन यस्य सम्प्रसारणप्राप्त्यभावेन न सम्प्रसारणे सम्प्रसारणमित्यस्य वैयर्थ्यमिष्टापत्तिश्चेत्तर्हि भवेन्नसिद्धयेत् तत्र स लोपे पुनः स लोपो न स्यात् लक्ष्यैकत्वात्, तत्रस्वीयप्राथमिकप्रवृत्तिकालिकप्राप्तिविषयाघटितत्वम् इति निवेशेनादोषात्, पूर्वोक्तसम्बन्धस्य सत्वेऽपि अन्यतरसलोपविषयद्वितीयसकाराघटितत्वाभावेनादोषः यून इत्यत्रापि वस्य सम्प्रसारणकाले यस्यापि तत्प्राप्त्या न दोष, ननु लिटत्सु इत्यत्र धस्य चर्त्वे ङस्य तन्नस्यादिति, चेन्न तत्र स्वीयप्राथमिकप्रवृत्तिप्राक्कालिकप्राप्तिविषयाघटितत्वेनादोषात् ।

भविष्यतीत्येकग्रहणं प्रत्याख्याय शङ्कितम्-शास्त्राधिकारिणः पुरुषान्प्रति प्रवृत्तं संस्कारकं-तत्तच्छास्त्रं प्रतिपुरुषमेकवाक्यतया सकृदेवार्थबोधकं, यथाऽऽधानेनाग्नीन्संस्कुर्यादित्यर्थकं-"वसन्ते ब्राह्मणोऽग्नीनादधीत" इति वाक्यं प्रतिब्राह्मणं सकृदेवार्थबोधकं सकृदेव स्वविषये प्रवर्तकं च। अत एव पुनः पुनर्नाधानादिसंस्कारः, तथा व्याकरणशास्त्रस्य "अवर्णादचि पूर्वपरयोर्गुणो भवति, गुणवान् शब्दश्च साधुर्भवति, स च प्रयोक्तव्यः" इत्येतावत्पर्यन्तं व्यापारात्तत्संस्कृतस्यैकस्य खट्वेन्द्रस्य प्रयोगेण शास्त्रार्थस्य करणान्मा-लेन्द्रादिप्रयोगो न स्यात्। अतस्तत्तल्लक्ष्यविषयवाक्योपप्लवेन वाक्यभेदोऽवश्यं वाच्यः। तद्वत्पूर्वपरविषयेऽपि स्यादिति तत्रैकग्रहणमावश्यकमिति। तत्र गुणो भवतीत्याद्यंशो-लक्ष्यसंस्कारफलक एव यथाऽऽधानमग्निसंस्कारकं, शास्त्रतात्पर्यविषयप्रयोगविधिश्च पुरुष-संस्कारक एवेति तदाशयः। ततः सिद्धान्तितम्। यथा नित्यनैमित्तिककाम्यविधीनां-तदकरणजन्यप्रत्यवायपरिहाराय फलाय च वाक्यभेदेन तत्तद्विषयकशास्त्रोपप्लवात्

---

एक वाक्यतयैवेति। पूलयोः कटेन सहैकवाक्यतास्ति एकधर्मावच्छिन्नस्य (पूल-समुदायस्य) एकधर्मावच्छिन्ने (कटे) एकधर्मावच्छिन्नसंसर्गेण (अवयवावयविभाव-संसर्गेण) अन्वयात्। नित्यनैमित्तिककाम्यविधीनामिति। नित्यनैमित्तिककाम्यभेदेन त्रिविधानि कर्माणि। अनुष्ठाने चित्तशुद्धयतिरिक्तफलाजनकत्वे सति अननुष्ठाने प्रत्यवाय-जनकत्वं नित्यत्वम्। अहरहः सन्ध्यामुपासीत। नैमित्तिककर्मत्वञ्च—अनुष्ठाने फलविशेष-जनकत्वे सति अननुष्ठाने प्रत्यवायजनकत्वम्। यथा राहूपरागे स्नायात्। उपरागः= सूर्यग्रहः चन्द्रग्रहो वा। काम्यकर्मत्वञ्च अनुष्ठाने फलविशेषजनकत्वे सति, अननुष्ठाने-प्रत्यवायाजनकत्वम्। सौर्यं चरुं निर्वपद् ब्रह्मवर्चस्कामः।

---

"एकः पूर्वपरयोः" ६।१।८४ इस सूत्र के भाष्य में भगवान् पतञ्जलि ने लिखा है, "अनयोः पूलयोः कटं कुरु" इत्यादि में पूल की कट के साथ एकवाक्यता होती है, एकधर्मावच्छिन्न (पूल समुदाय) का एक धर्मावच्छिन्न कट में एकधर्मावच्छिन्न (अवयवावयविभाव) सम्बन्ध से, पूल कट का परस्पर अन्वय होने से, विधेयगत संख्या की विवक्षा होने से दो पूलों से बना एक कट यह ज्ञान होता है। उसी प्रकार "आदचिपूर्वपरयोर्गुणः" "पूर्वश्च परश्च पूर्वपरौ" "तयोः, पूर्वपरयोः" यह द्वन्द्व है। विधेयगुण है, विधेयगत संख्या की ही विवक्षा होगी, तथा च दोनों स्थानपर एक ही आदेश होगा, एक ग्रहण नहीं करना चाहिये, इस तरह प्रत्याख्यान करके आशङ्का किये। शास्त्रा-धिकारी पुरुषों के प्रति प्रवृत्त संस्कारक, तत्तच्छास्त्र की प्रत्येक पुरुष के साथ एकवाक्यता हो जाने पर एक बार ही अर्थ का बोधक होगा जैसे, "आधानेनाग्नीन्संस्कुर्यात्" "इत्यर्थक वसन्ते ब्राह्मणोऽग्नी-नादधीत" यह वाक्य प्रत्येक ब्राह्मण को एक बार ही अर्थ बोधन कराता है, तथा प्रवर्तन करता है, अतः आधानादि संस्कार बार-बार नहीं होते।

उसी प्रकार व्याकरण शास्त्र में भी, अवर्ण से अच् परे रहते पूर्व पर के स्थान पर गुण होता है, गुणवान् शब्द साधु होता है, उसका प्रयोग करना चाहिये, यहाँ तक व्यापार होने से, आद्-गुणः से। आद्गुणः से संस्कृत एक "खट्वेन्द्रः" का प्रयोग हो जाने पर आद्गुणः शास्त्र चरितार्थ हो जायगा, "मालेन्द्रः" इत्यादि प्रयोग नहीं होंगे। अतः भिन्न भिन्न लक्ष्यविषयक सूत्र की आवृत्ति होने से भिन्न सूत्र अवश्य मानना चाहिये। उसी प्रकार पूर्व पर की भी आवृत्ति होगी और वाक्य-भेद (सूत्रभेद) रहेगा। अतः पूर्व पर के स्थान पर गुण हो, इसके लिए एक ग्रहण करना चाहिये।

( पा० सू० ८।४।६४ ) इति च लोपेन निर्वाहः। लोपस्य वैकल्पिकत्वात्। कथमन्यथा त्रिधं त्रियं चेति भवदुक्तिः सङ्गच्छेत। किं चैवं सति "सर्वस्य द्वे' पा० सू० ८।१।१ ) इति द्वित्वमपि पुनः पुनः प्रवर्तेत। अत एव "लिटि धातोः–"

---

पुनः प्रवर्तकत्वम्। तथा समाप्यसाधुप्रयोगे प्रत्यवायश्रवणान्नित्यसमत्वं प्रयोगविधेः। "एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुष्ठुप्रयुक्तः स्वर्गे लोके च कामधुग्भवति" इत्यनेन काम्यत्वं चेति तत्तद्विषयानन्तवाक्योपप्लवेन भवत्येव सालेन्द्रादिप्रयोग इति। एवं प्रयोगविध्यंशस्य नित्यकाम्यत्वव्यवस्थापनेन गुणविध्यंशस्य शुद्धसंस्कारार्थत्वमेवोक्तम्। एवं च तस्याधानादिवदेवाग्निस्थानीयलक्ष्येषु सर्वेषु प्रवृत्तावपि एकाग्नाविवैकलक्ष्ये नावृत्तिरिति पूर्वपरयोर्नादेशद्वयप्रसक्तिरिति तत्तात्पर्यम्। एवं च स्पष्टमेव पूर्वपक्षसिद्धान्तयोरयं न्यायः संस्कारकविधिविषये सिद्धान्तित इति भावः। "संप्रसारणाच्च" ( पा० सू० ६।१।१०८ ) इति सूत्रे भाष्येऽपि स्फुटोऽयम्।

---

भाष्येपि स्फुटोऽयमिति। सम्प्रसारणाच्च ६।१।१०८ इति सूत्रे भाष्यकारेणोक्तं "समानाङ्गग्रहणं कर्त्तव्यम्" अर्थात् सम्प्रसारणाद् एकस्मिनङ्गे अच्परे सति, सम्प्रसारणं भवति अतएव शकह्वर्थमित्यत्र "सम्प्रसारणाच्च" इत्यनेन पररूपं न भवति। तद्यथा शकं ह्वयतीति क्विप् यजादित्वात् सम्प्रसारणम् पूर्वरूपं तस्य "अन्तादिवच्च" इति सूत्रेण सम्प्रसारणग्रहणेन ग्रहणात्, सम्प्रसारणासम्प्रसारणयोरेकादेशस्य सम्प्रसारणस्य व्यपदेशभावत्वात् अर्थशब्दे परे पूर्वरूपं न भवति।

तत्रैव समाधानान्तरं कृतम् "कार्यकृतत्वाद्वा" शास्त्रस्यास्मिन् विषये प्रवृत्तिर्नभविष्यतीति तत्तात्पर्यम्।

तत्र दृष्टान्तत्वेन भगवता भाष्यकारेणोक्तम्–'वसन्ते ब्राह्मणोऽग्नीनादधीतेतिसकृदाधाय कृतः शास्त्रार्थः इति कृत्वा पुनः प्रवृत्तिर्नभवति" विषम उपन्यासः। युक्तं यत्तस्यैव पुनः प्रवृत्तिर्न भवति।

---

आद्गुणः यहाँ पर "गुणो भवति" यह अंश लक्ष्यसंस्कारक है जैसे "आधानम्" अग्नि संस्कारक है, आधान कर्म विशेष है, उपनयन संस्कार रूप कर्म विशेष की तरह, जिस अर्थ में शास्त्र का तात्पर्य हो वह अर्थ तात्पर्य विषय कहलाता है। शास्त्र तात्पर्य विषय "देवदत्तः गच्छति" इत्यादि प्रयोगविधिपुरुष संस्कारक है। अर्थात् धर्मजनकक्रिया प्रवृत्ति सम्पादक है। अतः एक ग्रहण सार्थक है, प्रत्याख्यान उचित नहीं।

नित्य नैमित्तक काम्यभेद से तीन प्रकार के कर्म होते हैं। अनुष्ठान में चित्त शुद्धयतिरिक्त फल न हो, अननुष्ठान में प्रत्यवाय हो, उसको नित्य कहते हैं। जैसे सन्ध्योपासन। अनुष्ठान में फलविशेष की प्राप्ति हो और अननुष्ठान में पाप लगे, उसको नैमित्तक कर्म कहते हैं। जैसे सूर्यग्रहण, चन्द्रग्रहण में स्नान। अनुष्ठान फल विशेष का जनक हो, और अननुष्ठान प्रत्यवाय का जनक न हो उसको काम्य कर्म कहते हैं। नित्य नैमित्तिक अकरण जन्य पाप को हटाने के लिये तथा काम्यकर्मजन्यफल को प्राप्त करने के लिये वाक्यभेद से तत्तद् विषयक शास्त्र की आवृत्ति होने से पुनः प्रवर्तकत्व रहेगा। अर्थात् एक ही पुरुष सूर्य ग्रहणादि में बार-बार स्नान करेगा। असाधु प्रयोग में प्रत्यवायश्रवण होने से नित्यसमत्व है, प्रयोगविधि में।

शिक्षादि मार्ग से सम्यक् ज्ञात एक शब्द का भी अर्थ बोधानार्थ शास्त्रस्मरणपूर्वक प्रयोग करने

( पा० सू० ६।१।८ ) इति सूत्रेऽनभ्यासग्रहणं भाष्ये प्रत्याख्यातम् । सन्नन्ताद्य- ङन्ताद्वा णिचि चङि द्वित्वाभावार्थं तदिति तु कैयटादिभिरुक्तम् । तस्मादिह त्यज वा पञ्चमादीनि रूपाणि स्वीकुरु वा रूपान्त्यमिति नवत्वोक्तिरसङ्गतैव । सकार-

---

वैकल्पिकत्वादिति । एवं च पक्षे द्वित्वानामानन्त्यापत्त्या परिनिष्ठितत्वाभावापत्तिः । न च त्वदुक्तरीत्याऽऽनन्त्यापत्तिप्रयुक्तमपरिनिष्ठितत्वमसकृत्प्रवृत्तौ बाधकमिति लभ्यते । तच्च नात्र, द्वित्वस्य वैकल्पिकत्वेन यावच्छक्तिद्वित्वसहितप्रयोगस्य परिनिष्ठितत्वसंभवात् । अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वं हि परिनिष्ठितत्वमिति वाच्यम् । आनन्त्या- पत्तेरित्यस्य चतुष्पञ्चादिधकारयकाराणामापत्त्या त्रिधमित्यादित्वदुक्तमर्यादाभङ्गापत्ते- रित्यर्थात् । तद्ध्वनयन्नक्ष्यति—नवत्वोक्तिरसङ्गतैवेति । आनन्त्यापत्तिरेव तन्न्यायबीजमिति तु न युक्तम् । उदवोढामित्यादौ उद् अवह् स् तामित्यवस्थायां सिज्लोपादेरसिद्धत्वात्सिचि वृद्धावोकारे "लक्ष्ये लक्षणस्य" इति न्यायेन पुनर्वृद्धिर्नेति "सिचि वृद्धिः-" ( पा० सू० ७।२।१ ) इति सूत्रस्थभाष्यविरोधात् । आनन्त्यापत्तेस्तत्राभावात् । एतद्भाष्यप्रामाण्येन विकारकृतभेदेन न लक्ष्यभेदाश्रयणम् । "समः सुटि" ( पा० सू० ८।३।५ ) इति सूत्र-

---

युक्तं यत्तस्येत्यस्याभिप्रायः कैयटेन स्पष्टीकृतः—पराङ्गमग्न्याधानम् = परस्याग्निहोत्रा- देरङ्गमित्यर्थः । यज्ञमुखप्रतिपत्त्यर्थमिति पुनः क्रियमाणं फलभेदाभावात्तदेवेत्युच्यते । तत्प्रयोजनाभावान्नानुष्ठीयते । तदनन्तरम् "यत्तु तदाश्रयं प्राप्नोति न तच्छक्यं बाधितुं- तद्यथा "वसन्ते ब्राह्मणोऽग्निष्टोमादिभिः क्रतुभिर्यजेत" अग्न्याधाननिमित्तं वसन्ते वसन्ते इज्यते इत्युक्तम् ।

तत्र यत्तु तदाश्रयमिति प्रतीकमादाय यस्मात्फलावाप्तिस्तत्फलभेदाद्भिद्यमानमसकृदनु- ष्ठीयते इति कैयटेनोक्तम् अस्ति चात्र फलं शास्त्रीयप्रक्रियापूर्वकप्रयोगाद्धर्मोत्पत्तेः । तथा च लक्ष्यभेदेन पुनः प्रवृत्तिर्भवति यत्र तु न तथा लक्ष्यभेदस्तत्राप्रवृत्तिरेवेति ।

---

पर स्वर्गलोक में मनोऽभिलषित वस्तुओं को प्राप्त करता है। इससे काम्यत्व की भी प्रतीति होती है। तत्तद् विषयक अनन्त वाक्यों की आवृत्ति होने से। मालेन्द्रादि प्रयोग होते ही हैं। इस तरह प्रयोगविधि अंश को नित्यकाम्यत्व कहने से, गुणविधि अंश में शुद्ध संस्कारार्थत्व है। गुणविधि अंश की आधान की तरह, अग्निस्थानीय लक्ष्य में प्रवृत्ति रहने पर भी, एकाग्नि की तरह एक लक्ष्य में आवृत्ति नहीं होगी, पूर्वपर को आदेशद्वय की प्राप्ति नहीं होगी। इसका तात्पर्य हुआ मालेन्द्रः इत्यादि लक्ष्य में पूर्व को गुण होता है, पर को गुण होता है, यह अर्थ नहीं होगा। अतः स्पष्ट है, पूर्वपक्ष तथा सिद्धान्त पक्ष में "लक्ष्ये लक्षणं सकृदेव प्रवर्तते" यह न्याय संस्कारक विधि विषय में सिद्धान्तित है। "सम्प्रसारणाच्च" ( पा० सू० ६।१।१०८ ) इस सूत्र के भाष्य में स्फुट है।

यदि "लक्ष्ये लक्षणं सकृदेव प्रवर्तते" इसको स्वीकार नहीं करोगे तो, अनन्त द्वित्व होने लगेंगे। यदि कहो कि "झरो झरि सवर्णे" ८।४।६४ के लोप से निर्वाह हो जायगा तो नहीं कह सकते लोप विकल्प होने से। इस पर शब्दरत्नकार लिखते हैं, पक्ष में अनन्तद्वित्व हो जाने से परिनिष्ठित नहीं कहलायगा। यदि कहो आपकी रीति से आनन्त्यापत्तिजन्य अपरिनिष्ठत्व बार-बार प्रवृत्ति का बाधक होगा, वह अपरिनिष्ठत्व यहाँ पर है, क्योंकि द्वित्व विकल्प से होता है, अतः यावत् शक्ति द्वित्व करने में परिनिष्ठतत्व रहेगा। अप्रवृत्त जो नित्य विधि उसके उद्देश्यतावच्छेदक से अनाक्रान्त को परिनिष्ठित कहा जाता है। "सुधी उपास्यः" यह परिनिष्ठित नहीं कहा जायगा, क्योंकि "अज- व्यवहितपूर्वत्वविशिष्टइक्त्व रूप "इकोयणचि" के उद्देश्यतावच्छेदक से आक्रान्त है। "अग्निमीले"

 


-द्वित्वेनाष्टौ विसर्गद्वित्वेन षोडशेति त्वन्यदेतत्। यदप्युक्तं त्रैपादिकेऽन्तरङ्ग इत्यादि। तदपि न। नार्कुटो नार्पत्य इत्यत्र विसर्गवारणाय वृद्धेरसिद्धत्वस्य तत्रैव भाष्ये

---

चास्यां मानम्। अन्यथा "समो वा लोपम्–" इत्यनेनान्त्यलोपे पुनर्द्वित्वेन त्रिसकारस्यापि सिद्धौ तद्वैयर्थ्यं स्पष्टमेव। "इरयोरे" (पा० सू० ६।४।७६) इति सूत्रे इरयोरिति द्विर्वचनं तु स्वविधेयस्य स्वस्मिन्नुद्देश्यत्वाप्राप्त्या तत्प्राप्तये इति न तदस्यां मानम्। न च तत्र "सहिवहोरोत्–" (पा० सू० ६।३।११२) इति तपरत्वसामर्थ्याद् न वृद्धिरिति वाच्यम्। अशाब्दत्वात्, अतत्कालव्यावृत्तेरेव तेन शब्दमर्यादया लाभात्। एतेन सुद्ध्युपास्ये पूर्वधस्य द्वित्वे जश्त्वे लक्ष्यभेदात्पुनर्द्वित्वमित्यपास्तम्। पूर्वमकारस्येदानीमोकारस्येति

---

उद्देश्यत्वाप्राप्त्येति। सतो हि कार्यिणः कार्येण भवितव्यमिति वृद्धिसूत्रस्थमहाभाष्य-बलेन सिद्धस्योद्देश्यत्वं साध्यस्य च विधेयत्वं सिद्धम्।

न चायं रेभाव इडागमविशिष्टस्तच्छास्त्रीय वाक्यार्थबोधकाले सिद्धः, ततो नास्ति तस्योद्देश्यताप्रसक्तिरतोवाक्यभेदादेकेन विहितस्यापरेणोद्देश्यत्वमिति बोधनाय द्विवचनमावश्यकम्।

यद्वा द्विवचनाभावे प्रथममिरेचो रेभावे तस्येडागमे पुनश्च रे भावे तस्येडागमो न भवत्यानन्त्यापत्तेरानन्त्यापत्तौ हि शास्त्राणि न प्रवर्तन्ते व्यवस्थाकारिणा शास्त्रेण भवितव्यमिति तत्र तत्राकरे निरूपितत्वादित्यवश्यमभ्युपेयम्।

तथा च 'अन्ते रण्डाविवाहश्चेदादावेव कुतो न सः" इति प्रथममिरेचोरेभाव एव न स्यात्। शास्त्रन्तु चक्रे इत्यादौ चरितार्थमेव।

द्विवचने तु इरेचस्तत्स्थानिकस्येडागमविशिष्टरेभावस्य च रे भावे पुनरिडागमो न भवत्यानन्त्यापत्तेरित्यभीष्टं सिद्ध्यतीत्यावश्यकं द्विवचनमिति तात्पर्यम्।

---

इत्यादि स्थलों में "तिङ्ङतिङः" से अनुदात्त हो जाने पर पुनः अनुदात्त न हो अतः अप्रवृत्त का निवेश किया गया। "स्वरति सूति" इस सूत्र की पाक्षिक प्रवृत्ति होने से इट् के अभाव पक्ष में "सेद्धा" परिनिष्ठित, अर्थात् साधु नहीं कहलायेगा। अतः "नित्यविधि" निवेश किया गया।

आनन्त्यापत्ति का अभिप्राय होता है, चार पांच धकार यकारों की आपत्ति होने से "त्रिधम्" इत्यादि आपकी मर्यादा नष्ट हो जायगी। इसका आगे मनोरमाकार नव की उक्ति असङ्गत है, इन शब्दों द्वारा कहेंगे। आनन्त्यापत्ति ही इस न्याय का मूल है यह कहना युक्त नहीं, उदवोढामित्यादि में उद् "अवह् स् ताम्" इस अवस्था में सिच् लोपादि असिद्ध हो जाने पर "वदव्रजहलन्तस्याचः ७।२।३ से वृद्धि हो जाने पर "लक्ष्ये लक्षणम्" इस न्याय से फिर वृद्धि नहीं होगी, "सिचिवृद्धिः" ७।२।१ सूत्रस्थ भाष्यविरोध होने से। क्योंकि यहाँ पर आनन्त्यापत्ति नहीं है। इस भाष्य के प्रामाण्य से स्पष्ट होता है कि विकार कृत भेद रहने पर लक्ष्य भेद नहीं होता। "समः सुटि (पा० सू० ८।३।५) यह सूत्र" लक्ष्ये लक्षणं सकृदेव प्रवर्तते इसमें प्रमाण है। अन्यथा "समो-वा लोपम्" इस वार्तिक से अन्त्य का लोप हो जाने पर फिर द्वित्व करने पर त्रिसकारक रूप बन जायगा "समः सुटि" व्यर्थ हो जायगा।

"इरयोरे" ६।४।७६ इस सूत्र में द्विवचन "प्रथमं दध्र आपः" घटक दध्रे को साधुत्व करने के लिये है। धा धातु से लिट् झादेश "इरेच" आदेशानुबन्ध लोप "इरयोरे" से रे को इडागम हो जाने पर भी "यदागम" न्याय से रे शब्दत्व होने के कारण इसमें उद्देश्यता अप्राप्त रहेगी, अतः उद्देश्यत्व प्राप्त्यर्थ द्विवचन किया गया है। अतः द्विवचन निर्देश लक्ष्ये लक्षणं का प्रमाण नहीं

स्पष्टत्वात्। "संयोगान्तलोपे यणः प्रतिषेधः" इत्यस्य बहिरङ्गत्वेन प्रत्याख्यातत्वात्। स्वयमपि तथैवानूदितत्वाच्च। तस्मादिह यथोद्देशपक्षो ग्राह्यो बहिरङ्गपरिभाषायाः

---

लक्ष्यभेदस्योदवोढामित्यादावपि सत्त्वेनोक्तभाष्यविरोधात्। विकारान्यानुपूर्व्यैक्येन लक्ष्यैक्यं तु मसाप्यस्त्येवेति दिक्। इति द्वित्वमपीति। एतेनाष्टमिकवर्णद्वित्वं स्थाने द्वित्वमिति लक्ष्यभेदोऽस्तीति परास्तम्। पदद्वित्वस्याप्यावृत्त्यापत्तेः। वस्तुतस्तत्षाष्ठद्वित्ववन्न स्थाने द्विर्वचनमित्यन्यत्र निरूपितम्। प्रत्याख्यातमिति। "अनभ्यासप्रतिषेधोऽनर्थकश्छन्दसि वा वचनात्, नोनूयतेर्नोनावेत्यादौ न दोष" इति भाष्यम्। "एकस्यैकाचो द्वित्वे कृते एकाज्व्यपदेशे हेतोरचो द्विरुक्तत्वाद्, अनेन न्यायेनाचः पुनः पुनर्द्वित्वाप्राप्तौ अवयवान्तरस्यैकाच्त्वाभावेन तदप्रवृत्तौ तद् व्यर्थम्" इति च तदाशयः कैयटेनोक्तः। कैयटादिभिरिति। अत्रारुचिबीजं तु भाष्यप्रामाण्येन, "तेषामनभिधानं, "स्तौतिण्योः—" (वा० सू० ८।३।६१) इति सूत्रस्थः सोषुप्यतेः सन् 'सोषुपिषते' इति भाष्यप्रयोगोऽपि छान्दस इत्याहुः। रूपानन्त्यमिति। रूपाधिक्यमित्यर्थः। तदाह—नवत्वोक्तिरसङ्गतैवेति। सकारद्वित्वे इति।

---

ननु पिपठिषतीत्यादौ पि शब्दादेस्तल्लक्ष्यत्वेऽपि उत्तरखण्डीयव्यञ्जनान्तरोपहितस्य पिप् इत्यादेर्विकारान्यानुपूर्वीघटिततया तल्लक्ष्यत्वे मानाभावेन प्रसक्तस्य द्वित्वस्य व्यावृत्तये आवश्यकत्वात्कथमभ्यासग्रहणस्य प्रत्याख्यानमत आह—एकस्यैकाचः इत्यादि।

---

बन सकता है। जहाँ पर उद्देश्यताच्छेदक विधेयतावच्छेदक धर्म एक होता है। वहाँ पर विधेय में उद्देश्यत्व नहीं रहता, जैसे "घटो घटः" यहाँ पर। यदि कहो कि "उदवोढाम्" यहाँ पर तपरत्व-सामर्थ्य से ही वृद्धि का निषेध हो जायगा, "लक्ष्ये लक्षणम्" न्याय से वृद्धि का निषेध उपयुक्त नहीं। तो नहीं कह सकते, क्योंकि "तपरस्तत्कालस्य" इससे स्व समकाल सवर्ण का ग्रहण होगा, अर्थात् तत् कालसवर्ण से अतत्काल सवर्ण की व्यावृत्ति होगी, अतः तपरकरण सामर्थ्य से वृद्धि का निषेध नहीं हो सकता। इसी को शब्दरत्नकार ने लिखा, "अशाब्दत्वात्" शब्द मर्यादा से तो तपरकरण अतत्काल का ही व्यावर्तन करेगा। तथा च "लक्ष्ये लक्षणम्" इसको स्वीकार कर लेने पर "सुद्ध्युपास्यः" में पूर्व धकार को द्वित्व जश्त्व हो जाने पर लक्ष्य भेद हो जाने से पुनर्द्वित्व हो जायगा, इस प्रकार कहने वाले परास्त हो गये, क्योंकि प्रथम अकार को वृद्धि हुई, इस समय ओकार को, तथा च "उदवोढाम्" इत्यादि में भी लक्ष्य भेद हो जाने से उक्त भाष्य विरोध हो जायगा।

यदि कहा जाय कि "सुद्ध्युपास्यः" यहाँ पर जश्त्व रूप विकारातिरिक्त वर्णकृत आनुपूर्वी एक होने से एक लक्ष्य है, अतः पुनर्द्वित्व नहीं होगा तो मेरे यहाँ अर्थात् उदवोढाम् यहाँ पर भी विकारातिरिक्त आनुपूर्वी एक होने से लक्ष्यैक है, अतः तपरत्व सामर्थ्य से वृद्धि नहीं होती, यह कहना ठीक नहीं। अन्यथा कैसे तीन धकारक तीन यकारक आपका कहा ठीक होगा अतः लोप-विकल्प आवश्यक है।

किञ्च पुनः पुनः प्रवृत्ति स्वीकार करने पर "सर्वस्य द्वे" ८।१।१ करके जो द्वित्व होता है, वह भी बार-बार होने लगेगा। आष्टमिक पदद्वित्व की भी आवृत्ति होने लगेगी, अतः जो यह कहते थे कि आष्टमिक वर्ण द्वित्व स्थानपर द्वित्व है तथा च धकार के स्थान पर दो धकार हो जाने से लक्ष्य भेद है, यह कहने वाले परास्त हो गये। वास्तविक तो षाष्ठ द्वित्व की तरह वह स्थाने द्वित्व नहीं है, यह द्विरुक्तप्रक्रिया में "सर्वस्यद्वे" ८।१।१ के शब्दरत्न मनोरमा में स्पष्ट है। लक्ष्य में लक्षण बार-बार नहीं लगता, इस कारण से ही "लिटि धातोः" ६।१।८ इस सूत्र में अनभ्यास ग्रहण का भाष्य में प्रत्याख्यान कर दिया। वहाँ का भाष्य ही शब्दरत्नकार ने लिखा "अनभ्यासेत्यादिः" इस भाष्य का

अप्रवृत्तये। तथा च भाष्ये मयः परस्य यणो द्वित्वे दध्यत्रेत्युदाहृतम्। न चैवमपि "इकोऽसवर्णे–" (पा० सू० ६।१।१२७) इति शाकलेन रूपान्तरमस्त्विति वाच्यम्। समासे तन्निषेधात्। न च नित्यसमास एव तन्निषेध इति वाच्यम्। भाष्ये नित्यग्रहणस्य प्रत्याख्यातत्वात्। यथोत्तरं मुनीनां प्रामाण्यात्। नन्विह यणेव दुर्लभः। सुधीशब्दस्य ध्यायतेः सम्प्रसारणेन निष्पन्नत्वेन "सम्प्रसारणाच्च" (पा० सू० ६।१।१०८) इति पूर्वरूपापत्तेरिति चेन्न। "सम्प्रसारणपूर्वत्वे समानाङ्गग्रहणम्" इति वार्तिकोक्तेः। सम्प्रसारणस्थानिकस्यातथात्वाच्च। न चैवमपि "न भूसुधियोः"

---

अच्परयत्वावच्छिन्नं ह्यस्य लक्ष्यम्, तत्रैकस्मिन् धकारे प्रवृत्तावपि तादृशे सकारे लक्ष्यभेदात्पुनः प्रवृत्तिर्भवत्येवेति भावः। एवं संप्रसारणादिविधौ यण्त्वावच्छिन्नमुद्देश्यमिति लक्ष्यभेदाद्यावदुद्देश्यं पुनः प्रवृत्तिर्भवत्येवेति न "न संप्रसारणे" (पा० सू० ६।१।३७) इत्यादेर्वैयर्थ्यमिति बोध्यम्। तदपि नेति। यथोद्देशपक्षे इत्यनुक्त्वा सामान्येन यदुक्तं तदपि नेत्यर्थः। तस्मादिहेति। "यणो मय" इत्यत्रेत्यर्थः। विसर्जनीयसूत्रभाष्यात्तु कार्यकालपक्षेऽपि त्रिपाद्यां तदप्रवृत्तिरिति लभ्यते, मूलं तु कैयटानुसारेणेतिपरे। संप्रसारणस्थानिक-

---

विसर्जनीयसूत्रभाष्यादिति। तत्रहि 'नार्कुटः, नार्पत्यः, इत्यादौ रेफस्य विसर्गनिषेधार्थं "विसर्जनीयोऽनुत्तरपदे" इति वार्तिककारेणोक्तं तत्प्रत्याख्यानपरान्तरङ्गपरिभाषा प्रवृत्तिस्तु न युक्ता "पूर्वत्रासिद्धमिति प्रत्यक्षसिद्धम्" इत्येतद्विरोधात्, अत एवोक्तं तत्र" नवा वहिरङ्गलक्षणत्वात् "इति तेनोभयपक्षेऽपि त्रिपाद्याम्वहिरङ्गपरिभाषाया अप्रवृत्तिरेव।

---

प्रदीपकार ने अभिप्राय लिखा एक एकाच् को द्वित्व करने पर एकाच् व्यवहार में कारणीभूत अच् को द्वित्व होने से "लक्ष्ये लक्षणं सकृदेव प्रवर्तते" इस न्याय से अच् को फिर द्वित्व अप्राप्त रहने पर अवयवान्तर में एकाच्त्वाभाव होने से द्वित्व की अप्राप्ति है, अतः अनभ्यास ग्रहण करना व्यर्थ है। इस तरह अनभ्यास ग्रहण का प्रत्याख्यान कर दिया गया। "अजुगुप्सत" यहाँ पर सन्नन्त से, "अलोलूयत" यहाँ पर यङन्त से णिच् चङ् कर देने पर द्वित्वाभावार्थ अनभ्यास ग्रहण है यह कैयटादि ने कहा है।

कैयटादि कहने से अरुचि मालूम पड़ती है, अरुचि का कारण है "अनभ्यास प्रतिषेधोऽनर्थकः" इस भाष्य प्रामाण्य से, अजुगुप्सदित्यादिका अर्थात् सन्नन्त से ण्यन्त करके लुङन्त का लोक में अनभिधान है। इसी प्रकार यङन्त से भी "स्तौतिण्योः" ८।३।६१ इस सूत्र पर जो भाष्यकार ने लिखा है, यङन्त सोपुप्य धातु से सन् प्रत्यय करके सोपुपिषते बनेगा, वह छान्दस प्रयोग है। इस कारण से पांच से लेकर रूपों को छोड़ो, अथवा अनन्त अर्थात् रूपाधिक्य स्वीकार करो नव रूपों को कहना असङ्गत है। सकार को द्वित्व हो जाने पर आठ और विसर्ग को द्वित्व हो जाने पर १६ रूप होते हैं, यह पृथक् बात है। इसका भाव है कि "अनचि च" अच् परे न हो तो अच् पर यर् उसका लक्ष्य है, तथा च धकार में प्रवृत्त हो जाने पर भी सकार लक्ष्य भिन्न होने से द्वित्व होता है। इसी प्रकार सम्प्रसारणादि विधि में यणत्वावच्छिन्न उद्देश्य होता है, अतः लक्ष्य भिन्न रहने से पुनः प्रवृत्ति होती है। तथा "न सम्प्रसारणे सम्प्रसारणम्" चरितार्थ होता है।

त्रैपादिक अन्तरङ्ग रहने पर बहिरङ्गपरिभाषा नहीं लगती, यह जो आपने यथोद्देश पक्ष न कह कर सामान्येन कहा वह भी ठीक नहीं। क्योंकि "नृकुटि" शब्द से अपत्यार्थ में अण्, आदि वृद्धि तथा नृपति शब्द से अपत्य अर्थ में ण्य प्रत्यय आदि वृद्धि हो जाने पर विसर्ग वारण करने

( पा० सू० ६।४।८५ ) इति, यण्निषेधः शङ्क्यः, आङ्गत्वेन प्रत्यये परत एव तस्य प्रवृत्तेः । अनन्तरस्येति न्यायेन "एरनेकाचः—" ( पा० सू० ६।४।८२ ) इति "ओस्सुपि" ( पा० सू० ६।४।८३ ) इति च सूत्रद्वयेन प्राप्तस्यैव निषेधाच्च ।

---

स्येति । स्थाने जातस्येति शेषः । साक्षात्संप्रसारणस्थानिकपूर्वरूपादेः "हलः" ( पा० सू० ६।४।२ ) इत्यारम्भसामर्थ्यादल्विधौ स्थानिवत्त्वाङ्गीकारेऽपि पूर्वरूपोत्तरं प्रवृत्तस्य "हलः" ( पा० सू० ६।४।२ ) इति दीर्घस्य स्थानिवद्भावेन संप्रसारणत्वे मानाभाव इति भावः ।

---

समानाङ्गग्रहणमिति । अत्र समानपदस्यैकवाचित्वे सम्प्रसारणस्य अचश्च यत्रैकस्मिन्नेव अङ्गे विद्यमानत्वं तत्रैव पूर्वरूपमिति तदर्थः । स्वघटिताङ्गघटकत्वसम्बन्धेन सम्प्रसारणविशिष्टेऽचिपूर्वरूपमिति फलितोऽर्थः । एवमुक्तावपि सुद्ध्युपास्य इत्यत्र समासोत्तरसुप्रत्ययनिमित्तकाङ्गसंज्ञायाः सुधी उपास्य इति विशिष्टे सत्वेन सम्प्रसारणाचोरेकाङ्गघटकत्वस्य सत्त्वेन पुनरपि दोषस्तदवस्थ एव । यदि तु सम्प्रसारणविशिष्टेऽचि पूर्वरूपं वैशिष्ट्यञ्च स्वनिमित्तप्रत्ययनिमित्ताङ्गसञ्ज्ञावद्घटकत्वमिति । तथा चाङ्गसञ्ज्ञानिमित्तस्य सुप्रत्ययस्य सम्प्रसारेण निमित्तत्वाभावेन प्रकृते न दोष इत्युच्यते । तर्हि कारीषगन्धीपुत्र इत्यत्र पूर्वरूपानापत्तेः, । तत्र सम्प्रसारणस्य पुत्रनिमित्तकत्वेन प्रत्ययनिमित्तकत्वाभावादिति । न च स्वघटिताङ्गाघटकत्व–स्वाघटिताङ्गघटकत्व–एतदुभयसम्बन्धेन सम्प्रसारणवैशिष्ट्यमिति प्रकृते न दोष इति वाच्यम्, सुधियोः पुत्र इत्यादावलुक्समासे, ओस् प्रत्ययावयव-

---

के लिये वृद्धि का असिद्धता भाष्यकार ने स्वयं कही है । "संयोगान्त लोपे यणः प्रतिषेधो वाच्यः" इसका बहिरङ्गत्वेन प्रत्याख्यान भी किया है । स्वयं भी आपने उसका अनुवाद किया । अतः बहिरङ्ग परिभाषा की अप्रवृत्ति के लिये यथोद्देश पक्ष ग्राह्य है । अतः भाष्य में मय् से परे यण् को द्वित्व करने में दद्ध्यत्र यह उदाहरण दिया । "तस्मादिह" का अभिप्राय शब्दरत्नकार लिखते हैं, "यणो मयो द्वे वाच्यः" यहाँ पर विसर्जनीय सूत्र के भाष्य से तो कार्यकाल पक्ष में भी त्रिपादी में बहिरङ्ग परिभाषा की अप्रवृत्ति होती है । मूल तो कैयटानुसार लिखा गया है ।

न च लक्ष्य में लक्षण की बार-बार प्रवृत्ति नहीं होती, यह स्वीकार कर लेने पर भी 'इकोसवर्णे" ६।१।१२७ इससे ह्रस्व समुचित प्रकृतिभाव होने से रूपान्तर भी होना चाहिये । यह नहीं कहना चाहिए समास में उसका निषेध हो जाने से । यदि कहो कि नित्य समास में ही वह प्रतिषेध होगा, तो नहीं कह सकते, क्योंकि नित्यग्रहण का भाष्यकार ने प्रत्याख्यान किया है, और उत्तरोत्तर मुनियों का प्रामाण्य माना जाता है ।

यदि कहो कि 'सुद्ध्युपास्यः" यहाँ पर यण् ही दुर्लभ है, क्योंकि सम्प्रसारण से निष्पन्न होने के कारण "सम्प्रसारणाच्च" से पूर्वरूप होने लगेगा, तो नहीं कह सकते, क्योंकि वार्तिककार ने कहा है सम्प्रसारण को पूर्वरूप वहाँ पर होता है, जहाँ पर समानाङ्ग हो । इसका अभिप्राय है, समान शब्द एकवाची है । तथा च जहाँ पर एक ही अङ्ग में सम्प्रसारण तथा अच् हो उसको पूर्वरूप होता है, यहाँ पर तो उपास्यः भिन्न अङ्ग है, सुधी भिन्न अङ्ग है, अतः "सम्प्रसारणाच्च" से पूर्वरूप नहीं होगा । विशेष "संस्कृत टीका में देखें" और सम्प्रसारण के स्थान पर किये गये "हलः" करके दीर्घ में सम्प्रसारणत्वाभाव भी है । क्योंकि साक्षात् सम्प्रसारणस्थानिक पूर्वरूपादि को दीर्घ कर्तव्यता रहने पर "हलः" ६।४।२ इस सूत्रारम्भ सामर्थ्य से अल्विधि में स्थानिवद्भाव स्वीकार कर लेने पर भी पूर्वरूप के बाद प्रवृत्त "हलः" से दीर्घ हो जाने पर उसमें स्थानिवद्भाव से सम्प्रसारणत्व लाने में कोई प्रमाण नहीं है ।

धात्रंश इति। अत्र रेफस्य द्वित्वं न। द्वित्वप्रकरणे रहाभ्यामिति साक्षाच्छ्रुतेन निमित्तभावेन रेफस्य कार्यित्वबाधात्। सुध्युपास्य इत्यादौ तु स्थानित्वेन निमित्तत्वमिकः "तस्मादित्युत्तरस्य" (पा० सू० १।१।६७) इत्यादिनिर्देशाज्ज्ञापकान्न बाध्यत इति कयटः। तकारस्य तु भवत्येवेत्युक्तम्। तच्च वेत्यतोऽत्र रूपद्वयम्। लाक्षतिरिति त्वेकमेव॥

---

द्वित्वं नेति। "यणो मय" इति प्राप्तं नेत्यर्थः। द्वित्वप्रकरणे इति। तथा च भाष्यम्—"रेफस्यानुनासिकपरसवर्णद्विर्वचनप्रतिषेधो वक्तव्यः" स्वर्नयति। कुण्डं रथेन। मद्रह्रदः। भद्रह्रदः। न वक्तव्यः रेफोष्मणां सवर्णा न सन्ति। नेमौ रहौ कार्यिणौ किं तर्हि निमित्तं द्विर्वचनस्येति"। अन्यथा वचनारम्भे द्विर्वचनमात्रस्य निषेधेन फलभेदे प्रत्याख्यानानापत्तेः। साक्षाच्छ्रुतेन = विशेषशब्दबोधितेन। यत्र यत्र द्वित्वनिमित्तत्वं तत्र सर्वत्र वाक्यान्तरेण "अनचि" (पा० सू० ८।४।४७) इत्यनेन कार्यित्वप्रसक्तेरनवकाशेन तेन भाष्यप्रामाण्यात्सामान्यत एव द्वित्वकार्यित्वं बाध्यते इति भावः।

---

ओकारे अलुक्समासोत्तरजायमानसुप्रत्ययनिमित्तकाङ्गसञ्ज्ञामादाय, स्वघटिताङ्गघटकत्वस्य स्वाघटितपुत्र इत्येतदङ्गाघटकत्वस्य च सत्त्वेन सम्प्रासारणवैशिष्ट्यात्पूर्वरूपापत्तिरिति वाच्यम् स्वाव्यवहितोत्तरत्वस्वस्थानित्वेनाभिमताव्यवहितोत्तरत्वेन द्वयस्य एतदुभयसम्बन्धेन सम्प्रसारणवैशिष्ट्यस्य विवक्षणीयत्वात्। ओकारे च द्वितीयसम्बन्धाभावान्न दोषः। सुधियावित्यादावपि—एवमेव पूर्वरूपं वारणीयमिति दिक्।

बाधादिति। व्यापकधर्मावच्छिन्ने व्याप्यधर्मावच्छिन्नातिरिक्तत्वेन सङ्कोचादिति भावः। यर्त्वावच्छिन्ने रेफातिरिक्तत्वेन सङ्कोचः। यत्र यत्र रेफे निमित्तता तत्र सर्वत्र "अनचि चेति" रेफे कार्यिताप्राप्तातः यर्त्वावच्छिन्ने रेफातिरिक्तत्वेन सङ्कोचः कर्तव्यः तथापि भाष्यप्रामाण्यात् सर्वत्र निमित्ततया कार्यितायाः बाधः। अन्यथेति न केवलं अनचि चेत्यत्र निमित्ततया कार्यतायाः बाधोऽपि तु सर्वत्रैवान्यथा वार्तिकारम्भे सर्वत्र द्विर्वचनप्रतिषेधः स्यात् प्रत्याख्याने तु अनचिचेत्यनेन यत्प्राप्तं तस्यैव वारणं स्यात्

---

यदि कहो कि "न भूसुधियोः" इससे यण् निषेध हो जायगा तो नहीं कह सकते, क्योंकि यह सूत्र अङ्गाधिकारी है, अतः प्रत्यय परे रहने पर इसकी प्रवृत्ति होगी। और "अनन्तरस्य विधिर्भवति प्रतिषेधो वा" इस न्याय से "एरनेकाचः" ६।४।८२ "ओस्सुपि" ६।४।८३ इन दो सूत्रों से प्राप्त यण् का ही निषेध करेगा "इकोयणचि" से प्राप्त यण् का निषेध नहीं करेगा।

मय इति पञ्चमी, यण इति षष्ठी, अर्थात् मय् से परे जो यण् उसको द्वित्व होता है, इस पक्ष का आश्रयण करके "धात्रंशः" में रेफ को द्वित्व प्राप्त होता है। किन्तु द्वित्व प्रकरणस्थ "अचोरहाभ्यां द्वे" ७।४।४६ इसमें साक्षात् श्रुत निमित्त भाव से रेफ की कार्यिता का बाध होता है। अर्थात् व्यापकधर्मावच्छिन्न यर् में व्याप्यधर्मावच्छिन्न रेफातिरिक्तत्वेन सङ्कोच होता है। इस बात को "हयवरट्" सूत्र के भाष्य में लिखा है। रेफ को अनुनासिक परसवर्ण द्वित्व का प्रतिषेध कहना चाहिये। अर्थात् स्वर्नयति में, अनुनासिकं, कुण्डंरथेन में परसवर्ण, मद्रह्रदः, भद्रह्रदः, में द्वित्व का प्रतिषेध करना चाहिये, इस प्रकार इसकी आवश्यकता दिखाकर भाष्यकार ने कहा, इस वार्तिक की आवश्यकता नहीं है, रेफ तथा ऊष्मा संज्ञकों के सवर्ण नहीं होते रेफ हकार कार्थी नहीं है, किन्तु द्वित्व का कारण है हकारोपादान दृष्टान्तार्थ है, जैसे हकार में कार्यित्व नहीं, उसी प्रकार रेफ में भी कार्यित्व नहीं

न बाध्यत इति । इदं च व्यक्तिपक्षेऽप्यावश्यकम् । अन्यथा "अकः सवर्णे—" (पा० सू० ६।१।१०१) इत्येतत्पर्यालोचनया श्रीश इत्यादिविषयकयणशास्त्राभावकल्पनवत्संग्राहकवाक्ये इकः स्थानित्वश्रवणात्तद्विषयकलक्षणाभावस्यैव कल्पनं स्यादिति स्पष्टम् "इको यणचि" (पा० सू० ६।१।७७) इत्यत्र कैयटे। कैयट इति। अत्रारुचिबीजं तु अत्र स्थानित्वस्य नानवकाशत्वं, मध्वत्रेत्यत्र निमित्तत्वाप्राप्त्या तत्र स्थानित्वस्य चारितार्थ्यात्। तक्रकौण्डिन्यन्यायोऽप्यनवकाशविषय एव इति स्पष्टं तद्धितेष्वचाम्—" (पा० सू० ७।२।११७) इति सूत्रे भाष्ये। तदप्राप्तियोग्यविषयाभावरूपं चानवकाशत्वमेतद्विषये। न च तक्रकौण्डिन्यन्यायो विधेयविषय एव विशेषविहितेन सामान्यविहितं बाध्यत इत्यभियुक्तव्यवहारादिति वाच्यम्। अपूर्वबोध्यत्वेन निमित्तत्वादेरपि विधेयत्वात्। नहि निमित्तत्त्वमपि मानान्तर-

फलभेदसत्वात् प्रत्याख्यानापत्तेः। ज्ञापकान्नेति। ननु "इको यणचो"त्यत्रापि व्यापकधर्मावच्छिन्ने व्याप्यधर्मावच्छिन्नातिरिक्तत्वेन सङ्कोचादिगतिरक्तेऽचि यण् भवतीत्यर्थे सति "सुद्ध्युपास्य इत्यादौ यणन्स्यादिति चेन्न तस्मादित्युत्तरस्येति निर्देशेन ज्ञापकात् यण् भवति। ज्ञापनाकारश्च, अचि इगतिरिक्तत्वेन सङ्कोचो न भवति। यथा जातिपक्षे ज्ञापकमावश्यकं तथा व्यक्तिपक्षेऽपि, आवश्यकम्। न च प्रतिलक्ष्ये लक्षणावृत्तिसामर्थ्यात् सुद्ध्युपास्य इत्यादौ यण् स्यात् ज्ञापकाश्रयणमयुक्तमिति वाच्यम् यथा व्यक्तिपक्षे" "अकः सवर्णे दीर्घ" इत्यस्य लक्ष्ये श्रीश इत्यादौ यण्शास्त्राभावकल्पनं भवति तथैव "इकोयणचीत्यत्र स्थानित्वश्रवणाद्यत्रेगित्यस्य निमित्ततायां श्रवणं तत्रेकोयणचीत्यस्याभावकल्पनात्। संग्राहकवाक्ये = लक्ष्यसंस्कारकमहावाक्ये चारितार्थ्यादिति। नहि रेफस्यनिमित्तत्ववदिकः स्थानित्वं निरवकाशमिति भावः।

है। केवल "अनचि च" इसमें निमित्तता से कार्यता का बाध नहीं होता, किन्तु सर्वत्र ही निमित्तता से कार्यता का बाध होता है। अन्यथा वार्तिकारम्भ में सर्वत्र द्विवचन का प्रतिषेध होगा, प्रत्याख्यान में तो "अनचि च" से जो प्राप्त है, उसी का वारण होने से फल भेद स्पष्ट रहने पर प्रत्याख्यान नहीं हो सकेगा। विशेष शब्द से बोधित निमित्त भाव से कार्यिता का बाध होगा। जहाँ जहाँ पर द्वित्व में निमित्तता है। वहाँ वहाँ पर "अनचि च" इस वाक्यान्तर से कार्यित्व की प्राप्ति है, अतः भाष्यप्रामाण्य से अनवकाश निमित्तत्व से सामान्यतया द्वित्व में कार्यता का बाध होगा।

इसका अभिप्राय है, यद्यपि, अपवाद स्वविषय में ही निवर्तक होता है, स्वविषय से अन्यत्र नहीं प्रमाणाभाव होने से, अतः "हर्यनुभवः" इत्यादि में जहाँ पर रेफ में निमित्तता है, वहाँ पर कार्यिता की निवृत्ति होनी चाहिये, धात्रंशः में कार्यिता की निवृत्ति नहीं होनी चाहिये तथापि "मद्ध्रदः" इत्यादि में अर्थात् निमित्तत्वाप्राप्त विषय में कार्यित्व निवर्तन पर भाष्य प्रामाण्य से रेफ हकार को जातिपरक मान लेने पर रेफत्व जाति में निरवकाशता होने से निमित्तता से सर्वत्र कार्यता का बाध हो जायगा। "इको यणचि" यहाँ पर भी व्यापकधर्मावच्छिन्न में व्याप्यधर्मावच्छिन्नतातिरिक्तत्वेन सङ्कोच होने से अर्थात् अच् में इगतिरिक्तत्वेन सङ्कोच होने पर "सुद्ध्युपास्यः" यहाँ पर यण् नहीं होगा यदि कहो तो नहीं कह सकते, क्योंकि "तस्मादित्युत्तरस्य" इस निर्देश के बल से यण् हो जायगा। "तस्मादित्युत्तरस्य" इस निर्देश से जो यह ज्ञापन हुआ है कि "अचि इगतिरिक्तत्वेन सङ्कोचो न भवति" जैसे यह जातिपक्ष में आवश्यक है, उसी प्रकार व्यक्तिपक्ष में भी। यदि कहो कि "इकोयणचि" इसकी उपस्थिति प्रत्येक लक्ष्य के लिये होगी तथा च उपस्थिति सामर्थ्य से "सुद्ध्यु-

सिद्धमिति दिक्। एवमेवेति। यणतत्प्राग्वर्तियरो द्वित्वप्रयुक्तरूपभेदाभावादिति भावः। वकारस्तु नात्र। अन्यूनानतिरिक्तस्थानकादेशलाभेनाधिकस्थानकस्याप्रवृत्तेः। लण्सूत्रस्थ-भाष्यविरोधेनेदृशानामनभिधानमिति तत्त्वम्।

तदप्राप्तियोग्येति। तच्चोत्सर्गाप्राप्तिविषयस्वप्रथमप्राप्तिकालिकप्राप्तियोग्यलक्ष्यशून्यत्वं-तेनोत्सर्गप्रवृत्त्युत्तरं चारितार्थ्येऽपि न क्षतिः। सर्वथानिरवकाशत्वमेव तु नापवादस्य बाधकता प्रयोजकम्। तक्रकौण्डिन्यन्यायोपपादनपरभाष्यस्वारस्यभङ्गापत्तेरिति ध्येयम्। नहि निमित्तवदिति। निमित्तानि वर्णास्ते चाक्षरसमाम्नायाल्लोकतो वा निर्ज्ञातं शक्याः लोके दण्डादेर्घटादिकं प्रतिनिमितत्वमन्वयतिरेकाभ्यामवगम्यते। शास्त्रे तु तदसम्भवाद-पूर्वबोध्यत्वं निमित्तत्वमितिभावः।

पास्यः" इत्यादि में यण् हो जायगा, ज्ञापकाश्रयण अनुपयुक्त है। तो नहीं कह सकते, क्योंकि जैसे व्यक्तिपक्ष में "अकः सवर्णे दीर्घः" का लक्ष्य "श्रीशः" इत्यादि में बाध्य शास्त्र अर्थात् यण्विधायक शास्त्राभाव की कल्पना होती है। उसी प्रकार अजव्यवहित पूर्वत्व विशिष्ट इक् को यण् होता है, इस सङ्ग्राहक वाक्य अर्थात् लक्ष्यसंस्कारक महावाक्यस्थ इक् में स्थानिता का श्रवण होने से बाध्य इक् निमित्तत्व विषयक "इको यणचि" के अभाव की कल्पना हो जायगी। "सुद्ध्युपास्यः" इत्यादि साधुत्वार्थ अनवकाशत्वेन स्थानिता से निमित्तता का बाध नहीं हो सकता, मध्वत्र यहाँ पर इक् रूप निमित्तता के अभाव में यण् विषय में स्थानिता को चरितार्थ होने से।

अनवकाशत्वेन बाध का अभिप्राय है, तृतीय बाध बीज, "अर्थात् तदप्राप्तियोग्ये आचारितार्थ्ये कृतेऽचारितार्थ्यम्" उत्सर्गशास्त्र की अप्राप्ति स्थल में अपवाद शास्त्र की भी अप्राप्ति हो। जैसे जहाँपर "ङेराम्नद्यांनीभ्यः" की अप्राप्ति होती है, वहाँ पर "याडापः" की अप्राप्ति है। "याडापः" को कर देने पर "ङेराम्नद्यांनीभ्यः" की प्राप्ति नहीं है। अतः "ङेराम्नद्यांनीभ्यः" याडापः का अनवकाश-त्वेन बाध करता है। तक्रकौडिन्यन्याय का स्वरूप है, "तदप्राप्तियोग्येऽचारितार्थ्ये कृते चारितार्थ्यम्" जैसे "ह्रस्वनद्यापो नुट्" की अप्राप्ति रहने पर "आमि सर्वनाम्नः सुट्" इसकी भी अप्राप्ति रहती है, "ह्रस्वनद्यापो नुट्" से नुट् हो जाने पर "यदागम" परिभाषा से आम्त्व लाकर सुट् हो जायगा। अनवकाशत्वेन बाध रहने पर अपवाद शास्त्र की प्रवृत्ति के पश्चात् यदि उत्सर्गशास्त्र की प्राप्ति रहती है, तो उत्सर्ग शास्त्र प्रवृत्त हो जाता है, जैसे रमायाम्, यहाँ पर "याडापः" प्रवृत्त हुआ।

तक्रन्याय से अपवाद रहने पर पूर्व तथा पश्चात् कभी भी कार्य नहीं होता, उत्सर्ग शास्त्र द्वारा। जैसे "सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयताम्, कौण्डिन्याय तक्रम्" कौडिन्य को न तक्रदान के पूर्व दधि मिलता है, और न तक्रदान के पश्चात्। अतः "सर्वेषाम्" में नुट् नहीं होता। तक्रकौडिन्य-न्याय की प्रवृत्ति भी अनवकाश विषय में होती है, यह "तद्धितेष्वचाम्" ७।२।११७ इस सूत्र के भाष्य में स्पष्ट है। उत्सर्ग शास्त्र अप्रवृत्ति योग्य विषय में अपवाद शास्त्र की प्रवृत्ति न होना ही अनवकाशत्व है। यदि कहो कि तक्रकौडिन्य न्याय की प्रवृत्ति विधेय विषय में ही होती है। विशेष विहित से सामान्य विहित का बाध होता है यह शिष्टों का व्यवहार है, यहाँ पर दोनों अविधेय है, अतः तक्रकौण्डिन्यन्याय की प्रवृत्ति ही नहीं होगी तो नहीं कह सकते, अपूर्वबोध्यत्व होने से निमि-त्तत्वादि में भी विधेयत्व है, जैसे दण्डादि में घटादि के प्रति अन्वयव्यतिरेक से निमित्तत्व सिद्ध है लोक में, तथा शास्त्र में असम्भव है। अतः अपूर्वबोध्यत्व ही निमित्तत्व है। इसी बात को शब्द रत्नकार ने कहा कि निमित्तत्व की तरह स्थानिता प्रमाणान्तर सिद्ध नहीं है, अर्थात् जैसे असम्भव-होने से निमित्तत्व में अपूर्वबोध्यत्व है, उसी प्रकार स्थानिता में भी अपूर्वबोध्यत्व है।

"हलो यमाम्" (पा० सू० ८।४।६४) लोपः स्याद्वेति। "झयो हः–" (पा० सू० ८।४।६२) इत्यतोऽन्यतरस्यामित्यनुवृत्तेः। एतच्च लण्सूत्रे भाष्ये स्पष्टम्। माहात्म्यमिति। अत्र मलोपो नेत्यर्थः। "हलो यरां यरि सवर्णे लोपः" इति तु न सूत्रितम्। आर्ध्नोत्, मूर्ध्नः, शार्ङ्गम्, आर्त्नीः, इत्यादौ रेफात्परस्य लोपापत्तेः।

"वान्तो यि" (पा० सू० ६।१।६९) यकारादाविति। विशेषणमात्मान्तस्य सञ्ज्ञा स्यादित्येतदर्थकस्य "येन विधिः–" (पा० सू० १।१।७२) इति सूत्रस्या-

---

आर्त्नीः इति। आङ्पूर्वादृतेर्बाहुलकान्निप्रत्ययः। धनुषः कोटी उच्येते। "अर्तिः पीडाधनुष्कोट्योः" इत्यमरे नकाररहितः पाठो दृश्यते। अर्तिरिति पाठान्तरम्।

---

आर्त्नीरिति। "आर्त्नी इमे विष्फुरन्ती अमित्रान्" (ऋ० ६।७५।४) इति वैदिक-प्रयोगानुकरणम्। अत्र बाहुलकात् नि प्रत्यये तदन्तात् "कृदिकारादक्तिनः" इति गण-सूत्रेण ङीषि प्रथमागतद्वित्वविवक्षायामौविभक्तौ छान्दसत्वात् पूर्वसवर्णदीर्घे सिद्धम्।

अर्तेरिति पाठे—ऋधातोर्णिप्रत्यये धातोरर्तादेशे सति अर्तिरित्यस्य साधुत्वम् ज्ञेयम्।

---

अन्य लोग यहाँ पर माठरपरिवेषणन्याय से अच् में इगतिरिक्तत्वेन सङ्कोच करते हैं। "सर्वे ब्राह्मणाः भोज्यन्ताम् माठरकौण्डिन्यौ परिवेविष्टाम्" यह न्याय का स्वरूप है। "इस न्याय से "एक-कार्यविनियोगोद्देशेन प्रवृत्तवाक्यकदम्बघटकव्यापकपदार्थे तत्प्रकरणघटकव्याप्यपदार्थातिरिक्तत्वेन सङ्कोचो भवति" जैसे एक कार्य हुआ ब्राह्मण भोजन रूप कार्य तद् विनियोगोद्देशेन प्रवृत्त वाक्य समूह हुआ "सर्वे ब्राह्मणाः भोज्यन्ताम्, माठरकौण्डिन्यौ परिवेविष्टाम्" तद्घटक व्यापक धर्म है। ब्राह्मणत्व तदाश्रय ब्राह्मण व्यापक हुआ, माठरत्व कौण्डिन्यत्व व्याप्य धर्म है, तदाश्रय माठर कौण्डिन्य व्याप्य है, तदतिरिक्तत्वेन सङ्कोच होगा। इसका "इको यणचि" में समन्वय इस प्रकार होगा, एक कार्य को करने के उद्देश से प्रवृत्त वाक्य समूह हुआ, "इको यणचि" तद्घटक व्यापक पदार्थ हुआ अच्त्वाश्रय अच् तत्प्रकरण घटक व्याप्य पदार्थ हुआ इक् तदतिरिक्तत्वेन सङ्कोच होगा।

तकार को द्वित्व विकल्प से होता है। अतः दो रूप बनते हैं। लाकृति में तो लकार यण् हो जाने से एक ही रूप बनता है। क्योंकि "सुद्ध्युपास्यः" इत्यादि में यण् प्राग्वर्त्ती यर् में द्वित्व प्रयुक्त रूप भेद होने से द्वित्व होता है। "लाकृतिः" में तो यण् तत् प्राग्वर्ती यर् में द्वित्व प्रयुक्त रूप भेदाभाव है। अतः एक ही रूप होगा, द्वित्व नहीं होगा। लृकार के स्थान पर वकार नहीं होता, अन्यूनानतिरिक्त स्थान वाला लकार मिल जाने से अधिक स्थान वाला वकार नहीं होता। लण् सूत्रस्थ "न पदान्ताः परे अणः सन्ति" यह भाष्य विरोध होने से लृस्थानिक लादेशयुक्त अनार्ष प्रयोगों का अनभिधान है।

"झयोहः" (पा० सू० ७।४।६२) इससे अन्यतरस्याम् को अनुवृत्ति आने से लोप विकल्प होता है। यह "लण्" सूत्र के भाष्य में स्पष्ट है। यम् प्रत्याहार बोध्य वर्ण से क्रम से यम् प्रत्याहार बोध्य वर्ण परे रहने पर लोप होने से माहात्म्यम्, में मकार का लोप नहीं होता। क्योंकि मकार परे नहीं है, यकार परे है। "हल् से पर जो यर् उसका लोप होता है, सवर्ण यर् परे रहते, इत्यर्थक "हलो-यरां यरि सवर्णे लोपः" सूत्र नहीं किया, आर्ध्नोत्, मूर्ध्नः, शार्ङ्गम्, आर्त्नीं, इत्यादि में रेफ से परे धकारादि का लोप होने लग जायगा आङ् पूर्वक ऋधातु से बाहुलकात् निप्रत्यय करके आर्त्नी-शब्द का साधुत्व होता है। धनुष की कोटिको अर्थात् छोर को आर्त्नी कहा जाता है। "अर्तिः पीडाधनुष्कोट्योः" इस अमरकोश में नकार रहित पाठ देखा जाता है। अर्तिः यह दूसरा पाठ है।

पवादभूतेन "यस्मिन्विधिस्तदादावल्ग्रहणे" इति वार्तिकेनायमर्थो लभ्यते । ओदौतोरिति । पूर्वसूत्रे तयोरेव वान्तौ प्रति स्थानित्वेन निर्णीतत्वादित्यर्थः । ननु गव्यूतिरित्यत्र "हलि सर्वेषाम्" ( पा० सू० ८।३।२२ ) इति, "लोपः शाकल्यस्य" ( पा० सू० ८।३।१९ ) इति वा लोपः स्यादित्याशङ्क्याह—वान्त इति । लव्यमिति । लुनातेरचो यत् । "सार्वधातुकार्धधातुकयोः" ( पा० सू० ७।३।८४ ) इति गुणः । अवश्यलाव्यमिति । 'ओरावश्यके" ( पा० सू० ३।१।१२५ ) इति ण्यत् ॥

क्षय्यमिति । "शकि लिङ् च" ( पा० सू० ३।३।१७२ ) इति चात्कृत्याः । क्षेयमिति । "अर्हे कृत्यतृचश्च" ( पा० सू० ३।३।१६९ ) इति यत् । हर एहीति । इह "ओमाङोश्च" ( पा० सू० ६।१।९५ ) इति पररूपं प्राप्तम् ॥

---

वार्तिकेत्यनेन तस्य वाचनिकत्वं सूचितम् ।

पूर्वसूत्रे इति । वान्तज्ञानाय तत्पर्यालोचनस्यावश्यकत्वादिति भावः ।

---

आत्मान्तस्येतिः । आत्मा अन्तः यस्य तस्यार्थाद् विशेषणान्तस्य समुदायस्य बोधकः । अन्तशब्दस्यावयववाचित्वात्तदाक्षिप्तस्य समुदायस्येयं संज्ञेति भावः ।

"यस्मिन्विधिस्तदादावल्ग्रहणे" इति । अल्मात्रवृत्तिविषयताप्रयोजके सप्तम्यन्ते विशेषणताप्रयोजके पदे यो विधिः सतदलादौ बोद्धव्यः । वाचनिकत्वमिति । वाचनकीयंपरिभाषा भाष्यकारेणोपदर्शिता ।

---

विशेषण आत्मान्त का बोधक होता है, अर्थात् विशेषण बोधक शब्द है, अन्त्यावयव जिसका एतादृश समुदाय का और स्व स्वरूप का भी अर्थात् विशेषणबोधक शब्द का भी बोधक होता है । इत्यर्थक "येन विधिस्तदन्तस्य" १।१।६२ की अपवादभूता वाचनिकपरिभाषा "यस्मिन् विधिस्तदादावल्ग्रहणे" से यकारादि अर्थ लाभ होता है । जो केवल एक अक्षर में रहनेवाला धर्म है, उसको कहते हैं "अल्मात्रवृत्तिविषयताप्रयोजकधर्म" । प्रत्यय विशेष्य है, यि विशेषण है, विशेषणता प्रयोज्य है । अल्मात्रवृत्तिविषयताप्रयोजकविशेषणताप्रयोजक सप्तम्यन्त पद है यि, वहाँ पर होने वाला वान्तादेश रूप कार्य उसके आदि को होगा । अर्थात् यकारादि प्रत्यय परे रहते वान्तादेश होगा । पूर्वसूत्र "एचोऽयवायावः" ( ६।१।७८ ) में ओकार औकार को वान्त का स्थानी माना है, अतः यहाँ पर वान्तादेश होने से पूर्वसूत्र का वाक्यार्थ पर्यालोचन आवश्यक है । "गव्यूतिः" में "हलि सर्वेषाम्" ( ८।३।२२ ) इससे अथवा "लोपः शाकल्यस्य" ( ८।३।१९ ) से वकार का लोप प्राप्त रहेगा, किन्तु "वान्तः" के पूर्व एक और वकार का प्रश्लेष तथा उसका लोप मान लेने पर श्रूयमाण वकारान्तादेश होता है । अर्थात् वकार का लोप नहीं होता है । विस्तर लघुशब्देन्दुशेखर में देखना चाहिये ।

लूञ् धातु से "अचो यत्" से यत् प्रत्यय "सार्वधातुकार्धधातुकयोः" ( ८।३।८४ ) से गुण हो जाने पर "यकारादि" प्रत्यय परे रहते धातु के एच् को वान्तादेश हो तो "तन्निमित्तस्यैव" अर्थात् यकारादि प्रत्यय निमित्त है, जिसके ऐसा जो एच्, उसको ही वान्तादेश हो, अन्य को नहीं । एतदर्थक "धातोस्तन्निमित्तस्यैव" ६।१।८० से वान्तादेश होने पर लव्यम् का साधुत्व होता है । अवश्यम् उपपद रहते लूञ् धातु से "ओरावश्यके" ( ३।१।१२५ ) से ण्यत् "अचोञ्णिति" से वृद्धि औकार "धातोस्तन्निमित्तस्यैव" से वान्तादेश मयूरव्यंसकादित्वात् समास "लुम्पेदवश्यमः कृत्ये तुङ्काम मनसोरपि" के नियम से कृत्य प्रत्ययान्त परे रहते मकार का लोप होने पर "अवश्यलाव्यम्" का साधुत्व होता है । क्षिधातु से "अचोयत्" से यत् प्रत्यय होता है, किन्तु वह "शकि लिङ् च" ( ३।३

"उरण् रपरः" ( पा० सू० १।१।५७ ) आन्तरतम्यादिति। रेफशिरस्कस्यार् इत्यस्य रेफद्वारा ऋकारेण स्थानसाम्यादित्यर्थः। पक्षे द्वित्वमिति। ऋधेर्धस्येति भावः।

---

ऋधेधस्येति। न च द्वित्वभिन्ने पूर्वत्र कर्तव्ये परमसिद्धमित्यर्थकेन "पूर्वत्रासिद्धम-द्वित्वे" इत्यनेन धातुधकारस्य जश्त्वे दस्येति वक्तुमुचितमिति वाच्यम्। फले विशेषा-भावेन तदनादरणात्। न ह्यत्र जश्त्वात्पूर्वमनन्तरं वा द्वित्वे रूपे विशेषोऽस्ति। तदनन्तरं-जश्त्वप्रवृत्तेः सत्त्वात्। यत्र पूर्वत्रासिद्धप्रवृत्तौ तन्निषेधे वा फले विशेषस्तत्रैवास्याः परि-भाषात्वेन प्रवृत्तेरित्यन्यत्र विस्तरः। यद्वा धस्य तत्स्थानिकस्येत्यर्थ इति दिक्॥

---

तत्रैवास्या इति। यत्र रूपवैजात्यप्रयुक्तः प्रयोगस्यानियमस्तत्रैकप्रयोगस्य कस्यचित् साधुत्वसम्पादनाय परिभाषाप्रवृत्तिराश्रयितव्या, परिभाषाणामनियमे नियमकारणीत्वात्। इह तु पूर्वं पश्चाद्वा जश्त्वे प्रयोगस्यैकविधस्यैव सम्पत्तेरनियमाभावान्नास्तिपरिभाषा-प्रवृत्तिरित्याशयः। ननु शास्त्रप्रक्रियास्मरणपूर्वकप्रयोग एव धर्मोत्पत्त्या स्मर्यमाण-प्रक्रियाक्रमवैजात्यप्रयुक्तःप्रयोगाऽनियमः प्रकृतेप्यक्षतः। किञ्च जश्त्वोत्तरं द्वित्वे सकृदेव जश्त्वप्रवृत्तिरिति लाघवम्। द्वित्वोत्तरं जश्त्वे तु द्विवारं जश्त्वशास्त्रप्रवृत्तिरिति गौरवमतो-लाघवसम्पत्तये परिभाषाप्रवृत्तिराश्रयितुं युक्ता, अनियमे नियमकारिणी परिभाषेति च प्रायोवादः। उभयगतिरिह भवतीत्यस्य कृत्रिमाकृत्रिमन्यायेन नियतविषयेऽपि प्रवृत्ति-दर्शनात्। तस्माद्धेर्धस्येति प्रकृतपरिभाषाया अप्रवृत्त्यभिप्रायको मूलग्रन्थ चिन्त्य एवेत्यत आह यद्वेति।

---

२७२ ) से शक्यार्थ में होता है, अतः गुण करने बाद यान्तादेश निपातन करने पर "क्षय्यम्" बनता है। "अर्हे कृत्यतृचश्च" ( ३।३।१६९ ) से अर्ह अर्थ में यत् प्रत्यय करने पर तो यान्तादेश नहीं होगा, अतः क्षेयम् प्रयोग होता है। हरे एहि इस स्थिति में अयादेश, तथा वैकल्पिक यकार लोप हो जाने पर "ओमाङोश्च" ६।१।९५ से पररूप प्राप्त रहा, किन्तु लोपशास्त्र को असिद्ध हो जाने से नहीं होता।

ऋकार की जो तीस प्रकार की सञ्ज्ञा कह आये हैं, उसके स्थान में होने वाला जो अण् वह रपर होकर ही प्रवृत्त होता है। इत्यर्थक "उरण रपरः" ( १।१।५७ ) के बल से अकार एकार ओकार के मध्य में अकार को रेफ शिरस्क हो जाने से रेफ द्वारा ऋकार का साथ स्थान साम्य हो जाने से अर्‌गुण होता है। वैकल्पिक ऋध् धातु के धकार को द्वित्व होगा, यहाँ पर आशङ्का होती है—कि द्वित्व भिन्न कार्य कर्तव्य रहने पर पूर्वशास्त्र की दृष्टि में परशास्त्र असिद्ध, होता है, इत्यर्थक "पूर्वत्रा-सिद्धमद्वित्वे" इस परिभाषा के बल से द्वित्व कर्तव्य होने से पूर्व त्रिपादी "अचोरहाभ्याम्" की दृष्टि में पर त्रिपादी "झलां जश् झशि" असिद्ध होगा नहीं, अतः दकार को द्वित्व कहना उचित है, तो यह आशङ्का उचित नहीं, क्योंकि फल में कोई विलक्षणता नहीं है, अतः उसका अनादर किया गया। जश्त्व के पूर्व अथवा जश्त्व के पश्चात् द्वित्व करने में कोई विशेषता नहीं है। धकार को द्वित्व कर लेने पर भी जश्त्व हो जायगा। जहाँ पर पूर्वत्रासिद्धप्रवृत्ति, अथवा, पूर्वत्रासिद्धिप्रवृत्ति निषेध में फल विशेष होता है। वहीं पर इसकी परिभाषात्वेन प्रवृत्ति होती है, यह अन्यत्र विस्तर है। अथवा धस्य का अभिप्राय है, धकार है स्थानी जिसका अर्थात् दकार को पाक्षिक द्वित्व होगा।

लोपो वेति। "झयो होऽन्यतरस्याम्" (पा० सू० ८।४।६२) इति सूत्राद्विकल्पानुवृत्तेः। एतच्च "नाज्झलौ" (पा० सू० १।१।१०) इति सूत्रे भाष्यकैयटयोः स्पष्टम्। प्राचस्तु विकल्पानुवृत्तेरनुक्तेर्न्यूनता। यदपि व्याख्यातृभिः "शरोऽचि" (पा० सू० ८।४।४९) इति ज्ञापकमुपन्यस्य तत्संवादार्थं भाष्यमुपन्यस्तम्—"अनुवर्त्तते विभाषा शरोऽचि यद्वारयत्ययं द्वित्वम्" इति। तन्न। तदुत्तरभाष्ये एव उक्तज्ञापकस्य दूषितत्वात्। लोपस्य हि नित्यत्वे "अचो रहाभ्याम्–" (पा० सू० ८।४।४६) इति द्वित्वं लोपापवादः स्यात्। तथा च "शरोऽचि" इत्यस्य सार्थक्यं स्पष्टमेव। तस्माद्विकल्पानुवृत्तौ ज्ञापकान्तरमनुसर्तव्यम्। भाष्यकारादिव्याख्यानमेव वा शरणम्। द्वित्वलोपयोरिति। यत्तु द्वित्वविधानसामर्थ्याद् द्वावेव

---

नाज्झलाविति सूत्रे इति। 'हयवरट्' सूत्रशेषे चेत्यपि बोध्यम्। अनुक्तेरिति। "हलो यमाम्" (पा० सू० ८।४।६४) इत्यत्र "झरो झरि" (पा० सू० ८।४।६५) इत्यत्र चेति भावः। ज्ञापकमिति। उभयत्रापि विकल्पानुवृत्ताविति भावः। लोपस्य हीति। लोपमात्रस्येत्यर्थः। लोपापवाद इति। आरम्भसामर्थ्यादिति भावः। ज्ञापकान्तरमिति। "अणुदित्" (पा० सू० १।१।६९) सूत्रस्थमण्ग्रहणं हलः परस्य यरो लोपो वैकल्पिक इति सामान्या-

---

सूत्र शेषे चेति। तत्र हि भाष्ये यवलानामण्ग्रहणेन ग्रहणे प्रयोजनोपपादनावसरे संय्यन्तेत्यादौ परसवर्णस्यानुस्वारस्थानिकस्यानुनासिकस्य यकारादेर्ग्राहकशास्त्रबलाद्यर्ग्रहणेन ग्रहणाद् द्विर्वचनप्रवृत्तौ यकारत्रयादिघटितप्रयोगसिद्धिः, प्रयोजनमित्युक्त्या नास्ति भेदः, सत्यपि द्विर्वचने द्वियकारकमेव, कथं "हलो यमां यमि लोपः" इत्येवमेकस्य लोपेन भवितव्यमित्येकदेशिन आक्षेपस्य सिद्धान्तिना "एवमपि भेदः सति द्विर्वचने कदाचिद् द्वियकारकं कदाचिद् त्रियकारकम् असति द्विर्वचने द्वियकारकमेव स एव कथं भेदो न स्यात्" यदि नित्यो लोपः स्यात् विभाषा च स लोप इति परिहारः प्रदर्शितः एतेन हलोयमामित्यत्र विभाषानुवृत्तिस्स्पष्टमेवाभिहिता।

अण् ग्रहणमिति। तद्धि संय्यन्तेत्यत्र "वापदान्तस्य" इति परसवर्णपक्षेऽनुनासिक-

---

"झयो होन्यतरस्याम्" (८।४।६२) से विकल्पानुवृत्ति होने से "झरो झरि सवर्णे" (८।४।६५) हल् से परे झर् का लोप विकल्प से करता है 'सवर्ण झर् परे रहने पर' यह "नाज्झलौ" सूत्र के भाष्य कैयट में स्पष्ट है, "हयवरट्" सूत्र के अन्त में भी स्पष्ट है। प्रक्रियाकौमुदीकार "हलोयमाम्" (८।४।६४) "झरो झरि सवर्णे" (८।४।६५) यहाँ पर विकल्पानुवृत्ति नहीं करते यह उनकी न्यूनता है। जिन व्याख्याताओं ने दोनों सूत्रों में "अन्यतरस्याम्" की अनुवृत्ति में "शरोऽचि" ज्ञापक मान कर उसमें भाष्यकार की सम्मति दिखाने के लिये यह भाष्य लिखा है कि "अनुवर्त्तते विभाषा शरोऽचि यद् वारयत्ययं द्वित्वम्" अर्थात् "झरोझरि सवर्णे" से यदि नित्य लोप हो तो द्वित्व कर देने पर भी नित्य लोप हो जाने से कोई हानि नहीं, "शरोऽचि" यह प्रतिषेधवचन व्यर्थ हो जायगा। अतः आचार्य जानते हैं कि "झरो झरि सवर्णे" से विहित द्वित्व विकल्प है, अतः प्रतिषेध वचन करते हैं। वह ठीक नहीं उसके आगे के भाष्य में ही उक्त ज्ञापक को दूषित किया जाने से। लोप यदि नित्य होगा अर्थात् लोपमात्र यदि नित्य होगा तो आरम्भसामर्थ्य से अचोरहाभ्याम् (८।४।४६) से होने वाला द्वित्व लोप का अपवाद हो जायगा। तब "शरोऽचि" की सार्थकता स्पष्ट है। अतः विकल्पानुवृत्ति में ज्ञापकान्तर का अनुसरण करना चाहिये। अथवा भाष्यकारादि का व्याख्यान ही

शिष्येते इति। तन्न । लोपस्य वैकल्पिकत्वेन द्वित्वस्य पक्षे चरितार्थत्वात् । त्रिधमिति । "यणो मय" इति लक्षणान्तरेण पुनर्द्वित्वे तु चतुर्धमपि बोध्यम् ।

"एत्येधत्यूठ्सु" ( पा० सू० ६।१।८९ )॥ अत्र एचीत्यनुवर्त्तते तच्च एतेरेव विशेषणं नत्वेधतेः अव्यभिचारात् । नाप्यूठः, असम्भवादिति प्राञ्चः । अत्र

---

पेक्षमाश्रयणीयमिति भावः । तस्य "हलो यमाम्—" ( पा० सू० ८।४।६४ ) इति विशेषापेक्षत्वे आह—व्याख्यानमेव वेति । यदि तु "हलो यमाम्—" इत्यत्र विकल्पं सिद्धं कृत्वा द्वित्वस्य तद्विषये चारितार्थ्येन "झरो झरि" इत्यत्र तदनुवृत्तौ "शरोऽचि" ( पा० सू० ८।४।४९ ) इति ज्ञापकमुपन्यस्यते तदा सम्यगेव, परं तु प्राचां भाष्यसंमतिलेखः प्रामादिकः । तद्भाष्यस्योभयविषयतया प्रवृत्तेः ।

असम्भवादिति । न च आ अवतीति औः, जनस्य और्जनौरित्यादावचेः क्वावूठ्याद्गुणे परादिवत्त्वेनोठ्त्वात्सम्भवोऽस्ति । न च "वृद्धिरेचि" ( पा० सू० ६।१।८८ ) इति सिद्धिः "ओमाङोश्च" ( पा० सू० ६।१।९५ ) इत्यनेन बाधाद् अनेन तु सामर्थ्यात्तद् बाध्यत इति वाच्यम् । तस्यानभिधानादित्याशयात् ।

---

यकारस्य "अनचि च" इति द्वित्वार्थं यर्ग्रहणेन ग्रहणाय । लोपस्य नित्यत्वे हि तत्र द्वित्वेऽपि लोपेन निवृत्तौ यकारद्वयस्यैव श्रवणमिति तद्व्यर्थमज्ग्रहणेनैव सिद्धः ।

विशेषापेक्षत्वे इति । कमलशब्दप्रकृतिकादाचक्षाणणिजन्तात् क्विपि निष्पन्नस्यानुनासिकयोगे कमल्नयतीत्यादौ "यरोऽनुनासिक" इत्यनुनासिके लकारे यत्वेन तस्य ग्रहणे द्वित्वे द्विलकारकरूपसम्पत्त्यर्थमण्ग्रहणस्य सार्थक्यकल्पनायां चेत्यपि बोध्यम् ।

नाप्यूठ इति । एचीति ऊठो विशेषणं नास्ति व्याख्यानात् । "विश्वौहः प्रष्ठौह इति" विभाषा पूर्वाह्णेतिसूत्रे भाष्यप्रयोगाच्च । रत्नकारोक्तखण्डनाय तद्ग्रन्थमनुवदति नचेत्यादिना । औरिति । "गोतोणित्" इति सूत्रेण सिद्धस्य रूपस्यायमुल्लेखः ।

---

सहारा है। ज्ञापकान्तरप्रतीक की व्याख्या शब्दरत्नकार लिखते हैं, 'संय्यन्तः' इत्यादि में अनुनासिक यकार को द्वित्व करने के लिये अण् ग्रहण किया गया. यदि नित्य लोप हो तो द्वित्व कर देने पर भी उसकी लोप में निवृत्ति हो जायगी दो यकार का ही श्रवण होगा, अच् ग्रहण ही करना चाहिये, तब "अणुदित्" ( १।१।६९ ) सूत्रस्थ अण् ज्ञापन करेगा हल् से परे यर् का लोप विकल्प से होता है, यह सामान्यपेक्ष ज्ञापन होगा । यदि विशेषापेक्ष ज्ञापन हो कि 'हल् से परे जो यम् उसका लोप होता है यम् परे रहते, तो इस अर्थ पर लिखा व्याख्यान ही शरण है । यदि अण् ग्रहण के बल से "हलोयमां यमि लोपः" इसमें विकल्प सिद्ध करके "झरोझरि" यहाँ पर अन्तरस्याम् की अनुवृत्ति में "शरोऽचि" ( ८।४।४९ ) ज्ञापक मानते हैं तो ठीक ही है । किन्तु प्राचीनों की भाष्य सम्मति ठीक नहीं । अनुवर्तते यह भाष्य "झरो झरि सवर्णे" इसमें 'अन्यतरस्याम्' की अनुवृत्ति होने से अनुवृत्ति विषयकतया यथा "हलो यमां यमि" को मध्य में होने के कारण, अन्यतरस्याम् का सम्बन्ध होने से सम्बन्ध विषयकतया प्रवर्तित होता है ।

"कृष्णर्द्धिः" में ऋध् धातु के धकार को द्वित्वाभाव तथा लोपाभाव रहने पर, अथवा द्वित्व करके लोप कर देने पर दो धकारक रूप होते हैं । जो यहाँ पर कहते हैं द्वित्व विधान सामर्थ्य से दोनों शेष रहेंगे, उनका कहना ठीक नहीं लोप विकल्प होने से द्वित्व पक्ष में चरितार्थ है । "यणो मयो द्वे वाच्यः" इस वार्तिक से फिर द्वित्व हो जाने से चार धकारक होता है ।

कैयटः—एधतेरपि विशेषणम्। मा भवान्प्रेदिधदित्यत्र व्यभिचारात्। यद्यपीदं कैयटपुस्तकेषु प्रायेण न दृश्यते तथाऽपि क्वचिद् दृश्यत एव। न च "णौ चङि–" (पा० सू० ७।४।१) इति ह्रस्वे कृते नायमेधतिरिति वाच्यम्। एकदेशविकृतस्यानन्यत्वात्। न चैवमपि "अजादेर्द्वितीयस्य" (पा० सू० ६।१।२) इति धिशब्दस्थाने धि धि शब्दादेशे सति वस्नसोरिव प्रकृतिप्रत्ययविभागसम्मोह इति वाच्यम्। द्विः प्रयोगो द्विर्वचनं षाष्ठमिति षाष्ठभाष्ये सिद्धान्तितत्वात्। अन्यथेहैव णिलोपो न स्यात्। जिघांसतीत्यादौ सनः सकारेण विशिष्टस्य द्वित्वे कृते कुत्वं च न स्यात्।

---

किं च "ओमाङोः–" (पा० सू० ६।१।९५) इत्येतद्बाधकल्पनापेक्षया सामर्थ्येन लक्ष्यानुरोधेन च "एचि" इत्यस्यासम्बन्धकल्पनैवोचिता। ह्रस्वे कृते इति। वृद्धेः पूर्वमित्यादिः। वार्णपरिभाषयेति भावः। अनन्यत्वादिति। न च "अचः परस्मिन्" (पा० सू० १।१।५७) इति स्थानिवत्त्वेनैजादित्वं सुलभम्, पूर्वपरविधित्वात्। पूर्वस्यैव विधौ हि सः। मध्येऽपवादन्यायेनाद्गुणं बाधित्वा इहैव स्यात् उपैधत इत्यादौ तु परत्वात्पररूपमेव स्यादिति भावः। संमोह इति। एधतेरादेशाभावेन न स्थानिवत्त्वेन तत्त्वम्। न स्यादिति।

---

अनभिधानादिति। अत्र सूत्रे एत्येधत्योरिति योगं विभज्य एचीत्यस्य तत्रैव विशेषणपरभाष्यमत्र मानम्। वस्तुतस्तु विश्वौह इत्यादौ वृद्ध्यर्थम् भगवता एचीति एत्येधत्योरेव विशेषणमित्युक्ततया चैतस्यानभिधाने न तन्मानमिति बोध्यम्। नन्वेवमेत्येधत्यंशेऽपि तदसम्बन्धस्स्यादुक्तयुक्तेरत आह। लक्ष्यानुरोधेन चेति। भाष्ये च योगविभागादूठंशे

---

'वृद्धिरेचि' से एच् का अनुवर्तन करते हैं, वह एच् इण् का ही विशेषणीभूत होता है, एध् का नहीं, क्योंकि सम्भव और व्यभिचार अर्थात् अभाव रहने पर विशेष्यविशेषणभाव चरितार्थ होता है, यहाँ पर एध् में एच् का अभाव नहीं मिलता, अतः अव्यभिचार होने से एच् एधति का विशेषण नहीं होता। ऊठ् का भी एच विशेषण नहीं होता असम्भव होने से।

यदि कहा जाय कि आ अवतीति इस विग्रह में अव् धातु से क्विप् प्रत्यय अनुबन्धलोप तथा वकार का भी लोप कर देने पर प्रत्ययलक्षण का आश्रयण करके "ज्वरत्वरस्रिव्यविमवामुपधायाश्च" (६।४।२०) करके क्विप् परे रहते उपधा तथा वकार को ऊठ् "आदगुणः" से गुण हो जाने पर ओ शब्द हो जायगा उससे सु प्रत्यय णिद्वद्भाव वृद्धि विसर्ग होने पर "औः" बनता है। "जनस्य औः जनौः" यहाँ पर परादिवद्भाव मे ऊठ् आ जाने पर एच् सम्भव हो जायगा, यहाँ पर "वृद्धिरेचि" से वृद्धि नहीं हो सकती "ओमाङोश्च" (६।१।९५) बाध लेगा, "एत्येधत्यूठ्सु" (६।१।८९) तो ऊठ ग्रहण सामर्थ्य से "ओमाङोश्च" को बाध लेगा, तो अनुपयुक्त है "औः" इसका अनभिधान होने से। किञ्च "ओमाङोश्च" (६।१।९५) इसके बाध की कल्पना की अपेक्षा एजादि ऊठ् परे रहते वृद्धि होती है, इस वाक्यार्थ सामर्थ्य से, तथा "येन नाप्राप्तिन्याय" से "ओमाङोश्च" को बाधकर "औः" का ही साधुत्व होगा, विश्वौह इत्यादि का साधुत्व ही नहीं होगा। अतः लक्ष्यानुरोध से भी एच् का सम्बन्ध नहीं करना चाहिये।

यहाँ पर कैयट एध् का भी एच् विशेषण स्वीकार करते हैं। क्योंकि 'मा भवान् प्रेदिधत्' यहाँ पर एच् का अभाव रहने से सम्भव और व्यभिचार है, अतः विशेष्यविशेषण हो जायगा। यद्यपि यह कैयट की पुस्तकों में नहीं देखा गया है, तथापि कहीं-कहीं देखा गया है। यदि कहा जाय कि मा+प्र+एधि+अ+त इस स्थिति में "णि का लोप हो जाने पर" "एत्येधत्यूठ्सु" से प्राप्त

न च "णेरनिटि" (पा० सू० ६।४।५१) इत्यस्य ण्यन्तस्याङ्गस्य लोप इत्यर्थः, स चालोन्त्य-परिभाषयाऽन्त्यस्य, एवं च प्रकृते न दोषः। "सर्वे सर्वपदादेशा" इति न्यायेनेर्ध्यात्यस्ये-धिधिइत्यादेशसत्त्वेन स्थानिनो ण्यन्ततया आदेशेऽपि स्थानिवद्भावेन ण्यन्तत्वस्य सुलभ-त्वादिति वाच्यम्। अलोऽन्त्यपरिभाषया निर्दिश्यमानपरिभाषया च "णेरनिटि" (पा० सू० ६।४।५१ इत्यस्य ण्यन्तस्याङ्गस्यान्त्यो निर्दिश्यमानो णिस्तस्य लोप इत्यर्थेन दोषात्। अन्ते णेरसत्त्वात्। सूत्रं तु आप्यादित्यादौ चरितार्थमिति भावः कुत्वं च न स्यादिति। हन्त्यवयवहकाराभावात्। सन् सम्बन्धिसकारवैशिष्ट्याभावे तु स्थानिवत्त्वेन कुत्वं स्याद पीति भावः।

---

तदसम्बन्ध उक्तः भाव इति। वर्णत्वव्याप्यधर्मावच्छिन्नोद्देश्यकादङ्गत्वावच्छिन्नोद्देश्यकं-बलीयो भवतीत्यर्थकं "वार्णादाङ्गं बलीयो भवति" इति न्यायबलेनेत्याकूतम्। पूर्वस्यैव विधौ हीति। हि शब्दादयमर्थोऽस्त्राम्रभक्षन्यायलब्ध इति सूचितम्। एतत् फलमारतुरि-त्यादावृच्छत्यृतामित्युत्तरखण्डीयगुणस्य सवर्णदीर्घे स्थानिवत्त्वाभावः।

निर्दिश्यमान परिभाषया चेति। द्वयोः परिभाषयोर्बाध्यबाधकभावाभाववादनया रीत्या व्याख्यानं कृतम्। "पादस्य लोपः" इत्यादौ यथाभवति।

ण्यन्तस्याङ्गस्येति। न च ल्यपि लघुपूर्वादित्यत्रावश्यमाश्रयितव्येन वैयधिकरण्येन प्रकृतेप्यङ्गस्य णेरित्येवार्थः किं न स्यादिति वाच्यम्। सम्भवति सामानाधिकरण्ये वैयधि-करण्यस्यायुक्तत्वादगत्या तत्र तथा स्वीकारेऽपि प्रकृति वैयधिकरण्याश्रयणे मानाभाव-

---

वृद्धि के पहले "वर्णादङ्गं बलीयः" परिभाषा के बल पर। "णौ चङि" (७।४।११) से ह्रस्व कर देने पर एध् धातु नहीं कहलायगा तो उचित नहीं, क्योंकि एकदेश में विकार हो जाने पर वह अन्यवत् नहीं होता। अन्य सादृश्य निषेध रहने पर अन्यत्वाभाव स्वतः सिद्ध होने से। यदि कहो "अचः परस्मिन्" (१।१।५७) से स्थानिवद्भाव हो जाने पर एजादित्व आ जायगा तो नहीं कह सकते, "एत्येधत्यूठ्सु" से वृद्धि पूर्व पर के स्थान पर होने से। पूर्व को ही कार्य कर्तव्य रहने पर स्थानिवद्भाव होता है। "मध्ये पठिताः ये अपवादाः ते पूर्वान् विधीन् बाधन्ते नोत्तरान्"। इस मध्ये-ऽपवादन्याय से "एत्येधत्यूठ्सु" "आद्गुणः" से जो गुण होता है, उस गुण को बाधकर वृद्धि रूप एकादेश प्रेदिधत् यहाँ पर होगा। उपैधते इत्यादि में परत्वात् पररूप होने लग जायगा। यदि कहो कि "अजादि" के द्वितीय एकाच् को द्वित्व होने से धि शब्द के स्थानपर धि धि शब्दादेश हो जानेपर वस् नस् की तरह प्रकृति प्रत्यय विभाग नष्ट हो जायगा, एध् के स्थानपर आदेशाभाव होने से स्थानि-वद्भाव से भी नहीं आयेगा, तो नहीं कह सकते षाष्ठ द्वित्व द्विः प्रयोग है यह षाष्ठ भाष्य में सिद्धान्तित है, अन्यथा यहाँ पर ही णि का लोप नहीं होगा। यदि कहो कि "णेरनिटि" (६।४।४१) इसका अर्थ है ण्यन्ताङ्ग का लोप होता है, वह लोप अलोन्त्य परिभाषा के बल से अन्त्य का ही होगा तथा च इदिधत् में दोष नहीं। "सर्वे सर्वपदादेशः" इस न्याय से अर्थात् अर्थवान् के स्थान पर अर्थवदा-देश होने से एधि के स्थान पर धि धि आदेश हो जाने पर स्थानो को ण्यन्त होने से आदेश में भी स्थानिवद्भाव से ण्यन्तत्व आ जायगा तो नहीं कह सकते, अलोन्त्य परिभाषा और निर्दिश्यमान परिभाषा के सहयोग से "णेरनिटि" ६।४।५१ का अर्थ होगा ण्यन्ताङ्ग का अन्त्य जो निर्दिश्यमान णि उसका लोप होता है, इस अर्थ से णिलोप प्राप्त्यभाव रूप दोष होने से 'णेरनिटि' यह सूत्र आपात में णि का लोप करने में चरितार्थ है। जिघांसति इत्यादि में सन् के सकार विशिष्ट को द्वित्व करने पर कुत्व नहीं होगा। यदि कहा जाय कि चङ् पर णिनिमित्तक ह्रस्व की अपेक्षा द्वित्व चङ्मात्र

न चान्तरङ्गत्वात् प्रथमं "चङि" ( पा० सू० ६।१।११ ) इति द्वित्वे कृते ह्रस्वो न भवत्येवेति वाच्यम्। ओणेर्ऋदित्करणेन बहिरङ्गस्यापि "णौ चङि" ( पा० सू० ७।४।१ ) इति ह्रस्वस्य प्रथमं प्रवृत्तिरिति ज्ञापितत्वात्।

अत्र माधवः—मा भवान् प्रेदिधदित्यत्र नातिप्रसङ्गः। ण्यन्तस्य शब्दान्तरत्वादेधतिग्रहणेनाग्रहणात्। अत एव हि "न भाभूपूकमिगमि—" ( पा० सू० ८।४।३४ ) इत्यत्र "ण्यन्तानां च भादीनामुपसंख्यानम्" इत्युक्तम्। तत्रैव शब्दान्तरत्वादप्राप्तावुपसंख्यानमिति कैयटन्यासकारहरदत्तादिभिः सर्वैरेवोक्तम्। किं च ण्यधिकस्यापि ग्रहणे "उपसर्गात्सुनोति–" ( पा० सू० ६।१।९१ ) इत्यत्राभिषावयतीत्युदाहृत्य ण्यन्तेनाभेर्योगात्सुनोतिं प्रत्यनुपसर्गत्वात्कथं षत्वमित्याशङ्क्याभेः प्रकृत्यर्थविशेषकत्वेन समाधानं भाष्यकाराद्युक्तमसङ्गतं स्यात्। न च "हेरचङि" ( पा० सू० ७।३।५६ ) इति लिङ्गात् "प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम्" इति भ्रमितव्यम्। ज्ञापकस्य कुत्वमात्रविषयकत्वात्। तथा च वार्तिकम्—"हेश्चङि प्रतिषेधानर्थक्यमङ्गान्यत्वात्"। ज्ञापकं तु चङोऽन्यत्र ण्यन्तेऽपि कुत्वभावस्येति। तस्माद्युक्तिविरोधाद्भाष्यवार्तिकवृत्तिन्यासादिग्रन्थैः पूर्वापरस्वग्रन्थेन च विरोधादुपेक्ष्योऽयं कैयट इति।

---

अन्तरङ्गत्वादिति। चङ्परणिनिमित्तह्रस्वापेक्षया चङ्मात्रनिमित्तत्वेनाल्पपदार्थापेक्षत्वादित्यर्थः। भाष्ये तु नित्यत्वमात्रमेव द्वित्वस्योक्तम्। ज्ञापितत्वादिति। इदं च "णौचङि–" (पा० सू० ७।४।१) इति सूत्रे भाष्ये स्पष्टम्। असङ्गतं स्यादिति। सुनोतिग्रहणेन सावयतेरपि

---

इत्याशयात्। अल्पपदार्थपेक्षत्वादिति। ननु बह्वपेक्षं बहिरङ्गमल्पापेक्षमन्तरङ्गमित्यर्थस्य बहुशो दूषितत्वात्कथं द्वित्वस्यान्तरङ्गत्वमित्यत आह—भाष्येत्विति।

भाष्ये स्पष्टमिति। णौ चङि ७।४।१ इति सूत्रे भाष्यकारेणोक्तम् "उत्तरार्थं तर्ह्युपधाग्रहणं कर्त्तव्यम्। लोपः पिबतेरीच्चाभ्यासस्य" उपधाया यथा स्यात्। अपीप्यत्, अपी-

---

निमित्तक अल्प पदार्थापेक्षरूप अन्तरङ्ग होने से, भाष्यकार के मत से द्वित्व में नित्यता होने से; "चङि" से द्वित्व हो जाने पर ह्रस्व नहीं होगा तो इसका उत्तर है, उपधा ह्रस्व निषेधार्थ ओणृधातु में ऋदित् करण है। अन्तरङ्गत्वात् णि को द्वित्व हो जाने पर ओ को ह्रस्व प्राप्त ही नहीं रहेगा, फिर ऋदित् करण करने की क्या आवश्यकता, वह पड़ेगा व्यर्थ और ज्ञापन करेगा 'बहिरङ्गोऽप्युपधाह्रस्वः द्वित्वात्प्रागेव" तथा च "णौ चङि" से ह्रस्व प्रथम प्रवृत्त होगा ज्ञापन के बल से। यह "णो चङि" ( ७।४।१ ) इस सूत्र के भाष्य में स्पष्ट है। यहाँ पर माधवाचार्य जी का मत है। मा भवान् प्रेदिधत् में अतिव्याप्ति दोष नहीं है। ण्यन्त एधि शब्दान्तर होने से एधि का ग्रहण नहीं होगा। ण्यन्त शब्दान्तर माना जाता है, इस कारण से "नभाभूपूकमिगमि" ( ८।४।३४ ) यहाँ पर "ण्यन्त भादियों का ग्रहण करना चाहिये। क्योंकि शब्दान्तर होने से प्राप्त नहीं है, यह कैयट हरदत्त न्यासकार सबने कहा किञ्च ण्यधिक का यदि ग्रहण करोगे तो "उपसर्गात् सुनोति" ( ८।३।६५ ) यहाँ पर अभिषावयति यह उदाहरण देकर कहा अभि का सम्बन्ध ण्यन्त से है, सुनोति के प्रति ( अर्थात् अण्यन्त पुञ् ) पुञ् के प्रति अनुपसर्ग होने से कैसे षत्व हुआ, यह आशङ्का करके कहा अभि अण्यन्त पुञ् को विशेषित करता है, यह भाष्यकार का समाधान असङ्गत हो जायगा। क्योंकि यदि सुनोति के ग्रहण से सावयति का भी ग्रहण होता है, तो शङ्का ही नहीं उठती। यदि कहो किं

अत्रेदं वक्तव्यम्। अस्तु विशिष्टस्य शब्दान्तरत्वं तावताऽपि प्रकृतिभागस्यैध्रूपत्वं केनापगतमित्यवधार्यताम्। न ह्युपैधत इत्यादौ तिङन्तस्यैध्रूपता नास्तीति प्रकृत्यंशे सा हीयते। तथा च "उपसर्गात्सुनोति–" इति सूत्रे वार्त्तिकं "सिद्धं त्ववयवानन्यत्वात्" इति। यत्त्वभिषावयतीत्यत्रत्यभाष्यविरोधोद्भावनं तद्विपरीतम्। यतः प्रकृतेः सुनोतिरूपानपायात् कैयटमते सिद्धा यथोक्तव्यवस्था। त्वन्मते तु रूपान्तरत्वेन ण्यधिकस्याग्रहणादसङ्गतैव प्रागुक्तव्यवस्था स्यात्। कोह्येधयतिसावयत्योर्विशेषः। यदेधतेर्ण्यधिकस्याग्रहणं सुनोतेस्तु ग्रहणमिति। यदपि ण्यन्तभादीनामुपसंख्यानमुपन्यस्तं तदपि नास्माकं प्रतिकूलम्। विशिष्टस्य शब्दान्तरत्वेन प्रकृत्यंशस्य तु णिचा व्यवधानेनोपसंख्यानस्यावश्यकत्वात् अत एव न तत्रत्यन्यासादिभिः स्वोक्त्या वा विरोधः। प्रत्युत तवैव विरोधः। षाष्ठे भाष्यवार्तिकयोः "एत्येधत्योः–" (पा० सू० ६।१।८९) इति योगं विभज्य "एचि" इति विशेषितत्वात्। तस्मादिह वृत्तिग्रन्थो माधवग्रन्थश्चासङ्गत एवेत्यभिप्रेत्य व्याचष्टे—एजाद्योरिति।

---

ग्रहणेन शङ्काया एवाभावादिति भावः। अवयवानन्यत्वादिति। ण्यन्तावयवस्य सुनोतेः सुनोतिभिन्नत्वाभावादिति तदर्थः। सुनोतिरूपानपायादिति। सुनोतित्वानपायादित्यर्थः।

---

प्यताम्, अपीप्यन्। अथेह कथं भवितव्यम्-मा भवान् अटिटदिति, आहोस्विन्मा भवानाटिटदिति। माभवानाटिटदिति भवितव्यम्। ह्रस्वत्वं कस्मान्न भवति। द्विर्वचने कृते परेण रूपेण व्यवहितमिति कृत्वा।

इदमिह सम्प्रधार्यं द्विर्वचनं क्रियतां ह्रस्वत्वमिति। किमत्र कर्त्तव्यम्। परत्वाद्ध्रस्वत्वम्। नित्यं द्विर्वचनं। कृतेऽपि ह्रस्वत्वे प्राप्नोत्यकृतेऽपि एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति-द्विर्वचनाद् ध्रस्वत्वं बलीय, इति यदयमोणिम् ऋदितं करोति। कथं कृत्वा ज्ञापकम्। ऋदित्करणैतत्प्रयोजनम् ऋदितां नेति प्रतिषेधो यथा स्यात्। यदि चात्र पूर्वं द्विर्वचनं स्याद्दितकरणमनर्थकं स्यात् द्विर्वचने कृते परेण रूपेण व्यवहितत्वाद्ध्रस्वत्वं न भविष्यति।

---

"प्राजीहयत्" में कुत्व वारण के लिये "अचङि" यह पर्युदास माना गया, प्रकृति ग्रहण से ण्यधिक का ग्रहण न हो तो अचङि व्यर्थ हो जायगा, तो नहीं कह सकते, ज्ञापक कुत्व मात्र विषयक होने से "प्रजिघाययिषति" में कुत्व होता है। इसी बात को वार्तिककार ने लिखा है, हि धातु को चङ् परे रहते प्रतिषेध करना व्यर्थ है, क्योंकि ण्यन्त, भिन्न अङ्ग हो जाता है, अतः "अचङि" से आचार्य बोधन करते हैं, चङ भिन्न रहने पर कुत्व मात्र में ण्यधिक का भी ग्रहण होता है। अतः भाष्य वार्तिक न्यासादि ग्रन्थों के सहित स्वीय पूर्वापर ग्रन्थ विरोध होने से यह कैयट उपेक्षणीय है। यहाँ पर यह समझना चाहिये; णिच् विशिष्ट में शब्दान्तरत्व हो, किन्तु प्रकृति भाग एध् मात्र में एध् रूपत्व का क्या अपहरण हुआ है, तो स्पष्ट है, कि नहीं हुआ। उपैधते इत्यादि में उप यह शब्दान्तर विशिष्ट रहने पर भी तिङन्त की एधता नहीं है, यह नहीं कह सकते, वहाँ पर तिङन्त की एधता ही रहती है। केवल एध प्रकृत्यंश में एधता रहती है। तिङन्तीय एध् रूपता नहीं रहती।

"उपसर्गात्सुनोति" इस सूत्र पर वार्तिक है "सिद्धं त्ववयवानन्यत्वात्" अर्थात् ण्यन्तघटक सुनोति और अण्यन्त सुनोति में भिन्नत्वाभाव है, अर्थात् दोनों एक है। जो अभिषावयति यहाँ पर भाष्य विरोध दिखाया गया है, वह विपरीत है, क्योंकि प्रकृति का सुनोतित्व तो नष्ट नहीं होगा, अतः

अक्षौहिणीति। ऊहोऽस्त्यस्या ऊहिनी अक्षाणामूहिनीति विग्रहः। परिमाणविशेषविशिष्टा सेना अक्षौहिणी। "पूर्वपदात्सञ्ज्ञायाम्" (पा० सू० ८।४।३) इति णत्वम्।

यत्तु प्राचा विगृहीतमक्षाणामूहः समूहः सोऽस्त्यस्या इति। तदपि ऊहिनीशब्देन षष्ठीतत्पुरुष इत्येवम्परतयैव कथंचिन्नेयम्। ऊहशब्देन समासे तत इनौ तु वृद्धिर्न स्यात्। अन्तरङ्गेण गुणेन बाधात्। अपवादभूताया अपि वृद्धेरूहिनीशब्देन विग्रहे चरितार्थत्वात्। तथा चोक्तं प्राक्—"इण्-ङि-शीनामाद्गुणः सवर्णदीर्घत्वात्" इति॥

---

असङ्गतैवेत। ण्यन्तेनाभियोगादित शङ्का प्रकृत्यर्थविशेषकत्वेन समाधानरूपा च व्यवस्थाऽसङ्गतैव स्यात्। त्वदुक्तरीत्या ण्यधिके षत्वाप्राप्तेरित्यर्थः। तदेवाह—को हीति॥

विग्रह इति। समस्यमानपदस्वरूपबोधक इत्यर्थः। तत इनाविति। "अत इनिठनौ" (पा० सू० ५।२।११५) इति विहित इत्यर्थः अन्तरङ्गेणेति। प्रथमप्रवृत्तिकेनेत्यर्थः। समर्थग्रहणे कृतसन्धिकार्यादेव तद्धितोत्पत्त्या तद्विषयेऽकृतव्यूहपरिभाषाया अप्रवृत्तेस्तस्या असत्त्वाच्चेति भावः। चरितार्थत्वादिति। तद्घटकोहिनीशब्दस्य कल्पितार्थेनाप्यर्थवत्त्वाभावेन तत्रैतत्सूत्राप्रवृत्तेश्चेत्यपि बोध्यम्।

---

पश्यति त्वाचार्यो 'द्विर्वचनाद्ध्रस्वत्वं बलीय इति तत ओणिमृदितं करोति। तस्मान्मा भवानटिटदित्येव भवितव्यम्।

शङ्काया एवेति। शङ्काया अभावे उत्तरस्याप्यावश्यकता नास्तीति प्रतीयते एवकारेण। "सुनोतिरूपेत्यत्र रूपशब्दोऽर्थपरः" इति "स्वं रूपमित्यत्र" यद्यपिदर्शितं तथापि षष्ठ्यर्थान्वयायाह सुनोतिस्त्वेति। षत्वाप्राप्तेरिति। त्वद्रीत्या ण्यन्तघटकस्य स्वतन्त्रधातुग्रहणेनाग्रहणादित्याशयः।

परिमाणविशेषविशिष्टेति। अक्षौहिण्यः सप्ततिरष्टशतान्येकविंशतिसहस्रम्। द्विरदास्तथा रथास्तत्त्रिपञ्चगुणकास्तुरङ्गनराः॥ २१८७० रथाः गजाश्च तावन्तः, अश्वाः

---

कैयट के मत में उक्त व्यवस्था बन जायगी। आपके मत में रूपान्तर होने से ण्यधिक का ग्रहण होगा नहीं तो उक्त व्यवस्था असङ्गता हो जायगी अर्थात् ण्यन्त का अभि से सम्बन्ध है, यह शङ्का, तथा अभि प्रकृत्यर्थ अर्थात् पुष् का विशेषण है, यह समाधानरूपा व्यवस्था असङ्गता हो जायगी। आपकी रीति से ण्यधिक में षत्व की अप्राप्ति है। एधयति और सावयति में क्या वैलक्षण्य है, जो एध् में ण्यधिक का अग्रहण होता है। और सुनोति में ग्रहण होता है। जो "ण्यन्तमादीनामुपसंख्यानम्" कहा है वह भी मेरे प्रतिकूल नहीं है। विशिष्ट शब्दान्तर होने से प्रकृत्यंश णिच् से व्यवहित हो जाने के कारण उपसंख्यान आवश्यक है, अत एव वहाँ के न्यासादि से अथवा अपनी युक्ति से विरोध नहीं है किन्तु आपका ही विरोध है।

छठवें अध्याय में भाष्यकार और वार्तिककार ने "एत्येधत्यूठ्सु" में योग विभाग करके एति, एधति, का एच् को विशेषण बनाया है। इस कारण वृत्तिग्रन्थ माधव ग्रन्थ असङ्गत ही है। अत एव इसका अर्थ होता है अवर्ण से इण् धात्ववयव एच् परे रहते, एध् धात्ववयव एच् परे रहते, और ऊठ् परे रहते वृद्धिरूप एकादेश होता है।

"ऊहनमूहः ऊहोऽस्त्यस्या इति ऊहिनी।" नान्त होने से ङीप् हो जायगा, "अक्षाणाम् ऊहिनी"

स्वादीरेरिणोः। इरेरिण्योरिति क्वाचित्कोऽपपाठः। स्वैरीति णिन्यन्तस्या-स्त्रियां-वृद्ध्यभावप्रसङ्गात्। स्वैरिणीत्यत्र तु ङीपः प्राग्भागमादाय वृद्धिर्बोध्या।

यत्तु व्याचख्युः लिङ्गविशिष्टपरिभाषयेति तन्निष्फलम्॥

प्रादूहोढोढ्येषैष्येषु। अत्रोहशब्दः कैश्चित्प्रक्षिप्तो भाष्यादौ तु न दृश्यत इति प्राञ्चः। इदानीन्तनपुस्तकेषु तु भाष्यवार्तिकयोरूहशब्दो दृश्यत एव। नानर्थ-कस्येति। उपस्थितस्यार्थस्य शब्दं प्रति विशेषणत्वसम्भवे त्यागायोगादिति भावः। सीरदेवस्त्वाह-"व्रश्च-" (पा० सू० ८।२।३६) इति सूत्रे राजेः पृथग् भ्राजिग्रहण-मिह ज्ञापकमिति।

नन्वेतदयुक्तं फणादिना राजिना साहचर्यात् तथाभूतस्यैव षत्वार्थतया भ्राजि-ग्रहणस्योपक्षीणत्वादिति चेत्? विभ्राट् विभ्रागिति रूपद्वयं हि साध्यं तच्च व्रश्चादिसूत्रे "राजृ" इति पठित्वाऽपि सुसाधम्। एकस्य भ्राजतेर्ऋकारस्य प्रागपि

---

ज्ञापकमितीति। भ्राजौ राजेरपि सत्त्वेन राजिग्रहणेनैव सिद्धेस्तद् व्यर्थं सज्ज्ञापकमिति भावः। तथाभूतस्यैवेति। फणादेरेवेत्यर्थः। राजृ इति पठित्वेति। न चैवमनुबन्धनिर्देशाद्राराष्टी-

---

१०९३५० तावन्तः पदातयश्च इत्येका अक्षौहिणी॥ "इण् ङ्शीनामाद्गुणः सवर्णदीर्घ-त्वादिति" विप्रतिषेधे परं कार्यमिति (१।४।२) इति भाष्ये "इण्ङिशीनामादगुणः सवर्ण-दीर्घत्वात्" प्रयोजनम्॥ अयज इन्द्रम् अवयइन्द्रम्। वृक्ष इन्द्रं, प्लक्ष इन्द्रं, तइन्द्रम्। य इन्द्रम् आदगुणश्च प्राप्नोति, सवर्णदीर्घत्वञ्च परत्वात् सवर्णदीर्घत्वं स्यात्, आद्गुणो-भवत्यन्तरङ्गतः॥ फणादेरेवेति। नन्वस्यामवस्थायामनर्थकस्य फणादिव्यतिरिक्तभ्राज-

---

यह विग्रह होगा, विग्रह का अर्थ होता है 'समस्यमान' पद के स्वरूप का बोधक वाक्य इसका भाव है वृत्ति का अर्थज्ञान कराने वाला वाक्य। अक्षौहिणी यहाँ पर "पूर्वपदात्संज्ञायाम्" (८।४।३) से णत्व हुआ है। 'अक्षाणाम्, ऊहः समूहः सोऽस्त्यस्याः' यह जो प्राचीनों ने विग्रह किया है, वह भी ऊहिनी शब्द के साथ षष्ठी तत्पुरुष करके किसी प्रकार बना लीजिये। ऊह शब्द के साथ समास हो जाने पर "अत इनि ठनौ" (५।२।११५) से इनि प्रत्यय कर देने पर वृद्धि नहीं होगी, प्रथम प्रवृत्त अन्तरङ्ग गुण से बाध हो जाने के कारण।

समर्थ ग्रहण होने से कृत सन्धि कार्य से ही तद्धित की उत्पत्ति होगी। तद्धितोत्पत्ति विषय में अकृतव्यूहपरिभाषा को मानते भी नहीं हैं। ऊहिनी शब्द के साथ विग्रह करने पर अपवादभूता वृद्धि चरितार्थ है। प्राचीनों से उपपादित जो समुदाय तद्घटक ऊहिनी शब्द में कल्पितार्थ का भी अभाव होने से, समास समुदाय में ही अर्थवत्त्व रहता है। अवयव में तो कल्पित अर्थवत्त्व होता है, उस कल्पित अर्थ का भी अभाव होने से "अक्षादूहिन्यामुपसंख्यानम्" इस वार्तिक सूत्र की भी अप्रवृत्ति हो जायगी। अपवाद भी यदि अन्यत्र चरितार्थ हो जाता है तो अन्तरङ्ग से बाधित हो जाता है। इट् ङि शी में सवर्णदीर्घ को बाधकर अयज इन्द्रम् इत्यादि में "आद्गुणः" से गुण होता है।

'स्वादीरेरिणोः' यही मान्य पाठ है, ईरेरिण्योः यह क्वाचित्क अपपाठ है। स्वेनेरितुं शीलमस्य इस विग्रह में "सुप्यजातौ" से णिनिप्रत्यय हो जायगा, उपपद समास हो जायगा स्त्रीलिङ्ग भिन्न में गुण प्राप्त रहता है "स्वादीरेरिणोः" से वृद्धि होती है। स्वैरिणी में ङीप् के पूर्वभाग को लेकर "स्वादीरेरिणोः" से वृद्धि होगी, जो यह कहते हैं कि सामान्यरूप से अथवा विशेष रूप से प्रातिपदिक ग्रहण रहने पर लिङ्ग बोधक प्रत्यय विशिष्ट का ग्रहण होता है, इत्यर्थक "प्रातिपदिक ग्रहणे लिङ्ग-बोधक प्रत्ययविशिष्टस्यापि ग्रहणम्" परिभाषा से "इरिणी" का ग्रहण हो जायगा उनका कहना

दातुं शक्यत्वात्–ऋभ्राज इति । "भ्राजभास–" (पा० सू० ७४१३) इति विकल्पस्य वाचनिकतया ऋकारस्य आत्मनेपदमात्रफलकतया वक्ष्यमाणत्वेन तत्स्थानेऽकारस्य सुपठत्वाच्च । तस्मात् सीरदेवोक्तं ज्ञापकमपि सम्यगेव । प्रैष्य- इति । एषसाहचर्यादिष्योऽपि अनव्ययं गृह्यते । तेन ण्यन्तादिषेः क्त्वो ल्यपि पररूप- मेव न तु वृद्धिः । प्रेष्य गतः ॥

प्रवत्सतरेति । अत्र कालापानुसारिणो वत्सरशब्दमपि पठित्वा वत्सरे देयमृणं- वत्सरार्णमित्युदाहरन्ति । अपरे तु वत्सशब्दमपि पठन्ति तत्सर्वं भाष्यादिविरुद्धम् ।

---

त्यादौ यङ्लुकि षत्वं न स्यादिति वाच्यम् । यङ्लुकश्छान्दसत्वात् "श्तिपा शपा" इत्यस्यानित्यत्वाच्च, भाष्ये तस्यानुक्तत्वाच्च । एतेन फणादित्वेन ग्रहणे गणेन ग्रहणाद्यङ्लुकि न स्यादित्यपास्तम् । गणेन निर्देशाभावाच्च । राट्, विभ्राट्, इत्यादौ राजत्वं तु भूतपूर्व- गत्या । राशब्दपूर्वकजृधातोः क्विपि निष्पन्नराजृशब्दे नपुंसके न षत्वं, सूत्रे राजृ इत्यनुना- सिकस्य पाठात् । सुपठत्वाच्चेति । एवञ्च "भ्राजभास" इति सूत्रे भ्राजिग्रहणं न कार्यमिति बोध्यम् । सीरदेवोक्तमिति । अत्रारुचिबीजं तु भ्रश्चादिसाहचर्येण धातुसञ्ज्ञकराजेर्ग्रहणं- स्यादिति भ्राजिग्रहणस्यावश्यकत्वम् । किञ्च भ्राजन्तर्गतराजेर्न ऋकारानुबन्धत्वं तस्य समुदायानुबन्धत्वादिति । भाष्यादिविरुद्धमिति । तदनुक्तत्वादिति भावः ॥

---

न्तर्गतराजेरपि राजिग्रहणेन ग्रहणसम्भवात्तत्रगणादित्वनिश्चयाभावेन कथं तत्साहचर्येण भ्राजौफणादित्वप्रतिपत्तिरिति चेन्न । विपराभ्यां जेरित्यत्र परस्परसाहचर्येणोपसर्गयोरिव प्रकृते फणाद्योरेव राजिभ्राज्योर्ग्रहणमित्याशयात् ।

समुदायानुबन्धत्वादिति । प्रयोगे क्वापि राजृ इत्येतादृशरूपानुपलम्भेन ऋकारानु-

---

उचित नहीं क्योंकि ङीप् का विशिष्ट में अन्वय होने से लिङ्गविशिष्ट परिभाषा से उद्धार नहीं हो सकता । अतः उससे समाधान निष्फल है ।

"प्रादूहोढोढ्येषैष्येषु" प्राचीनानुसार इसमें ऊह शब्द प्रक्षिप्त है, भाष्यादि में नहीं मिलता । मनोरमाकार के अनुसार इस समय भाष्यादि ग्रन्थों में देखा जाता है । "अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्" इसका भाव है । अर्थविशिष्ट शब्द सञ्ज्ञी होता है । लोक में अर्थ विशेष्य होता है शब्द विशेषणीभूत होता है । किन्तु "अग्नेर्ढक्" इत्यादि शास्त्रों में अग्निरूपादि अर्थों से ढगादि प्रत्यय असम्भव होने से उसका परित्याग नहीं करेगें, किन्तु लोक में जैसे विधि वश से पदच्युत प्रधानमन्त्री अप्रधान रहकर शरीर धारण करता है, शरीर को नष्ट नहीं करता । उसी प्रकार यहाँ पर भी, शब्द को विशेष्य कर देगें, अर्थ को विशेषण कर देगें, उसका परित्याग नहीं करेंगे । तथा च अर्थ होगा, अग्निरूपार्थवाचक अग्नि शब्द से ढक् प्रत्यय होता है । अतः यह परिभाषा लोकसिद्धा है, अपूर्वा नहीं । इसी बात को मनोरमाकार ने भी लिखा है । उपस्थित अर्थ को शब्द का विशेषण बनाने पर चारितार्थ्य सम्भव है तो उसका परित्याग नहीं करना चाहिये ।

सीरदेव कहते हैं, भ्राजि में भी राजि की सत्ता है । तथा च राजिग्रहण से भ्राजि का ग्रहण हो जायगा "वृश्च" (८।२।३६) इस सूत्र में पृथक् भ्राजिग्रहण व्यर्थ होकर ज्ञापन करेगा, "अर्थवद् ग्रहणे नानर्थकस्य ग्रहणम्" ।

यदि कहा जाय कि फणादिराजृ के साहचर्य से फणादि भ्राजृ में ही षत्व होगा, तदितर को षत्व नहीं होगा, अतः आवश्यक होने से सामर्थ्य-ह्रास के कारण ज्ञापक नहीं होगा, तो यह कहना अनुप-

बन्धवैशिष्ट्येन यस्योपदेशस्तद्ग्रहणस्य विज्ञेयतया पाणिनेश्च सर्वत्र हलन्त्यसूत्रोक्तभाष्यरीत्या समुदायोपदेश एव तात्पर्याद्विभ्राडित्यादिप्रयोगान्तर्गतस्य भ्राज्यवयवराजेर्ऋकाररूपानुबन्धवैशिट्येनोपदेशाभावाद्राजृग्रहणेनाग्रहणात् षत्वार्थं पृथक् भ्राजिग्रहणस्यावश्यकत्वेन न ज्ञापकत्वसम्भव इत्याशयः ।। केचित्तु धातुपाठे भ्राजृ इति ऋकारानुबन्धोच्चारणसामर्थ्यादवयवेऽप्युपदेशतात्पर्यकल्पनया राजृइत्यनेन भवत्येव भ्राजान्तर्गतस्यापि राजेर्ग्रहणम्, भ्राजभासेत्यनेन ह्रस्वविकल्पस्य वाचनिकत्वादकारानुबन्धोच्चारणेनाप्यात्मनेपदप्रवृत्तेस्सुलभतया तस्य षत्वमात्रफलकत्वादतस्सुस्थमेव ज्ञापकत्वम्, परन्तु न्यायसिद्धेऽर्थे ज्ञापकान्वेषणं नातीवोपयुज्यत इत्येवारुचिः ।

---

युक्त है, क्योंकि विभ्राट् विभ्राक् इन दो रूपों को सिद्ध करना आवश्यक है। इनका साधुत्व वृश्चादि सूत्र में राजृ पढ़कर भी हो जायगा। एक भ्राजृ को ऋभ्राज पढ़ेंगे, उसका राज ग्रहण से ग्रहण नहीं होगा। तथा च ऋभ्राज को षत्व न होने से विभ्राक् का साधुत्व हो जायगा, दूसरा धातु राज से ग्रहण हो जाने के कारण षत्व हो जायगा तथा च विभ्राट् प्रयोग बन जायगा।

अथवा भ्राज के पूर्व ऋकार न पढ़कर भ्राज पढ़ेंगे। "भ्राजभास" (७।४।३) में विकल्पवाचनिक होने से। ऋकार का फल आत्मनेपद मात्र है, वह आत्मनेपद, अकार को तत्स्थान पर पढ़नेमात्र से हो जायगा। अतः श्री सीरदेवोक्तज्ञापक सम्यक् है। "राजृ इति पठित्वा" इस प्रतीक को लेकर शब्दरत्नकार कहते हैं।

यदि कहो अनुबन्ध निर्देश होने के कारण "राराष्टि" इत्यादि यङ् लुक् में षत्व नहीं होगा तो नहीं कह सकते, यङ्लुक् में छान्दसत्व रहने से षत्व हो जायगा। दूसरा हेतु "श्तिपाशपा" यह अनित्य होने से षत्व हो जायगा। तीसरा हेतु भाष्य में "श्तिपाशपा" इसको देखा न जाने से षत्व हो जायगा, अतः जो कहते थे फणादि गण है, अतः यङ्लुक् में इसकी प्रवृत्ति नहीं होगी, वे परास्त हो गये। राट् विभ्राट् इत्यादि में तो राजृत्व "साम्प्रतिकाभावे भूतपूर्वगतिः" के बल से आ जायगा।

रा शब्द पूर्वक जृ धातु से क्विप् प्रत्यय करनेपर निष्पन्न जो नपुंसक राजृशब्द उसमें षत्व नहीं होता, सूत्र में राजृ अनुनासिक पाठ होने से। एवञ्च "भ्राजभास" इस सूत्र में भ्राजिग्रहण नहीं करना चाहिये ऋकारानुबन्ध में "नाग्लोपिशास्वृदिताम्" (७।४।२) से ह्रस्व निषेध हो जायगा तो अबभ्राजत् बन जायगा अकारानुबन्ध में "णौ चङ्युपधाया ह्रस्वः" (७।४।१) से ह्रस्व हो जाने पर 'अबिभ्रजत्' बन जायगा। एवञ्च 'सीरदेवोक्त ज्ञापक' भी सम्यक् है। इस कथन में अरुचि की प्रतीति होती है। अरुचि है "वृश्चादि के साहचर्य से धातुसंज्ञक राजृ का ग्रहण होगा। भ्राजि अन्तर्गत जो राजि है, उसमें धातुत्व नहीं है, अतः भ्राजि ग्रहण आवश्यक है। और भी भ्राजि के अन्तर्गत जो राजि है उसमें ऋकारानुबन्ध नहीं है, क्योंकि वह ऋकारानुबन्ध समुदाय का है। समुदायानुबन्ध अवयव का अनुबन्ध नहीं होता। क्योंकि यदुपदेश प्रयुक्ता जिसकी इत्संज्ञा होती है, तदुपकारकत्व उसमें रहता है।

एष के साहचर्य से एष्य भी अनव्यय लिया जाता है। अतः ण्यन्त इष् धातु से क्त्वा ल्यप् अव्यय संज्ञा हो जाने पर पररूप ही होता वृद्धि नहीं होती, प्रेष्यगतः इत्यादि में।

"प्रवत्सतरकम्बलवसनार्णदशार्णानामृणे" इस वार्तिक में कलापानुसारि वैयाकरण वत्सर शब्द को पढ़कर "वत्सरे देयमृणम् वत्सरार्णमित्यादि उदाहरण देते हैं। दूसरे वैयाकरण वत्स शब्द को भी पढ़ते हैं, यह सब भाष्यादि विरुद्ध है, क्योंकि भाष्यकार ने इसको कहा नहीं।

"अन्तादिवच्च" ( पा० सू० ६।१।६ )। इहैकः पूर्वपरयोरित्यनुवर्तते यथासंख्यं चेत्यभिप्रेत्याह-पूर्वस्यान्तवदादिति । स्थानिवत्सूत्रेणैव गतार्थमिदं सूत्रम् । न चाल्विध्यर्थमिति भ्रमितव्यम् । अस्याप्यल्विधावनिष्टत्वात् । अन्यथा अयजे इन्द्रमित्यत्र सवर्णदीर्घापत्तेः । तथा च वार्तिकम्—"न वा अताद्रूप्यातिदेशात्" इति ।

---

गतार्थमिदमिति । पूर्वपरयोरिति द्विवचननिर्देशेनोभयोरपि प्रत्येकं स्थानित्वादिति भावः । एवं च प्राच्छंतीत्यादौ विसर्गवारणाय ज्ञापकाश्रयणमपि न कार्यं, यतस्तत्र स्थानिवत्त्वेन रेफान्ते पदत्वं दुर्लभं, तस्य तत्स्थानिधर्मत्वाभावात् । आनुमानिकवचनकल्पनया प्र ऋच्छीत्यस्य प्राछर्थादेशे तु समुदाये प्रशब्दधर्माणां स्थानिवत्त्वेन लाभेऽपि प्रारित्यत्र तदलाभेन रेफे पदान्तत्वस्य दुर्लभत्वादिति बोध्यम् । न वेति । "वर्णाश्रये विधावन्ता-

---

स्थानिवत्सूत्रेणैवगतार्थमिदमिति । नव्यास्तु अमीक्षीरपेणेत्यत्र दकारे अदस् शब्दसम्बन्धित्वस्य पे इत्यत्र एकाजुत्तरपदत्वस्य च लाभार्थमिदमावश्यकं स्थानिवत् सूत्रस्य च न प्राप्तिः, आद्यस्याशास्त्रीयत्वात् । द्वितीयेऽनल्विधाविति निषेधात् । इदन्तु अप्राधान्येनालाश्रयणे एव प्रवर्तते ।

किञ्च मियः लिय इत्यत्र तेन धातुत्वं दुर्लभ तस्य स्थानिधर्मत्वाभावात् । आनुमानिकस्थान्यादेशकल्पेऽपि मी ई इति समुदायस्य स्थानिवत्वमिति न तस्य तत्त्वम् । अत्र पक्षे-प्रत्येकं स्थानिवत्वे तु स्वाश्वशब्दादीरिन् शब्दे परे स्वाश्वेरीत्यत्र वृद्धयापत्तिः स्यात् । तस्मात् गतार्थमेतदिति मूलं चिन्त्यमेवेत्याहुः ।

---

अन्तादिवच्च (६।१।८५) इस सूत्र में "एकःपूर्वपरयोः" से पूर्व पर का अनुवर्तन होता है । और यथासंख्येन अन्वय होता है । तथा च पूर्वस्यान्तवत् तथा परस्यादिवत् यह अर्थ होगा । अर्थात् यह जो एकादेश विशिष्ट है वह अन्त्याक्षर विशिष्ट पूर्व समुदाय वृत्ति धर्म वाला होता है, और आदि अक्षर-विशिष्ट पर समुदायवृत्ति धर्म वाला होता है । एकादेश है 'आर्' उससे विशिष्ट प्रार् अन्त्याक्षरविशिष्ट पूर्व समुदाय है प्र तद्वृत्ति धर्म है पदत्व, वह प्रार् में आ जानेपर "तुल्यवित्तिवेद्य" न्याय से रेफ में पदान्तत्व आ जायगा । स्थानिवत् सूत्र से ही "अन्तादिवच्च" सूत्र गतार्थ है । यह माननेवाले प्राचीनों के मत में 'प्र' इसके स्थान पर 'प्रार्' आदेश होता है । 'ऋच्छ' के स्थान पर 'आच्छं' आदेश होता है, 'प्र ऋच्छ' के स्थान पर 'प्राच्छं' आदेश होता है, तीनों में स्थानिता, तीनों में आदेशता । नवीनों के मत में तीनों में स्थानिता पूर्ववत् है, किन्तु आदेशता प्राच्छं यहाँ पर ही है । अतः रेफ को विसर्ग नहीं होता, पदान्तत्वाभाव होने से । ज्ञापकाश्रयण युक्त नहीं । [ आनुमानिक स्थान्यादेशविषयक प्राचीन नवीनमत ] पूर्वोक्त तीनों स्थानों पर पूर्वोक्त तीनों आदेश होते हैं । प्राचीनों के मत से । नवीनों के मत में तीनों के स्थान पर एक ही आदेश होगा । परन्तु प्राचीन मत ही युक्त है, क्योंकि "स्वस्य अश्वः, स्वाश्वः" दीर्घ हो जाने पर ईरिन् शब्द परे रहते "स्वादीरेरिणोः" से वृद्धि हो जायगी, क्योंकि स्व के स्थान पर स्वाश्व आदेश हुआ है । प्राचीनों के मत में तो स्व के स्थान पर स्वा आदेश, अश्व के स्थान पर आश्व आदेश, स्व अश्व के स्थान पर स्वाश्व आदेश होने से स्व शब्द से अव्यवहितोत्तर ईरिन् शब्द नहीं है । "पूर्वपरयोः" यह द्विवचन निर्देश होने से दोनों में और प्रत्येक में भी स्थानिता है ।

यदि कहो कि "अन्तादिवच्च" सूत्र से जब पूर्वान्तवद्भाव या परादिवद्भाव होता है, तो दोनों में स्थानिता रहती है जैसे "शिवेहि में" आङ् में स्थानिता है उसी प्रकार 'इहि' यहाँ पर भी स्थानिता

न विसर्ग इति। एतच्च 'सुखार्तः' इत्यादावपि तुल्यम्। अत्र च कार्यकालपक्षे बहिरङ्गत्वादसिद्धत्वमपि बोध्यम्। न च "नाजानन्तर्ये" इति निषेधः। यत्रान्तरङ्गे बहिरङ्गे वा अचोरानन्तर्यं तत्रेति हरदत्तपक्षे तत्प्राप्तावपि यत्र पश्चात्प्रवर्तमानेऽजानन्तर्यमिति कैयटमते निषेधाप्राप्तेः। बह्वपेक्षत्वेन बहिरङ्गाया वृद्धावजानन्तर्यसत्त्वेऽपि पश्चात्प्रवर्तमाने तदभावात्॥

---

दिवद्भावप्रतिषेधो वाच्यः" इत्यस्य प्रत्याख्यानमेतत्—न वा वक्तव्यं ताद्रूप्यस्य=वर्णमात्रवृत्तिधर्मस्यानेनातिदेशाभावादिति तदर्थः। पूर्वस्य परस्य च समुदायस्यान्तादिभ्यां वर्णाभ्यां पृथगवस्थिताभ्यां ये व्यवहाराः प्रातिपदिकत्व-सुबन्तत्व-प्रत्ययत्वादयस्ते कृतैकादेशस्यापि भवन्तीत्यर्थात्। अत एव तुक्यसिद्धवचनं चरितार्थम्। अन्यथाऽधीत्येत्यादौ ह्रस्वत्वप्रयुक्ततुक्सिद्धेरसिद्धवचनवैयर्थ्यं स्पष्टमेव। अत एव खट्वाभिरित्यत्रैस् नेति दिक्। अत्र चेति। सुखार्त इत्यत्र, प्रार्च्छतीत्यत्र चेत्यर्थः। आद्ये विशिष्य ऋतशब्दस्य तृतीयासमाससापेक्षत्वेनान्त्ये उपसर्गत्वधातुत्वादिसापेक्षत्वेन वृद्धेर्बहिरङ्गत्वादिति भावः। अचोरानन्तर्यमिति। अचोऽजानन्तर्यनिमित्तमित्यर्थः। पश्चात्प्रवर्तमाने इति। अन्तरङ्गे इत्यर्थः। अत्र च

---

वस्तुतस्तु सर्वे सर्वपदादेशा इत्यस्यार्थवत्येव स्थान्यादेशभाव इत्यत्रैव तात्पर्येण प्रत्येकंस्थानित्वे बाधकाभावः। एवञ्चादस्शब्दत्वं केवलोत्तरपदत्वञ्च स्थानिवत्वेन सुलभमेव 'भी, ली' वृत्तिधातुत्वस्यापि लाभात् निर्देशोऽपि सूपपन्नम्। स्वाश्व इत्यत्र तु स्वेत्यस्य स्वादेशः, अश्वेत्यस्याश्वादेशः स्व-अश्वेत्यत्र स्वाश्वादेशः इत्येव कल्पना इति स्ववृत्तिधर्मस्य स्वाश्वेत्यत्रालाभात्, न वृद्धिप्रसङ्गः। नव्यानां प्राचीनोक्तखण्डनन्नयुक्तमिति दिक्। एतेन प्रत्येकं स्थानित्वे प्रार्च्छतीत्यत्र विसर्गवारणाय ज्ञापकाश्रयणमपि न सम्यक् कार्यमित्याद्युक्तिरपि परास्ता एवञ्च स्थानित्वेन गतार्थमेतत्, इत्युक्तिः सम्यगेव। ताद्रूपस्येति वर्णवृत्तिधर्मनिमित्तके विधौ, अन्तादिवद्भावप्रतिषेधो वक्तव्यः, इत्यस्य प्रत्याख्यानमेतत् 'न वक्तव्यम् ताद्रूप्यातिदेशात्=तस्य वर्णस्य यद्रूपमसाधारणो धर्मस्तदेवताद्रूप्यम् स्वार्थे ष्यञ्

---

रहेगी। स्थानिवत् सूत्र से स्थानिवद्भाव करने पर समुदाय में स्थानिता रहेगी, तो स्थानिवत् सूत्र से गतार्थ कैसे होगा, इसका समाधान करते हैं। "पूर्वपरयोः" यहाँ पर द्विवचन निर्देश सामर्थ्य से प्रत्येक में स्थानिता है, अन्यथा समाहार करके पूर्वपरस्य यह कहते, अतः जैसे प्रत्येक में स्थानिता "अन्तादिवच्च" सूत्र से आती है, उसी प्रकार "स्थानिवत्" सूत्र से प्रत्येक में स्थानिता आती है। इसी अभिप्राय को मन में रखकर कहा गया स्थानिवत्सूत्रेण गतार्थम् "स्थानिवत्" सूत्र से गतार्थता स्वीकार कर लेने पर 'प्रार्च्छति' इत्यादि में विसर्ग वारण करने के लिये "उभयथर्क्षु" निर्देश सम्बन्धी ज्ञापकत्वाश्रयण भी नहीं करना पड़ता, क्योंकि स्थानिवद्भाव से रेफान्त में पदत्व दुर्लभ है। आर् एकादेश में स्थानिधर्मत्वाभाव है। समुदाय में प्रत्येक में स्थानिता है, वहाँ पर पदत्व नहीं है।

आनुमानिक स्थान्यादेश पक्ष में तो 'प्र ऋच्छ' इसके स्थान पर 'प्रार्च्छ' आदेश हो जाने पर तो समुदाय में 'प्र' शब्द वृत्ति धर्मों का स्थानिवद्भाव से लाभ हो जाने पर भी प्रार् में तो लाभ नहीं होगा, अतः रेफ में पदान्तत्व दुर्लभ है। यदि कहो कि "अल्विधि" में स्थानिवद्भाव करने के लिये

"षत्वतुकोः—" (पा० सू० ६।१।८६) इति सूत्रस्थं तुग्ग्रहणं ज्ञापकम्। अन्यथाऽधीत्येत्यादौ ल्यप्प्रवृत्तये पूर्वसमासे तत्र जाते संहिताया नित्यत्वात् ल्यबुत्पत्तिपर्यन्तमप्यसंहितयाऽवस्थानासम्भवेन एकादेशे ल्यपि तुगपेक्षया पदद्वयसम्बन्धिवर्णद्वयापेक्षैकादेशस्य बहिरङ्गतयाऽसिद्धत्वेन तद्वैयर्थ्यं स्पष्टमेव। तत्र पश्चात्प्रवर्तमाने तुक्यचोऽन्यानन्तर्यनिमित्तककार्यत्वान्न दोषः। अजानन्तर्यमिति। अचोऽन्यानन्तर्यमित्यर्थः।

---

तस्य योऽतिदेशस्तस्याभावः इत्येवं नञा सहार्थाभावेऽव्ययीभावः। वर्णमात्रवृत्तिधर्मस्य "अन्तादिवच्चेति" सूत्रेणातिदेशाभाव इति तदर्थः। अचोरानन्तर्यमिति। हरदत्तमिश्रा हि निमित्तनिमित्तिभावापन्नाज्द्वयनिरूपितपरस्परानन्तर्यनिमित्तकेऽन्तरङ्गे बहिरङ्गे वा बहिरङ्गासिद्धत्वन्नेत्यर्थं इत्याहुस्तदसत् फलाभावात् 'पचावेदम्' इत्यन्तरङ्गपरिभाषोदाहरणपरभाष्यविरोधाच्च।

---

यह है तो नहीं कह सकते। "अन्तादिवच्च" (६।१।८५) यह भी अल् विधि में पूर्वान्तवद्भाव या परादिवद्भाव नहीं करता। अन्यथा "अयजे इन्द्रम्, यहाँ पर 'आदि अक्षर विशिष्ट परसमुदायवृत्ति धर्म का अतिदेश करके सवर्ण दीर्घ होने लगता। इस बात को वार्तिककार ने स्पष्ट कहा है, "नवा अताद्रूप्यातिदेशात्" "वर्णाश्रये विधावन्तादिवद्भावप्रतिषेधो वाच्यः" इसका प्रत्याख्यान करने वाला वार्तिक है "नवेत्यादि" इसका अभिप्राय है वर्णमात्र वृत्तिधर्म का "अन्तादिवच्च" सूत्र से अतिदेश नहीं होता। पूर्वपर समुदाय में पृथक् स्थित जो अन्तादिवर्ण उनमें जो व्यवहार प्रातिपदिकत्व सुबन्तत्व प्रत्ययत्व इत्यादि वह एकादेश कर देने पर भी होता है। अतएव "षत्वतुकोरसिद्धः" इसमें तुक् कर्तव्यता में एकादेश असिद्धत्व बोधक वचन चरितार्थ होता है। अन्यथा अधीत्य इत्यादि में पूर्वान्तवद्भाव से ह्रस्व प्रयुक्त तुक् सिद्ध हो जायगा तुक् असिद्धत्व कथन व्यर्थ हो जायगा। अत एव 'खट्वाभिः' इत्यादि में अदन्तत्वातिदेश करके ऐस् नहीं होता।

जिस प्रकार प्राच्छेति के रेफ को विसर्ग नहीं हुआ, उसी प्रकार सुखार्त इत्यादि में भी नहीं होगा। कार्यकाल पक्ष में "सुखार्तः" यहाँ पर विशेष ऋत शब्द तथा तृतीया समास सापेक्ष के कारण बहुपदार्थापेक्षत्व रूप बहिरङ्गत्व होने से वृद्धि असिद्ध हो जायगी, प्राच्छेति में उपसर्गत्व धातुत्वादि सापेक्ष बहिरङ्ग वृद्धि असिद्ध होने से विसर्ग नहीं होगा।

यदि कहो कि 'नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः' इससे अन्तरङ्ग परिभाषा का निषेध हो जायगा। तो हरदत्त के मत में अन्तरङ्गशास्त्र में या बहिरङ्ग शास्त्र में अज्निष्ठ अजानन्तर्य निमित्तक कार्य रहने पर बहिरङ्ग परिभाषा नहीं लगती, तथा च प्राच्छेति इत्यादि में बहिरङ्गा वृद्धि में अज्निष्ठ अजानन्तर्य निमित्तक कार्य होने से "नाजानन्तर्ये" की प्राप्ति रहने पर भी कैयट के मत में अज्निष्ठान्यानन्तर्यनिमित्तक अन्तरङ्गकार्य करने पर बहिरङ्ग परिभाषा नहीं लगती, यह अर्थ होगा। रेफनिष्ठ अन्यानन्तर्य निमित्तक अन्तरङ्ग है। अज्निष्ठ अन्यानन्तर्य निमित्तक अन्तरङ्ग नहीं है। अतः परिभाषा की प्रवृत्ति नहीं होगी। इस परिभाषा का ज्ञापक "षत्वतुकोरसिद्धः" इस सूत्र में तुक् ग्रहण है, अन्यथा अधीत्य इत्यादि में ल्यप् की प्रवृत्ति के पूर्व समास हो जाने पर वहाँ पर संहिता नित्य होने से ल्यप् उत्पत्तिपर्यन्त बिना सन्धि के रहना असम्भव होने से एकादेश हो जाने पर ल्यप् हो जायगा, तुक् की अपेक्षा एकादेश में पदद्वय सम्बन्धि वर्णद्वय की अपेक्षा होने से बहिरङ्ग हो जायगा, अतः असिद्ध हो जायगा, तुक् ग्रहण व्यर्थ होकर "नाजानन्तर्ये" का ज्ञापन करेगा। अधीत्य में अन्तरङ्ग तुक् से अज्निष्ठ अन्यानन्तर्य निमित्तक कार्य होने से अन्तरङ्ग परिभाषा की प्रवृत्ति नहीं होगी। अजानन्तर्य का भाव होता है अज्निष्ठ अन्यानन्तर्य।

उपसर्गेणेति। यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसञ्ज्ञा इत्युक्तत्वादिति भावः। प्रार्षभीयतीति। "शरोऽचि" (पा० सू० ८।४।४९) इति द्वित्वनिषेधः। प्रेजत इति। एजृ दीप्तौ। कम्पनार्थस्तु परस्मैपदी। एजते कम्पते इति तु प्राचां-व्याख्यानं प्रामादिकमेव। एङ्र्येङित्येव सिद्धे परग्रहणमुत्तरार्थं, रूपग्रहणं तु चिन्त्यप्रयोजनम्। एङि पर इत्येव सिद्धेः। यथा "अमि पूर्वः" (पा० सू० ६।१।१०७) इति। नियोगेऽवधारणमिति। यदाहुः—

नावक्लृप्तौ यदा दृष्टः पररूपस्य गोचरः।
एवस्तु विषयो वृद्धेर्नियमोऽयं यदा भवेत्॥ १॥

---

यत्क्रियेति। यदर्थक्रियायुक्ता इत्यर्थः। इत्युक्तत्वादिति। भाष्यकारादिभिरिति शेषः। उत्तरार्थमिति। तेनाद्यश्योत्, भिन्द्युः, पचन्ति, इत्यादिसिद्धिः। "अतो गुणे" इत्युत्तरार्थम्" इति क्वचित्कोऽपपाठः। चिन्त्यप्रयोजनमिति। न च शिवायेत्यत्र "अणोऽप्रगृह्यस्य—" (पा० सू० ८।४।५७) इत्यनुनासिकत्वे तदनुकरणे ततः परमोमित्यस्य "ओमाङोश्च" (पा० सू० ६।१।९५) इति पररूपेऽनुनासिकाभावार्थं परस्य यादृशं रूपं तादृशं यथा स्यादिति रूप-ग्रहणम्। स्पष्टं चेदं "ऐऔच्" इत्यत्र भाष्ये कैयटे चेति वाच्यम्। "तृज्वत्क्रोष्टुः" (पा० सू० ६।१।९५) इति सूत्रभाष्योक्तरीत्या गुणस्य शब्दत्वादिवद्रूपत्वाभावेन रूपग्रहणे-नाव्यावृत्तेः रूपशब्देन च श्रावणज्ञानविषयोऽवयवसंस्थानवान्। अत एव तृज्वत्सूत्रे न हि स्वरो रूपवानित्युक्तम्। वर्णरूपावयवसंस्थानमेव शब्दस्य रूपं तद्वत्तयैव शब्दस्य रूपमिति

---

यदर्थक्रिया युक्तेति। यज्जन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वं-प्रादीनां तद्धातुनिरूपितोपसर्गत्वन्तेषामिति। प्रगतः ऋद्धः प्रर्द्धः इत्यादौ गम्धातुजन्यबोध-विषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वेन प्रशब्दस्य गम्धातुनिरुपितोपसर्गत्वमेव, न तु ऋध्धातुनिरुपितोपसर्गत्वमिति न वृद्धिः॥ अपपाठ इति। पूर्वत्र उस्यपदान्तादित्य-त्रापि प्रयोजनसत्त्वेनातोगुण इत्येतदर्थत्वप्रतिपादनस्यायुक्तत्वादिति भावः यादृशं रूपमिति। रूपमवयवसंस्थानं तद्यादृशंपरस्य तादृशं यस्य स यथा स्यादिति तदर्थः। नह्यन्यदीय-मवयवसंस्थानमन्यस्य भवति। रूपशब्देनेति। रूपवदर्थकेनेत्यर्थः। नहि स्वर इति। उदात्त-त्वादिगुणविशेषविशिष्टो वर्णस्तेन गुणेन न रूपवानिति तदर्थः।

वर्णरूपावयवसंस्थानमिति। वर्णरूपा येऽवयवास्तेषांक्रमविशेषविशिष्टस्सन्दर्भस्संस्थानम्, आनुपूर्वीति यावत्। रूपम् अत्राकारः—स च सकलपदार्थसाधारणो जातिगुणकर्म-

---

यज्जन्यबोधविषयीभूतक्रिया विशेष विषयक तात्पर्य बोधकत्व प्रादि में रहेगा तद्धातुनिरूपित उप-सर्गत्व ही प्रादि में रहेगा। जैसे प्रगतः ऋद्धः प्रर्द्धः, यहाँपर गम् धातु जन्यबोध विषयीभूत क्रिया-विशेष विषयक तात्पर्य बोधकत्व प्रशब्द में है। अतः गम् धातु निरूपित उपसर्गत्व ही रहेगा, ऋध् धातु निरूपित उपसर्गत्व नहीं रहेगा। अतः उपसर्ग से ही धातु का अध्याहार हो जायगा "उपसर्गा-दृतिधातौ (६।१।९१) में धातु ग्रहण, सूत्र विभाग के माध्यम से पुनः वृद्धि विधानार्थ है। अतः पर होते हुये भी "ऋत्यकः" पाक्षिकः प्रकृतिभाव नहीं करता। प्रार्षभीयति यहाँ पर "अचो-रहाभ्यां द्वे" से द्वित्व प्राप्त रहेगा "शरोऽचि" (८।४।४९) से द्वित्व निषेध हो जायगा। दीप्त्यर्थक एजृधातु से एजते का साधुत्व होता है, क्योंकि कम्पनार्थक एजृधातु परस्मैपदी है। एजते = कम्पते

व्यवहारः, स्वरस्तु न तद्वानिति शब्दत्वादिवन्न स शब्दस्य रूपमिति तदर्थः। तत्र सूत्रे रूपातिदेशे स्वरातिदेशो न स्यादित्युपक्रम्येदमुक्तम्। परः किंगुणको भवतीत्याकांक्षायां-स्थानिगुणक इति लभ्यते। तत्रोभयगुणकस्यासम्भवादेकस्थान्यन्तरतमत्वात्तद्गुणकस्यैवो-पस्थित्या च तस्यैव सिद्धेश्च। परशब्देन प्रयोगस्थस्योपस्थितस्य ग्रहणं, प्रयोगे च गुणो-भेदक एव। शास्त्रे परमुच्चारितो गुणोऽभेदको न तु प्रयोगे इति परशब्देनोपस्थितताननुना-सिकस्यैवैकस्थान्यन्तरतमत्वाद्विधिः। यत्र स्थानिद्वयगुणकसम्भवस्तत्र स एव। अत एव स्वरितान्तसुब्रह्मण्याशब्दस्य निपातत्वादुदात्तेन ओंशब्देन "ओमाङोः—( पा० सू० ६।१।९५ ) इत्येकादेशः सुब्रह्मण्योमिति स्वरित इति "तस्यादित-" ( पा० सू० १।२।३२ ) इति

भ्यस्तत्तत्पदार्थगतेभ्यो विलक्षणो भिन्नोभिन्नः, यथा घटादौ ततश्च शब्दगतानां शब्दत्वा-दिजातीनामानुनासिक्यादिगुणानां च न शब्दाकारता, किन्तु सन्दर्भविशेषविशिष्टानाम-वयवानामेव, निरवयवत्वे च तत्तद्व्यक्तिरेकैवाकाराकारभेदेन व्यपदिश्यते यथा गगनादौ, ततोऽनेकवर्णेऽपि तद्व्यवहारविरोध इति। ननु गुणानां रूपत्वाभावे निरुक्तरीत्या तन्निवा-रणायोगादेकस्थान्यन्तरतमत्वात्पाक्षिकी सानुनासिकप्रवृत्तिर्दुर्वारेत्यत आह परः किं गुणक-इत्यादि। तस्यैव सिद्धेरिति। ननु गुणानामभेदकत्वात् कथमुक्तार्थलाभस्तत्राह। पर शब्दे-नेत्यादि। न तु प्रयोगे इति। अन्यथागुणविधायकतावैफल्यमेव स्यात्। अत एव य उदात्ते

यह जो प्राचीनों की व्याख्या है, वह प्रामादिक ही है। अवर्णान्त उपसर्ग से धात्ववयव एङ् परे रहते एङ् होता है, इत्यर्थक "एङि एङ्" सूत्र से ही लक्ष्यों का साधुत्व हो जायगा पर ग्रहण उत्तरार्थ है, तथा च "ओमाङोश्च" उस्य पदान्तात् "अतोगुणे" इनमें पर का अनुवर्तन आ जाने से 'अद्य आ ऋश्यात्' इस स्थिति में "ओमाङोश्च" ( ६।१।९६ ) से पररूप करके गुण हो जायगा। भिद् धातु से लिङ्, झि यासुट् जुस् श्नम् अकार लोप सकार लोप हो जाने पर भिन्द्या+उस् इस स्थिति में "उस्यपदान्तात्" ( ६।१।९६ ) से पररूप होता है। पच्+अ+अन्ति इस स्थिति में "अतोगुणे" ( ६।१।९७ ) से पररूप होता है। "अतोगुणे" में अनुवर्तन करने के लिये पर ग्रहण करना चाहिये इस तरह का जो क्वाचित्क पाठ है, वह ठीक नहीं, क्योंकि इसके पूर्व भी "उस्यपदान्तात्" इत्यादि में ( ६।१।९६ ) 'पर' का अनुवर्तन आवश्यक है। रूपग्रहण तो चिन्त्य है, "एङि परः" इससे ही पररूप हो जायगा, जैसे "अभिपूर्वः" से पूर्वरूप होता है।

चिन्त्य प्रयोजन का भाव शब्दरत्नकार लिखते हैं। यदि कहा जाय कि शिवाय, यहाँ पर "अणोऽप्रगृह्यस्य" ( ८।४।५७ ) से अनुनासिक करके उसका अनुकरण करेंगे और उससे पर ओम् को रहने पर "ओमाङोश्च" ( ६।१।९५ ) से अनुनासिक पररूप न हो, किन्तु पर का जैसा रूप है वैसा ही रूप हो, अन्यदीय न हो इसके लिए रूपग्रहण करना चाहिये, यह "ऐऔच्" सूत्र के भाष्य कैयट में स्पष्ट है, तो यह अनुपयुक्त है "तृज्वत्क्रोष्टुः" (७।१।९५) इस सूत्र की भाष्योक्त रीति से रूप ग्रहण द्वारा अनुनासिक का व्यावर्तन नहीं हो सकता, क्योंकि शब्दत्वादि जाति की तरह अनुनासि-क्यादि गुणों में भी रूपत्वाभाव है। रूप शब्द से श्रावण ज्ञान विषय अवयव रचना विशेष अर्थात् आनुपूर्वी को लेते हैं। आनुपूर्वी को रूप शब्देन ग्रहण होने के कारण "तृज्वत्" सूत्र पर भाष्य-कार ने कहा है "स्वर रूपवान्" नहीं है। वर्ण रूपावयव रचना विशेष ही शब्द का रूप है, आनु-पूर्वी में ही शब्दरूपत्वेन व्यवहार होता है। स्वर तो आनुपूर्वी वाला होता नहीं, अतः शब्दत्व की तरह स्वर शब्द का रूप नहीं होता। इसका अभिप्राय है, जैसे शब्दत्व शब्द का रूप नहीं है, उसी प्रकार स्वर भी शब्दका रूप नहीं है। "तृज्वत्" सूत्र पर रूपातिदेश में स्वरातिदेश नहीं

एतेन नियोजनं नियोगो व्यापार इति व्याख्यानं परास्तम् । "यदैत्र पूर्वं-ज्वलने शरीरे" "ममैव जन्मान्तरपातकानाम्" इत्यादिप्रयोगविरोधात् । उदाहृत-

---

सूत्रे भाष्यकैयटयोरुक्तम् । "ऐऔज्" इति सूत्रे एकादेशे "आद् गुणः" (पा० सू० ६।१।८७) इत्यादौ दीर्घग्रहणं कर्तव्यं त्रिमात्रचतुर्मात्रा आदेशा मासूवन्निति वार्तिककृतोक्ते "अकः सवर्णे-" ( पा० सू० ६।१।१७१ ) इत्यत्र योगविभागेन "एकः पूर्वपरयोः" ( पा० सू० ६।१।८४) इति यो निर्दिष्टः स दीर्घ इति व्याख्याने पचन्तीत्यत्र दोषमाशङ्क्यैकदेशिनोक्तं-रूपग्रहणात् परस्य यादृशं रूपमित्यादि भाष्ये, तत्तु ह्रस्वत्वस्य रूपत्वाभिमानेन । सिद्धान्ते तु स्पष्टार्थमेव रूपग्रहणमिति तत्रैव भाष्ये सूचितम् । "इको गुण-" ( पा० सू० १।१।३ ) इति सूत्रस्थकैयटस्तु चिन्त्य एव । तत्र हि—इक्परिभाषाऽभावे जनेर्गुणोऽनुनासिकः स्या-दिति शङ्किते पररूपेण शुद्धो भविष्यतीति भाष्ये उक्तम् । तस्य मदुक्तरीत्या उपपत्तेः । "ऐऔच्" इतिसूत्रस्थकैयटस्तु पूर्वपक्षोपपादकत्वान्न स्वार्थे साधक इति दिक् ॥

---

कर्तव्ये अनुदात्तं करोति खण्डिकोपाध्यायस्तस्मै चपटां ददातीति वृद्ध्याह्निके भाष्यकारेणो-क्तमित्याशयः । यादृशं रूपमिति । अत एतीति सिद्धे गुण इत्युक्तेरकारे पररूपेण दीर्घा-प्रवृत्तिरित्यपि युज्यते वक्तुम् । सूचितमिति । सिद्धान्ते तस्योक्तार्थकताया आवश्यकत्वेऽवश्यं-चैतदेवं विज्ञेयम्' इत्यपि तत्र वदेत् ॥

---

होगा, यह उपक्रम करके कहा, पर कौन गुणवाला होता है, इस आशङ्का पर उत्तर दिया स्थानि-गुणक होता है । पूर्वोक्त लक्ष्य में उभयगुणक असम्भव होने से, एक स्थानी के अर्थात् परनिर-नुनासिक का सदृशतम तद्गुणक = शुद्ध की उपस्थिति होने से उसकी सिद्धि होती है, अर्थात् शुद्ध होता है । पर शब्द से प्रयोग में उपस्थित का ग्रहण होता है । प्रयोग में गुण विभिन्न व्यवहार सम्पादक ही लिया जाता है । शास्त्र में अवश्य उच्चारित गुण विवक्षित नहीं होता । प्रयोग में तो विवक्षित होता है । अतः पर शब्देन उपस्थित अननुनासिक को ही विधि होगी, एक स्थानि सदृशतम होने से ।

जहाँ पर स्थानिद्वयगुणक सम्भव है, वहाँ पर वह होता है । उभयगुणक सम्भव होने से ही स्वरितान्त सुब्रह्मण्या शब्द से 'सुब्रह्मणि साधुः' इस विग्रह में यत् टाप् "तित्स्वरितम्" से स्वरित तदन्त से ( "निपाता आद्युदात्ताः" से ) आद्युदात्त ओम् शब्द पर रहते "ओमाङोश्च" से पररूप हो जाने पर एकादेश स्वरित ही होता है । स्वरित समाहार रूप होने से उभयगुणक है, अतः सम्भव है । यह तस्यादित ( १।२।३२ ) सूत्र के भाष्य कैयट में वर्णित है । "ऐऔच्" इस सूत्र पर भाष्य में कहा है, एकादेश करने वाले "आद्गुणः" इत्यादि में दीर्घ ग्रहण करना चाहिये अर्थात् "आद्गुणः दीर्घः" "वृद्धिरेचि दीर्घः" कहना चाहिये । अन्यथा त्रिमात्र चतुर्मात्र स्थानी को त्रिमात्र चतुर्मात्र आदेश होने लगेगा । इस प्रकार वार्तिककार के कहने पर भाष्यकार ने कहा दीर्घग्रहण की आवश्यकता नहीं "अकः सवर्णे" इस सूत्र का विभाग करके 'दीर्घः' इसका व्याख्यान किये पूर्व पर के स्थान पर एकादेश दीर्घ होता है, किन्तु इस व्याख्यान में पचन्ति में दोष की आशङ्का करके एकदेशी ने कहा केवल 'पर' कह देने पर भी अकार अन्ति के अकार का रूप हो जायगा रूप ग्रहण सामर्थ्य से पर का जैसा रूप हो वैसा ही रूप होता है, अन्यदीय रूप नहीं । यह कथन ह्रस्वत्व में रूपत्व रहता है, इस अभिमान को सूचित करता है । सिद्धान्त में रूप ग्रहण स्पष्टार्थ है । यह "ऐऔच" सूत्र पर स्पष्ट है । इको गुण ( १।१।३ ) यहाँ का कैयट तो विचारणीय है । "इको गुणवृद्धी" ( १।१।३ ) इस परिभाषा सूत्र के अभाव में जन् धातु को अनुनासिक गुण होने लगेगा यह आशङ्का करके पररूप से शुद्ध हो जायगा यह भाष्यकार ने कहा, यह

वृत्तिस्थश्लोकविरोधात् । "लङः शाकटायनस्यैव" (पा० सू० ३।४।१११) "तपस्तपः कर्मकस्यैव" (पा० सू० ३।१।८८) इत्यादिसौत्रप्रयोगविरोधाच्च। यत्तु श्लोकवार्तिकमिदमित्याहुस्तद्भ्रमसात्।

शकन्ध्वादिष्विति। शकन्ध्वादिविषये तत्सिद्ध्यनुगुणं पररूपं वाच्यमित्यर्थः। अत एवाह—तच्च टेरिति॥ यदि तु "आत्" इत्यधिकारादकारस्यैवेष्यते तर्हि मनीषा, इति न सिद्ध्येत्।

केचित्तु मनः पतच्छब्दयोः पृषोदरादित्वादन्त्यलोपेऽकारस्यैव पररूपमाहुः।

---

नावक्लृप्तौ यदेति पाठे न छन्दोभङ्गः। तद्भ्रमसादिति। वृत्तौ भवमिति व्याख्याने वार्त्तिकशब्दस्य पूर्वनिपातापत्तिरित्याहुः।

विषय इति। शकन्ध्वादिष्विति विषयसप्तमीति भावः। अत एवाहेति। ईदृशव्याख्यानतो-लब्धमाहेत्यर्थः।

आहुरिति। अत्रारुचिबीजं तु वचनद्वयव्यापारो व्यर्थः। पृषोदरादित्वाट्टिलोपेनैव

---

नावक्लृप्ताविति। अनवक्लृप्तौ इति पाठान्तरम्। एवशब्दस्यार्थद्वयम्। अवधारणम् =नियमः। अनवक्लृप्तिः=असम्भवः। असम्भवेऽर्थेयदि एवकारः स्यात्तदा पररूपो भवति यथा क्वेव मोक्ष्यसे इत्युक्ते नास्ति सम्भवस्तत्र भोजनस्येतिगम्यते। असम्भवश्च तत्र स्थलसङ्कीर्णत्वादिना ज्ञेयः।

अवधारणे तु वृद्धिरेव यथा अमैवाव्ययेन, धातोस्तन्निमित्तस्यैव इत्यादौ।

ननु देशविशेषशब्दस्य लुप्तचातुरर्थिकाणन्तशकविशेषणत्वेऽपि जातिवाचकतया विशेषणानां चाजातेरिति पर्युदासाद्युक्तवद्भावाप्रसक्त्या बहुवचनान्तत्वमयुक्तमत आह—शकन्ध्वादिष्विति।

पृषोदरत्वादिति। पृषोदरादीनि यथोपदिष्टमित्यत्र आदिशब्दो न प्रभृतिवाची, किन्तु

---

मेरी रीति से हो लग सकता है। ऐऔच् सूत्रस्थ कैयट तो पूर्व पक्षोपपादक होने से स्वार्थ साधक नहीं है।

नियोग का अभिप्राय है, अवधारण = निश्चय। अनिश्चय अर्थ में जब एवकार देखा गया हो तो पररूप का विषय होता है। यदि नियम = निर्धारण, अर्थात् निश्चय में विद्यमान हो तो वह वृद्धि का विषय होता है। अतः भावघञन्त मानकर नियोजनं नियोगः अर्थात् व्यापार इस तरह का व्याख्यान करने वाले परास्त हो गये। वक्ष्यमाण कारणों के कारण तथा "यदैव पूर्वज्वलने शरीरम्" "ममैव जन्मान्तरपातकानाम्" इत्यादि प्रयोग विरोध होने से। यहाँ पर एवकार से व्यापार की प्रतीति नहीं होती, किन्तु निश्चयार्थ की प्रतीति होती है। तथा च 'नावक्लृप्तौ' इत्यादि उदाहृत वृत्तिस्थश्लोक विरोध होने से, "लङः शाकटायनस्यैव" (३।४।१११) "तपस्तपः कर्मकस्यैव" (३।१।८८) इत्यादि सौत्र प्रयोग विरोध होने से व्यापार अर्थ नहीं कर सकते। "नावक्लृप्तौ यदा" इस पाठ में छन्दोभङ्ग नहीं है। 'अनवक्लृप्तौ यदा' पाठ में तो छन्दोभङ्ग हो जायगा। जो यह कहते हैं कि श्लोकवार्तिक है, यह विचार विमर्श विना शीघ्रता का कथन है। क्योंकि "वृत्तौभवं वार्तिकम्" इस व्युत्पत्ति में "सप्तमीविशेषणे बहुव्रीहौ" (२।२।३५) से वार्तिक का पूर्व निपात होना चाहिये। किन्तु पूर्वनिपात प्रकरण अनित्य होने से श्लोकवार्तिक शब्द भी साधु है।

"शकन्ध्वादिषु पररूपं वाच्यम्" इसमें शकन्ध्वादिषु में विषय सप्तमी होने से अर्थ होगा, शकन्ध्वादि विषय में तत्सिद्धि के लिये अनुकूल पररूप होता है। इस व्याख्यान का निष्कर्ष है टि का

शकानां देशविशेषाणामन्धुः=कूपः—शकन्धुः। कर्काणां राज्ञामन्धुः। बदरीवाची तु कर्कन्धूशब्दो दीर्घान्तः "अन्धूदृम्भू–" इत्यादिना उणादिषु वक्ष्यते। अटतीत्यटा पचाद्यच्। कुलस्य अटा कुलटा। ईष उञ्छे, ईष गत्यादिषु। आभ्यां "गुरोश्च हलः" (पा० सू० ३।३।१०३) इत्यप्रत्यये ईषा। मनस ईषा मनीषा। हलस्य ईषा हलीषा लाङ्गलदण्डः। मूर्द्धन्योपधः। यस्तु—

प्रभुशङ्करयोरीशः स्त्रियां लाङ्गलदण्डके॥

इति रभसकोशात् तालव्योपधस्तस्मिन् परे "आद्गुणः" (पा० सू० ६।१।८७) इत्येव भवति। हलेशा। पतन्नञ्जलिर्यस्मिन् नमस्कार्यत्वादिति पतञ्जलिः। मार्तण्ड इति। केचिदत्र सवर्णदीर्घमाहुः। परा मार्ताण्डमास्थत्, पुनर्मार्ताण्डमाभरत्, विश्वो मार्ताण्डोऽव्रजदित्यादि वैदिकप्रयोगास्तेषामनुकूलाः॥

---

सिद्धेरिति। देशविशेषाणामिति। देशविशेषशब्दस्य यौगिकत्वेन जातिवाचकत्वाभावात् "विशेषणानां चाजातेः" (पा० सू० १।२।५२) इति न निषेध इति बोध्यम्। कुलस्याटेति। कर्मणः शेषत्वविवक्षायां षष्ठी। अन्यथा कर्मण्यणि कुलाटीति स्यादिति भावः।

---

प्रकारवाची, प्रकारः सादृश्यम् तच्च शास्त्रोक्तलोपागमवर्णविकाररहितत्वेन बोध्यम्। उपदिष्टमुपदेशः=उच्चारणम् तदनतिक्रम्य यथोपदिष्टम्। शिष्टैरित्यध्याहार्यम्। तथा च पृषोदरप्रकाराणि शिष्टैर्यथोच्चरितानि तथैव साधूनि स्युः। शिष्टास्तु शब्दतत्वसाक्षात्कारवन्तो योगिनः। उणादितः येषां संज्ञाशब्दानां साधुत्वं भवति तत्र धातोरावश्यकता अत्र तु धातोरावश्यकता नास्ति समासादिकृते प्रातिपदिकस्यैव लोपादेशादयः भवन्ति। यथा पृषत् उदरं यस्येतिविग्रहे समासे तकारलोपः।

यौगिकत्वेनेति। समस्तत्वेनेत्यर्थः। अयं भावः अजातेरिति जातिप्रवृत्तिनिमित्तकानां पर्युदासस्समासश्च समस्यमानपदार्थसंसर्गप्रवृत्तिनिमित्तकः॥ कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेनेत्यनुशासनात्। कर्मधारयेऽपि तादात्म्यमेव प्रवृत्तिनिमित्तम्। तादात्म्यस्य संसर्गत्वमनिच्छूनां तु विशेषणविशेष्यभाव एव तदित्यन्यत्।

---

पररूप होता है। यदि "आत्" का अधिकार होने से अकार का ही पररूप करेंगे, तो मनीषा का साधुत्व नहीं होगा। कोई तो मनस् पतन् को पृषोदरादि मानकर अन्त्य लोप करके अकार का ही पररूप करते हैं। वह ठीक नहीं क्योंकि वचनद्वयरूप व्यापार करना पड़ता है। पृषोदरादित्वात् टिलोप हो जायगा। शक देशविशेष के कूप को शकन्धुः कहते हैं। शक देशविशेष तो एक है, इसमें बहुवचन क्यों किये इसका समाधान शब्दरत्नकार लिखते हैं। देशविशेष शब्द यौगिक होने से जाति वाचकत्व इसमें नहीं रहेगा। अतः लुवर्थ के विशेषण में भी प्रकृति की तरह लिङ्गवचन होता है, जाति को छोड़कर, इत्यर्थक "विशेषणानां चाजातेः" (१।२।५३) से प्रकृति की तरह लिङ्गवचन हो जाने से बहुवचन हो जायगा, "अजातेः" यह निषेध नहीं लगा।

कर्कसंज्ञक राजाओं के कूप का नाम 'कर्कन्धुः' बदरीवाची कर्कन्धू शब्द दीर्घान्त है। "अन्धूदृम्भू" इत्यादि औणादिक सूत्र से इसका साधुत्व होता है। 'अटतीति' विग्रह करके पचादि अच् प्राप करके अटा का साधुत्व होता है। कुलस्य अटा कुलटा यहाँ पर कर्म में शेषत्व विवक्षा करके षष्ठी है। अन्यथा कर्म उपपद रहते अण् प्रत्यय हो जाने पर कुलाटी प्रयोग होने लगता। ईष (उञ्छे) ईष (गत्यादिषु) इन धातुओं से "गुरोश्च हलः" से अप्रत्यय करने पर 'ईषा' शब्दका साधुत्व होता है। "मनस ईषा" विग्रह करके समास, टि का पररूप करने पर मनीषा का साधुत्व होता है। मनीषा का

ओत्वोष्ठयोरिति । अकारस्य ओत्वोष्ठयोश्चैकत्र समासे स्थितौ सत्यामिदं प्रवर्तते । तेनेह न, वृषलसुतौष्ठव्रणस्ते इति ॥

अव्यक्तशब्दं व्याचष्टे—ध्वनेरिति । अनुकरणस्येति । परिस्फुटाकारादिवर्णस्येति भावः । तस्य चानुकरणत्वं किञ्चित्साम्येन बोध्यम् ।

यत्तु प्राचोक्तम् अतः किम् ? दकारान्ते मा भूदिति । यच्च व्याख्यातं दकारान्त इति रूपान्तरोपलक्षणं वटक् मरुत्, इत्यादेरपीति । तन्निःसारम् । प्रश्नस्य दान्त इत्युत्तरस्य च निरालम्बनत्वात् ।

यत्तु व्याचख्युः । "अतो गुणे" ( पा० सू० ६।१।९७ ) इत्यतोऽत इत्यनुवर्त्य शब्दाधिकाराश्रयणात्सिद्धमिति प्रश्नः । यदा जश्त्ववशाद्दान्तत्वं तदाऽपि स्यात्पुन-

---

किञ्चित्साम्येनेति । तदभावे हि भग्नदन्ताद्युच्चारिताव्यक्तशब्दे एव स्यादव्यक्तत्वं चार्थबोधाजनकत्वेनापि वक्तुं शक्यमित्याहुः ।

निरालम्बनत्वादिति । अद्ग्रहणं तद्भिन्नव्यावृत्त्यर्थमित्यर्थस्य बालैरपि सुज्ञेयत्वेनातः किमिति प्रश्नस्य दान्ते मा भूत्, वटक्, मरुदित्यत्र च मा भूदिति उत्तरस्य च निरालम्बनत्वमित्यर्थः । शब्दाधिकारेति । तदाश्रयणाच्चाच्छब्दस्येत्यर्थो भविष्यतीति भावः । तदाऽपि

---

इदं प्रवर्तते इति । अवर्णादोत्वोष्ठयोरचि तद्घटितसमासे पूर्वपरयोः पररूपमेकदेशो भवतीत्यर्थः ।

ध्वनेरिति । अविद्यमानकत्वादिशब्दस्येत्यर्थः । तस्य चाच्छब्दोऽनुकरणे एव सम्भवतीत्याशयेनाहानुकरणस्येति । अत्र "अलोऽन्त्यस्येति न प्रवर्तते ।" 'नानर्थके' इति निषेधात् । आम्रेडितस्य वेति वक्तव्ये "नाम्रेडितस्येत्यस्यारम्भाच्च ।

---

अर्थ वृद्धि होता है । हलीषा का, समास टि का पररूप करने पर साधुत्व होता है । लाङ्गलदण्ड इसका अर्थ होता है, मूर्धन्योपध है यदि कहा जाय कि "ईषा का अर्थ भी लाङ्गलदण्ड होता है, तो हलीषा का 'वही' अर्थ कैसे होगा तो यह कथन अनुपयुक्त है, क्योंकि "विशिष्टवाचकपदानां सति पृथग्विशेषणवाचकपदसमवधानेविशेष्यमात्रपरत्वम्", जैसे विशिष्टवाचकपद है, ईषा, उससे पृथक् विशेषणवाचक पद हल रहने पर विशेष्य मात्र का बोधक होने से दण्डमात्र का बोधन करेगा, लाङ्गलदण्ड को नहीं करेगा । प्रभु और शङ्कर अर्थ में ईश तथा लाङ्गलदण्ड अर्थक स्त्रीलिङ्ग में ईशा तालव्योपध परे रहते "आद्‌गुणः" ( ६।१।८७ ) से गुण हो जाने पर हलेशा ही प्रयोग होता है ।

"पतन्तः अञ्जलयोऽस्मिन्" लौकिक विग्रह, बहुव्रीहि समास टि का पररूप कर देनेपर पतञ्जलि शब्द सिद्ध होता है । "मार्तण्डः" यहाँ पर कोई सवर्ण दीर्घ करते हैं । तथा च उनके अनुकूल परा मार्ताण्डमास्थत्, पुनर्मार्ताण्डमाभरत्, विश्वोमार्ताण्डोव्रजादित्यादि वैदिक प्रयोग हो जाते हैं ।

"ओत्वोष्ठयोः समासे वा" का भाव है । अवर्ण से ओतु य ओष्ठघटक अच् परे रहते, ओतु या ओष्ठघटित समास रहने पर पूर्व पर के स्थान पर पररूप एकादेश होता है । वृषलसुत के साथ ओष्ठ का समास न होने से पूर्व पर के स्थान पर पररूप नहीं होता, किन्तु वृद्धि होती है, अतः "वृषलसुतौष्ठव्रणस्ते" प्रयोग होता है । "अव्यक्तानुकरणस्यात इतौ" इस सूत्र में अव्यक्त का अभिप्राय होता है, अनभिव्यक्त अकारादिवर्ण अर्थात् ध्वनि । उसका अनुकरण परिस्फुट अकारादि वर्ण अर्थात् स्पष्ट अकारादिवर्ण, इसमें आशङ्का है कि अनभिव्यक्त का विसदृश अभिव्यक्त अनुकरण कैसे हो सकता है । क्योंकि अनुकार्य के सदृश ही अनुकरण होना चाहिये, इसका समाधान करते हैं । किञ्चित् साम्य लेकर अर्थात् ध्वनि की सदृशता लेकर अनुकरणत्व बन जायगा । यदि किञ्चित् सादृश्य लेकर ध्वनि

रद्ग्रहणे तु श्रौततान्तत्वस्य विवक्षणान्नेत्युत्तरमिति तच्चिन्त्यम् । जश्त्वशास्त्रस्यासिद्धत्वेन पररूपस्यैव प्रवृत्तेः । "नाम्रेडितस्य–" ( पा॰ सू॰ ६।१।९९ ) इति निषेधे पटत्पटदित्युदाहरणस्यासम्बद्धत्वापत्तेश्च । तत्र हि भवदुक्तरीत्या प्राप्तिरेव नास्ति । दान्तत्वात् । एतेनानुकार्यानुकरणयोरभेदविवक्षया विभक्त्यभावेन गवित्ययमाहेतिवदपदत्वात् पटत् इतीत्यत्र जश्त्वं नेति ग्रन्थोऽपि प्रत्युक्तः । उत्तरग्रन्थविरोधात् । जश्त्वस्यासिद्धतया पररूपेणैव बाधाच्च ।

ननु तदपि नित्यं तथा च कथं पररूपविरहेण प्रयोग इति चेन्न । अलौकिकंप्रक्रियावाक्यमिदमिति स्वयमेव व्याख्यातत्वात् । संहिताया अविवक्षायां तत्सम्भवाच्चेति दिक् ॥

---

स्यादिति । एकदेशविकृतन्यायेनाच्छब्दत्वादिति भावः । जश्त्वशास्त्रस्येति । अनुकार्यानुकरणयोर्भेदे पदान्ततया जश्त्वेऽपीत्यादिः । तदसिद्धत्वेनात एव सत्त्वादिति भावः । ननु पुनरद्ग्रहणाज्जश्त्वासिद्धत्वमपि बोद्धयतामत आह—नाम्रेडितेति । उदाहरणस्य—वृत्त्यादिस्थस्य । अनुकार्यानुकरणयोरिति । सर्वत्र जश्त्वप्राप्त्योदाहरणसम्भवाशङ्कायां ह्येतदुक्तं तैरिति बोध्यम् । उत्तरग्रन्थेति । नाम्रेडितस्येत्यस्य पटत्पटदितीत्युदाहरणपरग्रन्थेत्यर्थः । ननु सग्रन्थो जश्त्वासिद्धत्वेन योज्य इति चेत्तत्राह—जश्त्वेति । तस्यासिद्धतया पररूपेणैव भवितव्यमिति जश्त्वस्याप्रवृत्तिलक्षणो बाधः । एवं च यदा जश्त्ववशाद्दान्तत्वमिति ग्रन्थासंगतिरिति सेयमुभयतः स्पाशारज्जुरिति भावः ।

---

ननु समकक्षयोर्बाध्यबाधकभावो भवति प्रकृते जश्त्वशास्त्रस्यासिद्धत्वेन बाधादित्यनुपपन्नमत आह—तस्यासिद्धतयेति । उभयतस्पाशारज्जुरिति । बाधनार्थकस्पश्धातोः भावे घञि कृते उभयतः स्पाशः संश्लेषो बाधकत्वं स्पर्शो वा यस्याः सा रज्जुः इति व्यधिकरणबहुव्रीहिः । यथा काचिद्रज्जुः पूर्वापरकोटी स्पृशति तथायं दोष इति भावः ।

---

का अनुकरण नहीं मानोगे तो भग्न दन्तादि से उच्चारित अस्पष्ट शब्द में ही पररूप एकादेश होगा । अव्यक्त का अर्थ बोधाजनक भी कह सकते हैं ।

"अव्यक्तानुकरणस्यात इतौ" ( ६ १।९८ ) इसमें अत् ग्रहण क्यों किये तो उत्तर दिया दकारान्त में पररूप न हो, उसका व्याख्यान किये दकारान्त रूपान्तर का उपलक्षण है, अतः वटक्, मरुत् इत्यादि में पररूप एकादेश नहीं होता यह जो प्राचीनों ने कहा है । वह सार रहित है । प्रश्न और उत्तर दोनों निराधार हैं । क्योंकि अद्ग्रहण तद्भिन्न को हटाने के लिये हैं, इसको बालक भी समझ सकते हैं, "अतः किम्" "दान्ते माभूत्" वटक् मरुत् इत्यत्रापि "माभूत्" यह उत्तर निराधार है ही । जिन्होंने यह व्याख्या की है कि "अतो गुणे" ( ६।१।९७ ) से अत् का अनुवर्तन करके शब्दाधिकार का आश्रयण से अत् शब्द को पररूप होता है यह अर्थ हो जायगा । जब जश्त्व के कारण दान्तत्व आ जायगा तो वहाँपर "एकदेश विकृत न्याय" से अत् शब्दत्व आजाने से पररूप हो जायगा, फिर अत्ग्रहण क्यों किये तो इसका उत्तर दिया श्रौत तकारान्त को ही पररूप एकादेश हो, इसलिए यहाँ अत्ग्रहण किया गया । यह व्याख्यान विचारणीय है, इसमें हेतु उपस्थित करते हैं । अनुकार्य अनुकरण में भेद विवक्षा पक्ष में पदान्तत्वेन जश्त्व हो जाने पर भी जश्त्व को असिद्ध हो जाने पर अत् ही है, अतः पररूप की प्रवृत्ति हो जायगी, पुनः अत्ग्रहण से जश्त्वासिद्धत्व का बाध हो जायगा, इसको कहो तो नहीं कह सकते "अव्यक्तानु" से पररूप प्राप्त रहने पर "नाम्रेडितस्य" से निषेध हो जाने पर पटत्पटद् वृत्त्यादिस्थ उदाहरण की असम्बद्धतापत्ति हो जाने से । पटत्पटद् यहाँ पर आपकी रीति

"अकः सवर्णे" (पा० सू० ६।१।१०१) ॥ अचि पर इति। यदा तूष्मणामीषद्विवृतत्वमाश्रित्य "नाज्झलौ" (पा० सू० १।१।१०) इति सूत्रं प्रत्याख्यायते तदा इहाचीति नानुवर्तनीयम्। अकोऽकि दीर्घ इति सुवचम्। वर्णद्वयं द्विमात्रमिति। यत्तु प्राचा व्याख्यातं दीर्घे प्राप्ते ह्रस्व ऋकार लृकारश्च विधीयत इति तद्भाष्यकैयटादिविरोधादुपेक्ष्यम् ॥

---

दिगिति। दिगर्थस्तु अपदान्तादित्यनुवृत्त्यैव जश्त्वविषये व्यावृत्तिसिद्धेः पुनरद्ग्रहणं व्यर्थमेव। एतेन पुनरद्ग्रहणं श्रौततान्तत्वविवक्षाद्वारा जश्त्वाविषयेऽभेदविवक्षायामेव यथा स्यान्न तु भेदविवक्षायां जश्त्वविषय इत्यर्थकमित्यपास्तम्। ममाद्ग्रहणं तु शब्दाधिकारानित्यत्वज्ञापनार्थमिति दिक् ॥

सुवचमिति। जातिपक्षाश्रयणे यथासङ्ख्ये नेष्टसिद्धेरिति भावः। एवं रीत्या यथासंख्यम्—"इको यणचि" (पा० सू० ६।१।७७) इत्यत्रापि बोध्यमिति सूचितम्। तद्भाष्येति। "तुल्यास्य" (पा० सू० १।१।६) सूत्रस्थभाष्येत्यर्थः। तत्र हि "अकः सवर्णे–" (पा० सू० ६।१।१०१) इति सूत्रेणैतद्वार्तिकान्यथासिद्धिरुद्भाविता।

---

अन्यथासिद्धिरिति। ईषत्स्पृष्टयोरप्यकारलृकारयोर्द्विमात्रकत्वाद्दलृकसूत्रे पाठेनाच्त्वाच्च दीर्घतया होतृ ऋकार इत्यादौ रेफद्वयवत्तासाम्यात् कदाचिदीषत्स्पृष्टदीर्घः कदाचिद्विवृतत्व-

---

से प्राप्त ही नहीं है दान्त होने से। सर्वत्र जश्त्व की प्राप्ति होने से उदाहरण असम्भव की आशङ्का के कारण कहते हैं, अनुकार्य अनुकरण में अभेद विवक्षा हो जाने से विभक्ति की उत्पत्ति न होने से "गवित्याह" इसकी तरह अपदान्त होने से पटत् यहाँ पर जश्त्व नहीं होगा, पूर्वोक्त समाधान से तथा वक्ष्यमाण दोष होने से। इस ग्रन्थ का भी उत्तर दिया गया। "नाम्रेडित" इसका पटत्पटद् यह उदाहरणपर उत्तर ग्रन्थ विरोध होने से। जश्त्व को असिद्ध हो जाने पर पररूप से बाध हो जाने से जश्त्व को असिद्ध होने पर पररूप ही होगा, जश्त्व प्रवृत्ति रूप बाध है। तथा च जब जश्त्ववश से दान्तत्व आ जायगा, तब उक्त ग्रन्थ असङ्गत हो जायगा। तथा च दोनों ओर आपत्ति है। यदि कहो पररूप करने वाला सूत्र तो नित्य पर रूप करेगा तथा च पररूपाभाव बिना कैसे प्रयोग होगा। दान्त का श्रवण नहीं होगा, तो नहीं कह सकते, क्योंकि आपने स्वयं व्याख्यान किया है कि यह अलौकिक प्रक्रिया वाक्य है। संहिता की अविवक्षा कर देने पर दकारान्त प्रयोग भी सम्भव है। यह दिग्दर्शन है दिगर्थनिरूपण शब्दरत्नकार करते हैं। अपदान्तात् की अनुवृत्ति से ही जश्त्वविषय में व्यावृत्ति सिद्ध है। फिर अत् ग्रहण क्यों किये वह पड़ेगा व्यर्थ, व्यर्थ पड़कर शब्दाधिकार का अनित्यत्व ज्ञापन करेगा। इस कारण जो यह कहने वाले थे कि पुनः अत् ग्रहण श्रौततान्त विवक्षा द्वारा जश्त्वाविषय अभेद विवक्षा में ही पररूप हो, भेद विवक्षा जश्त्व विषय में न हो। वे परास्त हो गये।

अक् से सवर्ण अच् परे रहते दीर्घरूप एकादेश होता है। भाष्यकार ने अच् हल् की सवर्ण संज्ञा न हो इसलिए ऊष्मा संज्ञक वर्णों का ईषद्विवृत्त प्रयत्न माना और नाज्झलौ सूत्र का प्रत्याख्यान कर दिया। इस स्थिति में यहाँ पर अच् के अनुवर्तन की कोई आवश्यकता नहीं है। "अकः सवर्णे दीर्घः" इसके स्थान पर "अकोऽकि दीर्घः" ही कहना चाहिये जाति पक्ष का आश्रय लेकर यथासंख्य से इष्ट सिद्धि हो जायगी। इसी प्रकार "इकोयणचि" में भी "यथासंख्य" से निर्वाह हो जायगा।

"ऋति ऋवा" "लृतिलृवा" ऋकार परे रहते ऋ होता है। यह ईषत्स्पष्ट संज्ञक होता है। इसमें

"एङः पदान्तात्" (पा० सू० ६।१।१०९)॥ "ङसिङसोश्च" (पा० सू० ६।१।११० ) इत्यस्यारम्भादस्य पदान्तविषयत्वे लब्धे उत्तरार्थं पदान्तादिति स्पष्टार्थमिहैव कृतम् ॥

"सर्वत्र विभाषा गोः" (पा० सू० ६।१।१२२) यद्यपि छन्दसीति न प्रकृतं-तथाऽपि "यजुष्युरः" (पा० सू० ६।१।११७) इत्यादिप्रक्रमाच्छन्दस्येवेदमिति सम्भाव्येत अतः सर्वत्रेत्युक्तम्। तद्वयाचष्टे-लोके वेदे चेति। इह "एङः" इत्यनुवर्त्यैङन्तस्य गोरिति व्याख्येयम्। तेनेह न। चित्रग्वग्रमिति। प्रतिपदोक्तस्य एङो-ग्रहणान्नेह। हे चित्रगोऽग्रम्। प्रकृतिभाव इति। "प्रकृत्याऽन्तः पादम्" (पा०

---

आरम्भादिति। अपदान्ताच्चेन् ङसिङसोरेवेति नियमादिति भावः। उत्तरार्थमिति। "इकोऽसवर्णे" (पा० सू० ६।१।१२७) इत्याद्यर्थम्। स्पष्टार्थमिति। विभक्तौ चेन्ङसिङसो-रेवेति नियमशङ्कावारणार्थमिति भावः।

इत्यनुवर्त्येति। षष्ठ्या विपरिणमय्येत्यपि बोध्यम्। प्रतिपदोक्तस्येति। एङ्ग्रहणान्नृ-त्त्येति भावः। प्रतिपदोक्तपरिभाषया वा। वर्णग्रहणे तदप्रवृत्तिज्ञापकस्य तदनित्यतामात्र-ज्ञापकत्वम्। ध्वनितं चेदम् "ओत्" (पा० सू० १।१।१५) सूत्रे भाष्ये। "एङः पदान्तात" (पा० सू० ६।१।१६) इत्यत्र तु "हलोऽनन्तराः" (पा० सू० १।१।७) इत्यादिनिर्देशान्न

---

साम्याद्विवृतदीर्घः, तथा होतृ+लृकार इत्यादौ हल्द्वयवत्तासाम्यादुत्तरवार्तिकविधेय-ईषत्स्पृष्टः पक्षे चोभयस्थान्यन्तरतमस्यपरस्यान्तरतमस्य चाप्रसिद्धत्वात् पूर्वस्थान्यन्तरतम-एव विवृतोदीर्घ इत्येवं तदुद्भावनमित्यन्यत्र विस्तरः॥ षष्ठचेति। सामानाधिकरण्येनान्व-यार्थमितिभावः। वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिवादिमताभिप्रायेणाह-

---

दो रेफ रहते हैं उसकी एक मात्रा, और चारो तरफ अच् की मात्रा होती है, जैसे ऋ यहाँपर। उसी प्रकार लृकार परे रहते लृ होता है। यह ईषत्स्पष्ट संज्ञक है, इसमें दो लकार रहते हैं, उनकी एक मात्रा अच् मात्रा चारो तरफ होती है, जैसे लृ यहाँ पर। ऋ लृ के चारों तरफ वर्तुलाकार अच् की मात्रा रहती है किन्तु सीसकाक्षर न होने से ऋ लृ लिखा गया। भाष्यकार ने अच् पर इनका पाठ किया है। जो यहाँ पर प्राचीनों ने व्याख्या की है, कि दीर्घ प्राप्त रहता है, ह्रस्व ऋकार लृकार का विधान करते हैं। यह भाष्य कैयटादि के विरुद्ध है। "तुल्यास्यप्रयत्नं सवर्णम्" (१।१।९) इस सूत्र पर भाष्यकार ने कहा कि "अकः सवर्णे दीर्घः" से ही वार्तिक साध्यफलों का साधुत्व हो जायगा 'वार्तिक की कोई आवश्यकता नहीं' इसको संस्कृत टीका में दिखा दिया गया है।

"एङः पदान्तादति" (५।१।१०९) का अर्थ होता है। पदान्त एङ् से अत् परे रहते पूर्वरूप एकादेश होता है। "ङसिङसोश्च" (६।१।११०) सूत्रारम्भ सामर्थ्य से अपदान्त से हो तो ङसिङस् को ही पूर्वरूप हो इस नियम के बल से "एङः पदान्तादति" में पदान्तविषयत्व लाभ हो जायगा, "इको सवर्णे" इत्यादि के लिये पदान्तात् आवश्यक होने से स्पष्टार्थ अर्थात् विभक्ति परे रहते यदि पूर्व रूप हो तो ङसिङस् को ही हो। इस नियमशङ्कावारणार्थ, "एङः" यहाँ पर ही पदान्तात् यह कहा।

"सर्वत्र विभाषा गोः" (६।१।१२२) इसमें छन्दसि का अनुवर्तन प्रकरण प्राप्त नहीं है, तथापि "यजुष्युरः" (६।३।११७) का प्रकरण होने से यजुर्वेद में ही प्रकृति भाव होता है, इसकी सम्भावना हो जायगी। अतः सर्वत्र पद का उपादान किये। उसी का व्याख्यान है, लोक अथवा वेद में एङन्त जो गो शब्द उसको प्रकृतिभाव होता है, अत् परे रहते पदान्त में। यहाँपर "एङः" का अनुवर्तन कर कार्य के वश से षष्ठ्यन्तत्वेन विपरिणाम करने पर "एङन्त जो गो शब्द" इस अर्थ का लाभ होने से

सू० ६।१।११५ ) इति सूत्रात्प्रकृत्येत्यनुवृत्तेः । यद्यपि भाष्ये "इको गुणवृद्धी" ( पा० सू० १।१।३ ) इति सूत्रे "नान्तः पादम्" इति पाठः स्थितः । षाष्ठभाष्येऽप्येवम् । तथापि शाकलसूत्रे "ह्रस्वश्च" इति चकारेण "प्रकृत्या इत्यनुकृष्यते" इति भाष्यदर्शनात् "प्रकृत्यान्तः पादम्" इति पाठोऽपि साधुरेव । "न" इति पाठे तु "सर्वत्र" इति सूत्रेण पूर्वरूपमेव विकल्प्येतेत्यवधेयम् ।

"अवङ् स्फोटायनस्य" ( पा० सू० ६।१।१२९ ) अत्राप्येङन्तस्य गोरिति । व्याख्येयम् । अगिति सूत्रयितुमुचितम् । विभाषानुवृत्तेः स्फोटायनग्रहणं पूजार्थम् । गवीति । यत्तु प्राचा गवे इति प्रत्युदाहृतम् । तन्न । सत्यप्यवङि "अतो गुणे"

---

प्रतिपदोक्तग्रहणम् । अत्र च स्थानिवत्सूत्रस्थं भाष्यं मानमित्यन्यत्र विस्तरः । पूर्वरूपमेवेति । पूर्वरूपमपीत्यर्थः । गोशब्दस्य यद्यत्प्राप्तं तन्नेति व्याख्यानेन "नान्तः पादम्" इत्यनेनैव पूर्वत्वादिकं विकल्पेन निषिध्येतेत्यर्थः । तेनावादेशोऽपि न ।

---

आवृत्त्येति । "ओत्" इति सूत्रे अदोऽमवत् "इत्यत्र प्रवृत्तिवारणपरभाष्याद्वर्णग्रहणेऽसौ प्रवर्तते इत्याशयेनाह—प्रतिपदोक्तेति । अवादेशोऽपि नेति पाठयोः फलैकतालाभार्थमनन्तरस्येतिन्यायोऽत्र नाश्रीयत इत्याशयः ॥

---

चित्रग्वग्रम् में प्रकृतिभाव नहीं होता । प्रतिपदोक्त=अर्थात् साक्षात् उच्चरित, एङ् का ग्रहण होने से लाक्षणिक "चित्रगोऽग्रम्" यहाँ पर प्रकृतिभाव नहीं होता है, क्योंकि यहाँ पर "ह्रस्वस्य गुणः" से उकार को ओकार हुआ है । प्रतिपदोक्त ही एङ् ग्रहण होता है, इसका लाभ किस प्रकार हुआ, इसको शब्दरत्नकार लिखते हैं । एङ् के आवर्तन से प्रतिपदोक्त एङ्, का लाभ हो जायगा । जैसे 'दादेर्धातोः' में दादि पद की आवृत्ति से विशेष अर्थ की प्रतीति होती है, उसी प्रकार यहाँ पर भी प्रतीति हो जायगी । अथवा "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्" इस परिभाषा के बल से प्रतिपदोक्तत्व का लाभ हो जायगा । वर्ण ग्रहण में जो अप्रवृत्ति के ज्ञापक हैं, वे अनित्यता मात्र के ज्ञापक हैं, यह "ओत्" ( १।१।१५ ) सूत्र के भाष्य से ध्वनि निकलती है । अनित्यत्व का ज्ञापक "भुवश्च महाव्याहृतेः" ( ८।२।७१ ) इसमें महाव्याहृति ग्रहण है, अन्यथा जसन्त या ङसन्त भू शब्द से बना जो भुवः उसका "लक्षणप्रतिपदोक्त" परिभाषा से वारण हो जाता महाव्याहृति ग्रहण निष्फल है । "एङः पदान्तात्" इसमें तो "हलोऽनन्तराः" ( १।१।७ ) इत्यादिनिर्देश के बल से प्रतिपदोक्त एङ् का ग्रहण नहीं होता है । यहाँ पर स्थानिवत्सूत्रस्थभाष्य प्रमाण है । उद्योत में इसका विस्तरेण वर्णन है ।

"सर्वत्र विभाषा गोः" इस सूत्र में "प्रकृत्यान्तः पादम्" ( ६।१।११५ ) इस सूत्र से प्रकृति की अनुवर्तन आने से प्रकृतिभाव अर्थ का लाभ होता है । यद्यपि "इको गुणवृद्धी" इस सूत्र के भाष्य में "नान्तः पादम्" यह पाठ स्थित है । षाष्ठभाष्य अर्थात् ६।१।११९ में भी "नान्तः पादमव्यपरे" मिलता है । किन्तु "इको सवर्णे शाकल्यस्य ह्रस्वश्च" यहाँ पर "चकारेण प्रकृत्या अनुकृष्यते" यह भाष्य में देखा जाने से "प्रकृत्यान्तः पादम्" यह पाठ भी साधु है । "न" इस पाठ में तो "सर्वत्र" इस सूत्र से पूर्वरूप ही विकल्प से होगा । "पूर्वरूपमेव" का अभिप्राय शब्द रत्नकार के मत से है, "पूर्वरूप का भी" अर्थात् एवकार अपि के अर्थ में है । गो शब्द को जो प्राप्त है वह नहीं होता, इस व्याख्यान में "नान्तः पादमव्यपरे" की तरह पूर्वत्वादि का विकल्प से निषेध होगा । तथा च अवादेश भी नहीं होगा ।

एङन्तस्य गोरिति। प्रतिपदोक्तस्यैङ इत्यपि बोध्यम्। ननु "गोरग्वचनं स्वरसिद्ध्यर्थमन्यथावङ् कदाचिदन्तोदात्तोऽपि स्याद्" इत्येतत्सूत्रस्थभाष्यप्रामाण्याच्चित्रग्वग्रमित्यत्रावङभावोऽस्तु तत्रावङो रूपे विशेषस्य स्पष्टत्वात्। चित्रगोऽग्रमित्यत्रावङभावकल्पने किंमानमिति चेन्न। उपदेशे आद्युदात्तत्वनिपातनेनावङ्न्यासस्थापनपरभाष्यस्य मानत्वात्। चित्रगोशब्द आमंत्रिताद्युदात्तत्वेनान्तानुदात्तस्तत्राकि तस्यागमानुदात्तत्वे उभयोरनुदात्तयोरेव श्रवणं स्यात्। आद्युदात्तत्वे निपातने तु गकाराकारस्योदात्तस्येति विशेषः स्पष्टः। न च गवाक्ष इत्यादावबङ आद्युदात्तस्य श्रवणं माभूदिति तस्योपदेशिवद्भावो वाच्य इति समासान्तोदात्तादिवामन्त्रिताद्युदात्तादपि प्रागवङ्स्वरप्रवृत्तौ पश्चादामन्त्रितस्वरे स्वरभेदाभाव इति वाच्यम्। गवाक्ष इत्यादौ समानकालप्रवृत्तिकस्य परत्वेन प्रथमं प्राप्तस्य समासस्वरस्य प्रागप्रवृत्तौ उपदेशिवद्भाववचनचारितार्थ्येनाङ्गसंज्ञासापेक्षबहिरङ्गगुणापेक्षयाऽन्तरङ्गत्वात्पूर्वमेवामन्त्रितस्वरप्राप्त्या तदप्रवृत्तिसंपादनेऽस्य सामर्थ्याभावात्। तद् ध्वनयन्नाह—अगितीत्यादि। यथान्यासे त्वाद्युदात्तनिपातनोपदेशिवद्भावयोः करणे गौरवादस्यौ-

---

प्रतिपदोक्तस्येति। प्रतिपदोक्तत्वम् = साक्षादुच्चरितत्वम् तत्वञ्च "स्वीयोद्देश्यतावच्छेदकज्ञानायोपयुज्यमाना या आनुपूर्वी तया साक्षादवच्छिन्नविधेयताश्रयत्वम्। स्वं- "अवङ्स्फोटायनस्येति" सूत्रम् अत्र उद्देश्यतैङन्तगोशब्दे तदवच्छेदकत्वं गोत्वं तज्ज्ञानायोपयुज्यमानानुपूर्वी गकारोत्तरौत्वम् तया साक्षादवच्छिन्ना विधेयता "सास्नामति मांसपिण्डे" गोशब्दः विधीयते। विधेयताश्रयः एङन्तगोशब्दः इति। कदाचिदिति। व्युत्पत्तिपक्षे हि गोशब्दस्य "गमेर्डोः" (उ० २।२।३५) इति डो प्रत्यये "आद्युदात्तश्चेत्यनेनौप्रत्ययस्याद्युदात्तत्वे आद्युदात्तत्वसाम्येन अवङ्इत्यादेशस्यान्तरतमपरिभाषयाऽऽद्युदात्तत्वम्। अव्युत्पत्तिपक्षे "फिषोऽन्त उदात्तः" इत्यनेनान्तोदात्तत्वे अन्तोदात्तत्वसाम्येन चान्तोदात्तत्वम्। विशेषः स्पष्ट इति। अयं भावः "चित्रगो" इत्यत्र "आमन्त्रितस्यचे"त्यनेन य-

---

"अवङ्स्फोटायनस्य" (६।१।२३) इस सूत्र में भी एङ् का सम्बन्ध होने से अर्थ होता है, प्रतिपदोक्त एङन्त जो गो शब्द तदवयव जो अच् उसको अवङादेश होता है, अच् परे रहते पदान्त में विकल्प से। इस सूत्र में एङ् प्रतिपदोक्त ही लिया जाता है, इसको दृढ़ करने के लिये आशङ्का करते हैं। ननु गोरग्वचनमित्यादि। प्रतिपदोक्त का अभिप्राय होता है, साक्षात् उच्चरित अर्थात् "स्वीयोद्देश्यतावच्छेदकज्ञानायोपयुज्यमाना या आनुपूर्वी तथा साक्षादवच्छिन्नविधेयताश्रयत्वम्" स्व पदेन "अवङ्स्फोटायनस्य" सूत्र लेगें। तदुद्देश्य है, एङन्त गोशब्द तदवच्छेदक है गोत्व उसके ज्ञान के लिये उपयुज्यमाना आनुपूर्वी है गकारोत्तर ओत्व आनुपूर्वी उससे साक्षादवच्छिन्न विधेयता गो शब्द में रहेगी, क्योंकि सास्नादिविशिष्ट मांसपिण्ड में गो शब्द का विधान हुआ है। विधेयताश्रय एङन्त गो शब्द है।

अवङ्न्यास का परित्याग कर महाभाष्यकार ने स्वर सिद्धि के लिये अक् न्यास किया यदि "अवङ्" न्यास करेंगें तो कभी अवङ् अन्तोदात्त हो जायगा। अर्थात् व्युत्पत्ति पक्ष में गम् धातु से डो प्रत्यय करने पर "आद्युदात्तश्च" से प्रत्यय को आद्युदात्त होता है, उसके स्थान पर होने वाला अवङ् भी आद्युदात्त हो जायगा, वकारोत्तरवर्ती अकार को "अनुदात्तं पदमेकवर्जम्" से अनुदात्त हो जायगा। किन्तु अव्युत्पत्तिपक्ष में "फिषोन्त उदात्तः" से गो शब्द को अन्तोदात्त होगा, उसके स्थान पर जो अवङ् आदेश है, वह भी अन्तोदात्त होगा तथा च वकारोत्तरवर्ती अकार उदात्त हो

आद्युदात्तः कृतः स सति शिष्टः "सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः" अर्थात् कस्मिंश्चित्स्वरे सति य उपदिष्टः स बलवान् भवति, अन्यत्र विकरणेभ्यस्तथा च व्युत्पत्तिपक्षे आद्युदात्तस्य बाधोऽव्युत्पत्तिपक्षेऽन्तोदात्तस्य बाधः। ततः=आद्युदात्तं विहाय शेषस्य अनुदात्तं पदमेकवर्जम् (६।१।१५८) इत्यनेनानुदात्तस्तथा च गकारोत्तरवर्त्योकारस्याप्यनुदात्तः स्यात्। अवङोऽकारस्याद्युदात्तत्वनिपातनेनावङादेशे गकारोत्तराकारस्योदात्तो वकारोत्तराकारस्यानुदात्तः। अगितिन्यासे "आगमा अनुदात्ताः" इति न्यायेनाकोऽकारोऽनुदात्तस्तथा च गकारोत्तराकारोऽनुदात्तो वकारोत्तराकारोऽप्यनुदात्तस्तथा चावङ्न्यास अगिति न्यासे च भेदः स्पष्ट एवात एतादृशस्थलेऽवङ् न भवति स्वरसिद्ध्यर्थम्।

उपदेशिवद्भावो वाच्य इति। पूर्वमवङ्स्वरः पश्चात् समासस्वर इति भावः। समानकालप्रवृत्तिकस्येति। समानकाले प्रवृत्तिर्यस्यासौ समानकालप्रवृत्तिकः तस्य। परत्वेनेति। कथमत्र विरोध इति चेदित्थम्। 'गो + आम् + अक्षि + सु' इति स्थितेऽलौकिके प्रक्रियावाक्ये समासान्ते "अक्ष्णोर्दर्शनात्" इत्यचि तद्धितान्तत्वात्प्रातिपदिकसंज्ञायाः, पूर्वभागस्य समाससंज्ञायाश्च युगपत्प्रवृत्तौ सुब्लुकि आद्युदात्तत्वयुक्तावङः समासान्तोदात्त-

जायगा। अक् न्यास में तो "आगमाः अनुदात्ताः" होने से व्युत्पत्तिपक्ष या अव्युत्पत्तिपक्ष में वकारोत्तरवर्ती अकार अनुदात्त ही होता है। इस भाष्य के प्रमाण से "चित्रग्वग्रम्" में अवङ् नहीं होता। स्पष्ट ही भेद है। अर्थात् अक्न्यास में चित्रग्वग्रम् बनेगा, और अवङ् न्यास में "चित्रगवाग्रम्।"

"चित्रगोऽग्रम्" इसमें अवङ् की प्रवृत्ति का अभाव रहता है इसमें क्या प्रमाण है। तो उसको बताते है, अवङ् को उपदेश में आद्युदात्त निपातनकर अवङ् न्यास की स्थापना ही प्रमाण है, चित्रगो शब्द "आमन्त्रितस्य" करके आद्युदात्त होता है। इससे व्युत्पत्तिपक्ष में गो शब्द घटक प्रत्यय को जो आद्युदात्त हुआ उसका या अव्युत्पत्तिपक्ष में प्रातिपदिक को जो अन्तोदात्त हुआ उसका बाध हो जाता है। "सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः" इस न्याय के बल से। इस न्याय का भावार्थ है किसी स्वर के पश्चात् जो स्वर किया जाता, वह बलवान् होता है विकरण को छोड़कर इसी को सतिशिष्ट स्वर कहा जाता है। तथा च गकारोत्तरवर्ती ओकार को अनुदात्त हो जायगा, अवङ् में आद्युदात्त निपातन हो जाने पर गकारोत्तरवर्ती अकार को उदात्त होगा, और गकारोत्तरवर्ती अकार को अनुदात्त होगा। "अक्" न्यास में "आगमाः अनुदात्ताः" इस न्याय से अक् का अकार अनुदात्त है। तथा च गकारोत्तरवर्ती अकार और वकरोत्तरवर्ती अकार दोनों अनुदात्त ही रहेगें भेद स्पष्ट है, अतः "चित्रगोऽग्रम्" इत्यादि स्थलों में अवङ् नहीं होगा।

यदि कहा जाय कि "गवाक्षः" में आद्युदात्त का श्रवण न हो इसलिए "गवामक्षीव" विग्रह करके गो+आम्+अक्षि+सु+अच् इस अलौकिक प्रक्रिया वाक्य में समासादि करने पर प्रथम अवङ् स्वर होता है, पश्चात् सति शिष्ट स्वर अन्तोदात्त होता है। इसी प्रकार यहाँ पर भी "उपदेशिवद्भावो वाच्यः" अर्थात् प्रथम अवङ् स्वर हो जायगा पश्चात् "आमन्त्रितस्य" से आद्युदात्त हो जायगा। शेष को अनुदात्त हो जायगा तथा च 'अवङ्' न्यास अथवा 'अक्' न्यास में कोई विशेषता नहीं है, तो अनुपयुक्त है, समानकालप्रवृत्तिक, पर होने से प्रथम प्राप्त, समास स्वर में "उपदेशिवद्भावो वाच्यः" वचन सामर्थ्य से प्रथम अप्रवृत्ति हो जायगी "अवङ् स्वर" प्रथम हो जायगा। किन्तु अङ्ग संज्ञा सापेक्ष बहिरङ्गगुण सापेक्ष अवङ् स्वर की अपेक्षा अन्तरङ्गत्वात् प्रथम 'आमन्त्रितस्य' से आद्युदात्त होगा "उपदेशिवद्भावो वाच्यः" वचन चरितार्थ होने से, अवङ् स्वर पश्चात् होगा। तथा च फलभेद स्पष्ट है। अवङ् न्यास में आद्युदात्त निपातन, उपदेशिवद्भाव करने में गौरव है—अतः "अक्" यही न्यास करना चाहिये।

( पा० सू० ६।१।७७ ) इति पररूपेण रूपसिद्धेः । न च सत्यवङि ङेर्यदिशः स्यात्, स्त्रियां तु टाप् स्यादिति वाच्यम् । सन्निपातपरिभाषया यादेशटापोः सुसमाधानत्वात् । न च साऽनित्येति वाच्यम् । तावताप्यौत्सर्गिकतत्प्रवृत्त्येष्टसिद्धेः । गवाक्ष- इति । गवामक्षीवेति विग्रहः । "अक्ष्णोऽदर्शनात्" इत्यच् समासान्तः । वातायने रूढोऽयम् । पुंस्त्वं लोकात् ॥

---

चित्यमिति भावः । स्थानिवत्सूत्रे भाष्येऽप्युक्तं "गोः पूर्वत्वे स्थानिवत्त्वप्रतिषेधो वक्तव्यः" । चित्रग्वग्रं "सर्वत्र विभाषा गोः" (पा० सू० ६।१।१२२) इति पूर्वत्वं प्राप्नोति । नैष दोषः, "एङः" इति वर्त्तते, तत्र "अनल्विधौ" इति प्रतिषेधो भविष्यति एवन्तर्हि चित्रगोऽग्रमित्यत्र प्राप्नोति इति । अत्र पूर्वत्वशब्देन तदपवादप्रकृतिभावावङौ विनिगमनाविरहात् । "सर्वत्र—" ( पा० सू० ६।१।१२२ ) इति "अवङ्—" ( पा० सू० ६।१।१२३ ) इत्यस्याप्युपलक्षणम् । अत एव प्रकृतिभावे इति त्यक्त्वा पूर्वत्वे इत्युक्तं वार्तिके भाष्ये च । चित्रगोशब्दस्य लाक्षणिकत्वेऽपि स्थानिवत्त्वात्प्राप्तौ तत्प्रतिषेधः कृतः । एङःप्रतिपदोक्तत्वाश्रयणे तु तन्न कार्यमिति लाघवमिति दिक् । टाप्स्यादिति । ङीप उपलक्षणमिदम् । इष्टसिद्धेरिति । गवीत्यस्य स्थाने गवे इति स्यादिति तद्ग्रन्थव्याख्यानमपि न समञ्जसम् ।

---

त्वस्य युगपदसम्भवः । अस्य = उपदेशिवद्भावस्य । अस्य = अगागमस्य । प्रकृतिभावावङौ इति = ग्राह्यौ इति शेषः । न समञ्जसमिति । नाक्षरमर्य्यादयालभ्यमित्यर्थः । एवं रीत्या ग्रन्थकारस्यासाधुशब्दोल्लेखस्य क्वाप्यदर्शनात् ।

---

स्थानिवत् सूत्र के भाष्य में भी कहा है, चित्रग्वग्रम् यहाँ पर स्थानिवद्भाव हो जाने पर "सर्वत्र विभाषा गोः" ( ६।१।१२२ ) से पूर्वरूप प्राप्त रहेगा । उसको निषेध करने के लिये स्थानिवद्भाव का प्रतिषेध करना चाहिये । तब उत्तर देते हैं, एङ् का अनुवर्तन करने पर "अनल्विधौ" निषेध लग जायगा, क्योंकि स्थानिवद्भाव से गोत्व तो आ सकता है । किन्तु एङन्तत्व नहीं आयगा, अल्मात्रवृत्तिधर्म होने से । एङ् का अनुवर्तन स्वीकार करने पर 'चित्रगोऽग्रम्' में प्राप्त रहेगा, इस प्रकार भाष्यकार ने कहा । इसका समाधान प्रतिपदोक्त स्वीकार कर लेने से हो गया ।

पूर्वत्वशब्द से, पूर्वरूप का अपवाद प्रकृति भाव, तथा अवङ् दोनों का ग्रहण हो जाता है, विनिगमनाभाव होने से । सर्वत्र यह "अवङ् स्फोटायनस्य ' का भी उपलक्षण है । अतः "प्रकृतिभावे" को छोड़कर "पूर्वत्वे" यह कहा वार्तिक तथा भाष्य में । चित्रगो शब्द लाक्षणिक है, तब भी स्थानिवद्भाव से प्राप्त रहने के कारण प्रतिषेध किया । एङ् को प्रतिपदोक्त स्वीकार कर देने पर तो 'गोः पूर्वत्वे' यह वचन नहीं करना चाहिये । 'सर्वत्र विभाषागोः' से विभाषा का अनुवर्तन आ जायगा, स्फोटायन ग्रहण पूजार्थ है । पदान्त नहीं ग्रहण करने पर गवि यह प्रत्युदाहरण दिया गया है । यहाँ प्राचीन लोग 'गवे' प्रत्युदाहरण देते हैं, उनका प्रत्युदाहरण ठीक नहीं, क्योंकि 'अवङ्' कर देने पर भी "अतोगुणे" ( ६।१।७७ ) से पररूप कर देने पर, रूप की सिद्धि हो जायगी ।

यदि कहो कि अवङ् हो जाने पर भी 'ङे' को य आदेश हो जायगा स्त्रीलिङ्ग में जातिलक्षण-ङीष् होने लग जायगा तो नहीं कह सकते, उपजीव्य विरोध होने से अर्थात् "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" की प्रवृत्ति हो जाने से, सन्निपात का तात्पर्य होता है, दो का सम्बन्ध पूर्वापरीभाव रूपादि, तन्निमित्तक विधि है अवङादेश वह पूर्वापरीभाव को नष्ट करने वाले जो ङीषादि है उनमें कारण नहीं होगा । यदि कहो सन्निपात परिभाषा अनित्य है, तो भी स्वाभाविक प्रवृत्ति हो जाने से इष्ट सिद्धि हो जायगी । यदि कहो कि अवङ् करने पर गवि के स्थानपर गवे बनने लग जायगा, यह

"इन्द्रे च" ( पा० सू० ६।१।१२४ )। आरम्भसामर्थ्यान्नित्यमिदम्। "इन्द्रे च नित्यम्" इति पाठस्तु भाष्यासम्मतत्वादुपेक्षितः॥

एहि कृष्णेति। "दूराद्धूते च" ( पा० सू० ८।२।८४ ) इति प्लुतः। यत्तु कृष्ण ३ एहीति प्राचोक्तं तन्न। "दूराद्धूते च" ( पा० सू० ८।२।८४ ) इत्यादौ "वाक्यस्य टेः-" ( पा० सू० ८।२।८२ ) इत्यधिकारात्। चक्र्यत्रेति। इह "स्कोः-" ( पा० सू० ८।२।२९ ) इति कलोपो न। यणः कार्यकालपक्षे बहिरङ्ग-परिभाषयासिद्धत्वात्। स्थानिवद्भावाच्च। "पूर्वत्रासिद्धीये न" इति तु नास्ति। "तस्य दोषः संयोगादिलोप-" इत्याद्युक्तेः॥

"दूराद्धूते च" ( पा० सू० ८।२।८४ ) हूतमाह्वानं तच्च सम्बोधनमात्रोपलक्षणमित्यभिप्रेत्याह—दूरात्सम्बोधन इति। उपलक्षणतया व्याख्यानस्य फलमुदाहरति सक्तून् पिबेत्यादि॥

---

भाष्यासमतत्वादिति। "इन्द्रे इति सामर्थ्यान्नित्यम्" इति तदुक्तेरिति भावः।

प्लुत इति। प्रकृतिभाववचनसामर्थ्यादेव प्लुतस्य तत्र नासिद्धत्वमिति भावः। उपलक्षणेति। एवं चासत्यप्याह्वाने भवतीति भावः।

---

ननु प्रकृतिभावविधायकवचनदृष्ट्याप्लुतस्यासिद्धत्वात् कथं प्लुतस्य प्रकृतिभावविधानमत आह—प्रकृतिभावेति।

उपलक्षणतयेति। स्वबोधकत्वे सति स्वेतरबोधकत्वमुपलक्षणत्वम्। उपलक्षणस्य-फलमाह—एवञ्चेति। अपिना तत्सत्ता समुच्चीयते।

---

तात्पर्य इस ग्रन्थ का है तो भी नहीं कह सकते अक्षर मर्यादा से इस अर्थ की प्रतीति न होने से। गवाक्षः का लौकिक विग्रह होता है गवामक्षीव। "झरोखा" अर्थ में रूढि है। लोकव्यवहार के कारण पुंल्लिङ्ग होता है।

गो शब्द को अवङ् आदेश होता है। इन्द्र शब्दावयव अच् परे रहते। तथा च "गवेन्द्रयज्ञः" इत्यादि में। अवङ् हो जाता है। अन्यथा इन्द्र शब्द उत्तरपद रहने पर होता, यहाँ पर नहीं होता। विकल्प से गो शब्द को अवङ् आदेश तो "अवङ्स्फोटायनस्य" ( ६।१।१२३ ) इससे सिद्ध रहा "इन्द्रे च" ( ६।१।२४ ) इस सूत्र की क्या आवश्यकता थी, तथा च सूत्रारम्भ सामर्थ्य से नित्य ही अवङ् आदेश होगा विकल्प से नहीं। "इन्द्रे च नित्यम्" यह पाठ तो भाष्य असम्मत होने से उपेक्षित है। क्योंकि भाष्यकार की उक्ति है इन्द्रे इति सामर्थ्यान्नित्यम्। भावप्रकाशकार ने 'तदुक्तेरिति' प्रतीक देकर कहा भाष्योक्तेरित्यर्थः।

"एहि कृष्ण २ अत्र गौश्चरति" यहाँ पर "दूराद्धूते च" से प्लुत हुआ है। यदि कहो कि प्रकृति भाव विधायक वचन "प्लुतप्रगृह्या अचि नित्यम्" ( ६।१।१२५ ) की दृष्टि में प्लुत असिद्ध हो जाये तो नहीं कह सकते प्लुत को प्रकृतिभाव विधानसामर्थ्य से ही प्लुत असिद्ध नहीं होता। अर्थात् प्लुत प्रकृतिभाव वचन से तद्विषय में असिद्धत्वभाव ज्ञापन हो जाता है। जो प्रक्रियाकौमुदीकार ने "प्लुतप्रगृह्या अचि नित्यम्" ( ६।१।१२५ ) इसका उदाहरण कृष्णा ३ एहि यह दिया वह ठीक नहीं क्योंकि "दूराद्धूते" ( ८।२।८४ ) में "वाक्यस्य टेः" ( ८।२।८२ ) का अधिकार आने से इसका अर्थ होता है। दूर के सम्बोधन में जो वाक्य तद्घटक जो सम्बोध्यमान पद की टि उसको प्लुत होता है। यहाँ पर आह्वान मात्र है सम्बोधन नहीं हैं, हूत शब्द सम्बोधन मात्र का उपलक्षण है, अतः आह्वान के अभाव में सम्बोधनमात्र "सक्तून् पिब देवदत्त ३" में प्लुत हो जाता है।

"गुरोरनृतः"। ( पा० सू० ८।२।८६ ) अपिशब्दो गुरोरगुरोश्च टेः प्लुतार्थः। देवदत्तेति। अस्यैहीत्यादिः। एवमग्रेऽपि। सर्वः प्लुतः इति। तथा च "अग्नीत्प्रेषणे परस्य च" इति सूत्रे भाष्यम्—"सर्वः प्लुतः साहसमनिच्छताऽपि विभाषा कर्तव्या" इति। साहसं शास्त्रत्यागः, तदनिच्छताऽपि शास्त्रमनुरुन्धानेनापीत्यर्थं इति हरदत्तः। वैकल्पिकेष्वनुष्ठानक्लेशं धर्माधिक्यफलकमप्यशक्तत्वादनिच्छतेत्यर्थ- इत्यन्ये। एतेन "द्वैपायनो विरहकातर आजुहाव पुत्रेति" भागवते व्याख्यातम्। प्लुतस्य वैकल्पिकत्वात्। किं चेह पुत्रशब्दस्य वाक्यान्तत्वं नास्तीत्यपि सुवचम्। आख्यातप्राग्वर्तिनोऽप्यनुकरणसम्भवात्। अपि च अस्तु प्लुतः, प्रकृतिभावस्तु वैकल्पिकत्वान्मास्तु। तथा च "ई चाक्रवर्मणस्य" ६।१।१३० इति सूत्रेभाष्यम्—

---

एहीत्यादिरिति। "वाक्यस्य टेः" ( पा० सू० ८।२।८२ ) इत्युक्तेरिति भावः। हरदत्त- इति। कैयटोऽप्येवम्। अत्र पक्षे "विभाषा पृष्ट—" इत्यत्र विभाषाग्रहणमवयुत्यानुवादः "अविद्वांसः प्रत्यभिवादे—" इत्यादि पस्पशास्थं भाष्यमपि वैकल्पिकेषु भावानुष्ठानौ- चित्येन शास्त्राज्ञाननिन्दापरं बोध्यम्। आख्यातप्रागिति। पुत्र एहीति वाक्यस्थस्येत्यर्थः।

---

अवयुत्यानुवाद इति। प्राचामिति योगविभागेन सिद्धस्य महाविकल्पस्यायमेकदेशं- गृहीत्वानुवाद इत्यर्थः। भाष्ये तु "विभाषा पृष्टप्रतिवचने" इत्यत्र विभाषेति योगविभागो- दृश्यते, तेनैवास्यमहाविकल्पस्य सिद्धौ प्राचामित्येवायमवयुत्यानुवाद इति भाति। अविद्वांस- इत्यादि। "अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः। कामं तेषु तु विप्रोष्य स्त्रीष्विव- वायमहं वदेत्। अत्र नाम्न इति गोत्रस्याप्युपलक्षणम्। शास्त्रपरिज्ञानविहीनाः प्रत्यभिवाद- वाक्ये नाम्नः गोत्रस्य वा ये प्लुतं कर्तुं न जानन्ति तान् वञ्चयित्वा स्त्रीष्विव तेषु अयमभि- वादयते अहमभिवादये इत्येव वदेन्न तु नामगोत्रे समुच्चारयेत्। तदुच्चारणस्य प्लुतफल- कत्वादिति तदर्थः। एवञ्च शास्त्राज्ञानविशिष्टप्लुतप्रयोगाभावो निन्दाहेतुर्नतु तत्प्रयोगाभाव- मात्रमिति प्रतीयते। अतो न विरोधस्तदाह शास्त्राज्ञाननिन्दापरमिति।

---

'चक्रयत्र' यहाँ पर "स्कोः" ( ८।२।२९ ) इससे ककार का लोप नहीं होता। कार्यकालपक्ष में अन्तरङ्ग लोपकर्तव्यता में बहिरङ्ग यण् असिद्ध हो जाता है। पदद्वयसम्बन्धिवर्णद्वय निमित्त होने से यण बहिरङ्ग है। अथवा स्थानिवद्भाव हो जायगा। पूर्वत्रासिद्धे न स्थानिवत् = अर्थात् त्रिपादिस्थ कार्य कर्तव्य रहने पर स्थानिवद्भाव नहीं होता, इसकी प्रवृत्ति नहीं होगी, क्योंकि संयोगादि लोप लत्व णत्व कर्तव्य रहने पर इसका बाध हो जाता है। दूराद्धूते ( ८।२।८४ ) में हूत का भाव है, आह्वान वह सम्बोधन मात्र का उपलक्षण है। इसी अभिप्राय से लिखा "दूरात्" सम्बोधने को उपलक्षण होने से आह्वान न रहने पर भी "सक्तून् पिब देवदत्त ३" यहाँ पर प्लुत हो गया।

"गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्" ( ८।२।८६ ) इसमें अपि शब्द गुरु तथा अगुरु की टि को प्लुत करने के लिये है। देवदत्त के आदि में एहि लगाना चाहिये, इसी प्रकार आगे भी। क्योंकि इसका अर्थ होता है। दूर के आह्वान में जो वाक्य तदवयव ऋद्भिन्न अनन्त गुरु, उसको प्लुत होता है, और अन्त्य को भी प्लुत होता है वह गुरु हो या अगुरु एकैक ग्रहण करने से सब प्लुत एक साथ नहीं होते, अतः वाक्य रहना चाहिये। लौकिक वाक्यों का ग्रहण न हो निघातादि करने में इसलिए वैयाकरण पारिभाषिक वाक्य मानते हैं। वाक्य का लक्षण है "आख्यातंसाव्ययकारकविशेषणं वाक्यम्, एकतिङ्वाक्यं संज्ञं भवतीति वक्तव्यम्। इसका अभिप्राय है एक आनुपूर्वीकं तिङन्त समुदाय वाक्य

"ईग्रहणेन नार्थः । वशा इयं वशेयमिति" । प्लुतप्रकृतिभावः सर्वोऽपि चाक्रवर्मण-मते "नास्तीति भावः । अपि च इह प्रकृतिभावोऽपि दुर्लभ एव । "अप्लुतवदु-पस्थिते" इति सूत्रात् । उपस्थितं नामावैदिक इतिशब्दस्तस्मिन्परे प्लुतोऽप्लुत-वत्स्यादिति हि तस्यार्थः । एवं चतुर्धापि निर्वाहे स्पष्टे आर्षप्रयोग इति श्रीधरोक्ति-र्नादर्तव्या ॥

---

अनुकरणे दूरात्संबोधनत्वाभावाच्चेत्यपि बोध्यम् । वैकल्पिकत्वादिति । अस्य अप्लुतव-द्भावस्य वैकल्पिकत्वेन तत्पक्षे चास्याभावेन तत्त्वमित्यर्थः । प्लुतप्रकृतिभाव इति । तस्य मते अप्लुतवद्भावोक्तेरिति भावः । एतेन चाक्रवर्मणस्याचार्यस्याप्लुतवदित्येव भाष्योक्तेरिदं सर्वं चिन्त्यमित्यपास्तम् । प्रकारान्तरेणाप्यप्लुतवद्भावोऽत्रेत्याह—अपि चेति । अवैदिक इति । अस्य पुराणस्थत्वेनावैदिकत्वं स्पष्टमेव ॥

---

दूरातसम्बोधकत्वाभावादिति । शुकयोगिनस्सन्निहितत्वेनानुकार्ये तत्त्वाभावात् प्लुता-प्रवृत्तावनुकरणे कथं तत्प्रसङ्ग इत्याशयः । तत्पक्षे = अप्लुतवद्भावपक्षे । अस्याभावेन तत्त्वमिति । प्रकृतिभावाभावरूपस्याप्लुतवद्भावस्य वैकल्पिकत्वे प्रकृतिभावविकल्प एव पर्यवसानमिति ।

---

कहलाता है, अतः "ब्रूहि ब्रूहि देवदत्त" यहाँ पर भी निघात हो जाता है । "गुरोरनृतोऽनन्त्यस्या-प्येकैकस्य" एक सूत्र होगा, दूसरा सूत्र होगा 'प्राचाम्' दूसरे सूत्र में प्लुत का अनुवर्तन करेंगे, तो अर्थ होगा प्राचीनों के मत से प्लुत होता है, अन्य के मत से नहीं ।

"अग्नीत्प्रेषणेपरस्य च" इस सूत्र के भाष्य में लिखा है "सर्वः प्लुतः" इत्यादि साहस का अर्थ होता, उपाय हेतु न विचार कर प्रवृत्ति, किन्तु यहाँ पर अर्थ होगा, शास्त्रत्याग तदनिच्छतापि=शास्त्र-मत्यजतापि अर्थात् शास्त्रानुसरण करने पर भी विकल्प करना चाहिये यह हरदत्त ने कहा । कैयट ने भीइसी प्रकार कहा है । सम्पूर्ण प्लुत विकल्प से होते हैं तो "विभाषा पृष्टप्रतिवचनेहेः" (८।२।९३) में विभाषा ग्रहण क्यों किये, तब कहते हैं कि सम्पूर्णप्लुत विकल्प से होते हैं । इस पक्ष में । "विभाषा-पृष्ट" इस सूत्र में विभाषा पृथक् करके इसी का अनुवाद किया गया । "अविद्वांसः" इत्यादि पस्प-शास्थभाष्य भी वैकल्पिक में भावानुष्ठान उचित होने से शास्त्र के अज्ञान के कारण जो निन्दा होती हैं तद्बोधक है । अन्य आचार्य कहते हैं, वैकल्पिक स्थल में विधान क्लेश धर्माधिक्य फलक रहने पर भी अशक्त होने से, प्लुत अनुष्ठान की इच्छा नहीं करता । तथा च प्लुत को विकल्प सिद्ध होने से "पुत्रेति" यहाँ पर गुण करना भी शास्त्रविपरीत नहीं है । और भी पुत्र शब्द में वाक्यान्तत्व भी नहीं है । "पुत्रएहि" इस वाक्यस्थ पुत्र का अनुकरण भी मान सकते हैं । अनुकरण में दूर का सम्बोधनत्वाभाव भी रहेगा । और भी समाधान है । प्लुत हो जाय पर प्रकृतिभाव तो विकल्प से होने के कारण नहीं होगा । "ई चाक्रवर्मणस्य" अर्थात् चाक्रवर्मणाचार्य के मत में । अप्लुतवद्भाव वैकल्पिक होने से । अप्लुतवद्भाव पक्ष में प्रकृतिभाव का अभाव होने से वैकल्पिकत्व है । "ई चाक्र-वर्मणस्य" इस सूत्र पर भाष्य में लिखा है । इस सूत्र में ई ग्रहण करने की कोई आवश्यकता नहीं, वशा इयं वशेयम् में भी अप्लुतवद्भाव होने से गुण होता है । चाक्रवर्मण आचार्य के मत से सम्पूर्ण प्लुतप्रकृतिभाव नहीं होता । इनके मत से अप्लुतवद्भाव हो जाने से । तथा च चाक्रवर्मणाचार्य के मत से अप्लुतवत् ही होता है, भाष्योक्ति होने से यह सब विचारणीय है—यह कहने वाले परास्त हो गये । प्रकारान्तर से भी अप्लुतवद्भाव बताते हैं । दूसरी बात यहाँ पर प्रकृतिभाव दुर्लभ है, क्योंकि "अप्लुतवदुपस्थिते" का अर्थ होता है । अवैदिक इति शब्द परे रहते प्लुत अप्लुतवत् हो जाता है । "पुत्रेति" घटक "इति" पुराणस्थ होने के कारण अवैदिक स्पष्ट है । वह परे रहते

द्विवचनमिति। "सुप्तिङन्तम्" (पा० सू० १।४।१४) इति अन्तग्रहणेन "सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति" इति ज्ञापितत्वादिति भावः। तेनेह न। कुमार्योर्वध्वोश्चागारं कुमार्यगारं वध्वगारमिति। स्पष्टं चेदं भाष्यादौ। द्विवचनान्तं प्रगृह्यं स्यादिति तु प्राचः प्रमाद एव। हरी एताविति। इह शाकलं-न। "प्लुतप्रगृह्या–" (पा० सू० ६।१।१२५) इत्यत्र नित्यग्रहणादित्युक्तम्। अत्र वृत्तिकारः। "मणीवादीनां प्रतिषेधो वक्तव्यः" इति पठित्वा मणीव, रोदसीव, दम्पतीव, जम्पतीवेत्युदाजहार। तच्च मुनित्रयानुक्तत्वादप्रमाणमिति कैयटहर-दत्तादयः। एवं स्थिते—

"मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम"॥

इति भारतप्रयोगं समर्थयते—इवार्थं इति। वशब्द इति।

"वं प्रचेतसि जानीयादिवार्थे च तदव्ययम्"। इति मेदिनी॥

"व वा यथा तथैवैवं साम्ये" इत्यमरग्रन्थव्याख्यावसरे "शात्रवं व पपुर्यशः" इति कालिदासप्रयोगस्याभियुक्तैरुदाहृतत्वात्। 'कादम्बखण्डितदलानि व पङ्क-

---

कुमार्योरिति। अत्र हि प्रत्ययलक्षणेन द्विवचनान्तत्वं श्रुत्या चेदन्तत्वमस्तीति भावः। इदं च द्विवचनान्तमीदन्तमित्यर्थे। ईदन्तं यद् द्विवचनं तदन्तमित्यर्थे तदन्तविध्यसम्भव-एव दोषो बोध्यः। इत्युक्तमिति। मूले इति शेषः। शात्रवं वेति। शात्रवं यश इवेत्यर्थः।

---

इत्यर्थे इति। तत्रार्थे हि प्रगृह्यसञ्ज्ञायामीदन्तस्य साक्षादुद्देश्यत्वेन संज्ञानिष्ठविधेय-तया साक्षान्निरूपिता या उद्देश्यता तादृशोद्देश्यताप्रयोजकप्रत्ययबोधकं पदं तदन्तबोधकं-नेत्यर्थकसञ्ज्ञाविधौ इति निषेधस्याप्रवृत्तेस्तदन्तविधिना तादृशार्थसिद्धिः। असम्भव एवेति। तत्रार्थे तु द्विवचनपदस्यैव साक्षादुद्देश्यताप्रयोजकत्वेन तन्निषेधप्रवृत्या तदन्त-

---

अप्लुतवद्भाव होने से गुण हो जायगा, चार प्रकार से स्पष्ट निर्वाह हो जाता है, आर्षत्वेन समाधान श्रीधराचार्य जी का ठीक नहीं।

"सुप्तिङन्तं पदम्" (१।४।१४) यहाँपर "प्रत्ययग्रहणे तदन्तग्रहणम्" इस न्याय से शब्दस्वरूप विशेष्य हो जायगा सुप्‌तिङ् विशेषण बनाकर तदन्तविधि हो जाने से सुबन्त तिङन्त अर्थ हो जायगा, अन्त ग्रहण व्यर्थ पड़कर ज्ञापन करेगा, "सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति" अर्थात् प्रत्यय ग्रहण रहने पर संज्ञाविधि में तदन्त ग्रहण नहीं होता। संज्ञाविधि है, प्रगृह्य संज्ञाविधि, यहाँ पर प्रत्यय ग्रहण है द्विवचन, अतः तदन्तविधि नहीं होगी। तथा च 'कुमार्यगारम्' वध्वगारम् में प्रगृह्य-संज्ञाभाव होने से यण् हो जाता है। यहाँ पर प्रत्ययलक्षण में द्विवचनान्तत्व और ईदन्त का साक्षात् श्रवण ही है। तथा च द्विवचनान्त जो ईदन्त इस अर्थ को अथवा ईदन्त जो द्विवचन तदन्त, इस अर्थ को करने पर भी समन्वय हो सकता है, किन्तु "संज्ञाविधौ प्रत्ययग्रहणे तदन्त ग्रहणं-नास्ति" इस परिभाषा से निषेध हो जाने पर तदन्त असम्भव होने से उक्त दोनों पक्ष असम्भव है। अतः द्विवचनान्त की प्रगृह्य सञ्ज्ञा होती है, यह प्राचीनों का कहना उचित नहीं।

"प्लुतप्रगृह्या अचि" (६।१।१२५) में नित्यग्रहण होने से "हरी एतौ" इत्यादि में "इको-सवर्णे शाकल्यस्य ह्रस्वश्च" (६।१।१२७) से ह्रस्वसमुचितप्रकृतिभाव नहीं होता, यह सिद्धान्तकौमुदी में कहा गया है। यहाँ पर काशिकाकार ने "मणीवादीनां प्रतिषेधो वक्तव्यः" यह पढ़कर मणीव, रोदसीव, जम्पतीव, उदाहरण दिया। यह मुनित्रय अनुक्त होने से अप्रामाणिक है, यह कैयट हर-

जानि" इत्यादिदर्शनाच्चेति भावः। यत्तु पाठान्तरं "वद्वा यथा तथा" इत्यादि तदयुक्तम्। नामलिङ्गानुशासनप्रक्रमे तद्धितवतेरननुगुणत्वात्। अपत्यसमूहादि-पर्यायमध्येऽण्फिञ्वुञादीनामनुक्तेश्च॥

"अदसो मात्" (पा० सू० १।१।१२॥ इह एकारो नानुवर्तते असम्भवात्। इत्यभिप्रेत्याह—ईदूताविति। ननु ऊकारानुवृत्तिर्व्यर्था। स्त्रियौ फले वा अमू आसाते इत्यत्र पूर्वेणैव सिद्धेः। मूत्वस्यासिद्धत्वेऽप्येकारान्तत्वादत आह—रामकृष्णाविति। पुंसि पूर्वेण न सिध्यति औकारान्तत्वादिति भावः। "अदसो मात्" (पा० सू० १।१।१२) इति सूत्रं प्रति तु मूत्वमीत्वे नासिद्धे आरम्भसामर्थ्यात्।

---

ववेत्यादिकोशप्रदर्शनेन वशब्द इव पर्यायः स्वतन्त्र एव; न तु सत्या भामादिवत् एकदेशे इति सूचयति। "विनापिप्रत्ययं पूर्वोत्तरपदयोर्लोपो वाच्यः" इति वचनेन तादृशस्थले तथाकल्पनेऽप्यखण्डे पदे तथात्वे मानाभावात्।

आरम्भसामर्थ्यादिति। ननु कार्यकालपक्षेऽनुनासिकप्रतिषेधेन चारितार्थ्यं, तत्पक्षे हि

---

विध्यसम्भव एवेति तादृशार्थस्यैवासम्भव इति भावः। अन्ये तु "सञ्ज्ञाविधौ" इति परिभाषाफलाभावान्न स्वीक्रियते, इति प्रकृते तादृशार्थस्य सम्भव एव। तथा च कुमार्यगारमित्यादौ ईकारान्तद्विवचनाभावेन न दोषः। न च "पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन" इति व्युत्पत्तिविरोधेन द्विवचनान्तैकदेशे द्विवचनमात्रेऽर्थे ईदाद्यन्तं नान्वेतुमर्हतीति वाच्यम् "गम्भीरायां नद्यां घोषः" इत्यत्रेव द्विवचनपदस्यैव ईदाद्यन्तं यद्द्विवचनतदन्ततदादिपरकत्वेन "ईदूदेत्" इत्यस्य च तात्पर्यग्राहकत्वस्वीकारेणादोषादिति वदन्ति।

मूले इति। "प्लुतप्रगृह्या अचि नित्यम्" इति सूत्रे इति शेषः। अखण्ड पदे इति। यद्यपि किरातार्जुनीयव्याख्यायां मल्लिनाथेन तवाभिधानादित्यस्य "नामैकदेशे नामग्रहणमिति" न्यायात्। तश्चवश्च तवौ तयोरभिवधानं यस्मिन् पदे तस्मादित्यर्थं इति व्याख्यातम्, तथापि तत्र अभिधानपदस्य नामपरत्वात्तशब्दवशब्दघटितेऽभिधाने यस्मिन् मन्त्रपदे तस्मादिति मध्यमपदलोपिसमासाश्रयणेनोपपत्तौ निरुक्तकल्पना निर्मूलेत्याशयः, तदाह—मानाभावादिति।

---

दत्तादि ने कहा है। वार्तिक के अभाव मे मणीव का साधुत्व कैसे होगा तो उसका उत्तर देते हैं मणीव घटक जो "व" है यह सादृश्य अर्थ में है। मेदनीकोश में लिखा है, व का अर्थ वरुण होता है, तथा सादृश्य अर्थ में "व" अव्यय भी है। अमरकोश में भी लिखा है, व, वा, यथा, तथा, एव, एवम्, ये सादृश्यार्थक हैं। "शात्रवं व पपुर्यशः" कालिदास के इस प्रयोग का भी अभियुक्त पुरुष उदाहरण देते हैं। शात्रवयश के सदृश पी गये। व वा यथा इत्यादि कोशप्रमाण के प्रदर्शन से प्रतीत होता है कि व शब्द इव का पर्यायवाचक स्वतन्त्र शब्द है। "सत्या" "भामादि" के सदृश एक अवयव नहीं है। क्योंकि "विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वाच्यः" इस वचन के बल से सखण्डस्थल में लोप की कल्पना हो जाने पर भी अखण्डस्थल में इस तरह की कल्पना करने में प्रमाणाभाव है। "कादम्बखण्डितदलानि व पङ्कजानि" में भी सादृश्य अर्थ में "व" शब्द है। जो "वद्वा यथा तथा" यह पाठान्तर स्वीकार करते हैं, वह ठीक नहीं, क्योंकि नाम, लिङ्ग, के अनुशासन प्रकरण में तद्धित वत् कहना विरुद्ध होने से। अतएव अपत्य समूहादि के पर्यायवाचक शब्दों के मध्य में अण् वुञ् इत्यादि को नहीं कहा जाता।

एकारोऽपीति । तथा च एकारानुवृत्तितात्पर्यग्रहणफलकं माद्ग्रहणमिति भावः । अत्रेदं चिन्त्यम् । ईदूत्सप्तम्यर्थे प्रगृह्यम्, अदसः, एच्च द्विवचनमित्येव कुतो न

संज्ञाशास्त्रस्य न पृथग् बोधकत्वं, "पूर्वत्रासिद्धम्" (पा० सू० ८।२।१) इति चातिदेशः कार्यार्थः कार्यज्ञानं वाक्यार्थबोधोत्तरमिति यद्देशे वाक्यार्थबोधस्तद्देशस्थत्वमेव तस्य । किं च अधिकारः सः । एवं च मुत्वदृष्ट्या अनुनासिकविधेरसिद्धत्वेन तदेकवाक्यतापन्न-संज्ञाया अपि तद्दृष्ट्याऽसिद्धतया मुत्वशास्त्रेऽनुवृत्तपूर्वत्रासिद्धमित्यत्रस्थपूर्वशब्देन तदेकवाक्यतापन्नस्य "अदसो मात्" (पा० सू० १।१।१२) इत्यस्य ग्रहीतुमशक्यत्वम् । एतेन कार्यकालपक्षेऽपि पाठकृतपूर्वत्वस्यानपगमेन सञ्ज्ञां प्रत्यसिद्धत्वं दुर्वारमित्यपास्त-

चारितार्थ्यमिति । ननु कार्यकालपक्षेऽप्यनुनासिकविध्येकवाक्यतायाः पूर्वमेव मुत्व-विध्येकवाक्यतापन्नपूर्वत्रासिद्धशास्त्रेण सञ्ज्ञादृष्ट्या मुत्वस्यासिद्धत्वे पश्चादनुनासिकविधौ संज्ञाशास्त्रस्योपस्थितावपि संज्ञायाः दुर्लभतया कथमनुनासिकप्रतिषेधेन चारितार्थ्यमत आह—तत्र पक्षेहीति । पृथग्बोधकत्वमिति । ननु प्रदेशोपस्थित्यनन्तरं वाक्यार्थबोधात्पूर्वमेव मुत्वविध्येकवाक्यतापन्नपूर्वत्रासिद्धशास्त्रेण सञ्ज्ञादृष्ट्या मुत्वस्यासिद्धत्वं किन्न स्यादत आह—कार्यार्थ इति । वाक्यार्थबोधोत्तरम् = अनुनासिकशास्त्रीयविशिष्टवाक्यार्थबोधोत्तर-मित्यर्थः । तद्देशस्थत्वमेवेति । सञ्ज्ञानां कार्यकालपक्षे विधिदेशस्थत्वमेवेत्यर्थः ।

अयं राद्धान्तः संज्ञाशास्त्रस्य कार्यकालपक्षे विधिदेशे एव वाक्यार्थबोधो भवति । परिभाषाशास्त्रस्य च कार्यकालपक्षे अथवा यथोद्देशपक्षे स्वदेशे (परिभाषोच्चारणप्रदेशे) एव वाक्यार्थबोधो भवति ।

केषाञ्चित् संज्ञाशास्त्राणां यथोद्देशपक्ष एव कासाञ्चित परिभाषाणामपि यथोद्देश-पक्ष एवेति ।

एतेनेति । अष्टाध्यायीपाठकृतपूर्वत्वस्य पूर्वत्रासिद्धमिति शास्त्रप्रवृत्तावनियामकत्वेन ।

अदसोमात (१।१।१२) यहाँ पर एकार का अनुवर्तन नहीं होता, असम्भव होने से, इस अभि-प्राय से कहा अदस् शब्द सम्बन्धी मकार से परे जो ईकार ऊकार उसकी प्रगृह्यसंज्ञा होती है । अदसोमात (१।१।१२) इस सूत्र में ऊकार का अनुवर्तन नहीं करना चाहिये, स्त्रीलिङ्ग में अथवा नपुंसक लिङ्ग में "अमू आसाते" यहाँ पर "ईदूदेद्द्विवचनं प्रगृह्यम्" (१।१।११) से प्रगृह्यसंज्ञा हो जायगी, यदि कहो कि मुत्व असिद्ध हो जायगा तो नहीं कह सकते, मुत्व को असिद्ध हो जाने पर भी एकारान्तत्व है । पर पुँल्लिङ्ग में "ईदूदेद्द्विवचनं प्रगृह्यम्" से प्रगृह्यसंज्ञा नहीं होगी । असिद्ध होने पर औकारान्तत्व रहेगा । अतः द्विवचनान्त पुँल्लिङ्ग का उदाहरण दिये । 'अदसोमात' इस सूत्र की दृष्टि में मुत्व मीत्व असिद्ध नहीं होता आरम्भ सामर्थ्य से ।

यदि कहो कि कार्यकाल पक्ष में "अणोऽप्रगृह्यस्यानुनासिकः" (८।४।५७) से प्राप्त अनुनासिक का प्रतिषेध करने के कारण चारितार्थ्य सम्भव है । क्योंकि कार्यकाल पक्ष में सञ्ज्ञाशास्त्र का पृथक् वाक्यार्थ बोध नहीं होता । "पूर्वत्रासिद्धम्" (८।२।१) यह अतिदेश शास्त्र है, अतिदेश कार्यार्थ होता है, कार्यज्ञान वाक्यार्थ ज्ञानोत्तर ही होता है, अतः जिस प्रदेश में वाक्यार्थ बोध होगा तद्देशीयत्व माना जायगा । इसमें अरुचि होती है, कि कार्यासिद्धत्व पक्ष को तो दूषित करके शास्त्रासिद्धत्व ही सिद्धान्तभूतपक्ष माना गया है । अतः उसका दूसरा समाधान देते हैं, किञ्च "पूर्वत्रासिद्धम्" अधिकार है, तथा च "अदसोऽसेर्दादुदोमः" (८।२।८०) इसकी दृष्टि में "अणोऽप्रगृह्यस्यानुनासिकः" (८।४।५७) इसको असिद्ध होने से "अणोऽप्रगृह्यस्य" के साथ एकवाक्यतापन्न जो "अदसोमात" है उसको पूर्व

सूत्रितम् । एवं हि पूर्वसूत्रस्थमीदूद्ग्रहणं प्रकृतसूत्रे माद्ग्रहणं च मास्तु । एकदेशानुवृत्तिक्लेशोऽपि नेति ॥

"शे" ( पा० सू० १।१।१३ ) ॥ छान्दसमपीदं सन्दर्भशुद्ध्यर्थमुक्तम् । वस्तुतस्त्वनुकरणार्थतया लोकार्थमपि सम्भवत्येव । त्वे रायो मे राय इत्यादौ त्वे इति, मे इति, इत्यनुकरणे प्रयोजनलाभात् । अस्मे इति–अस्मभ्यमित्यर्थः । भ्यसः "सुपां सुलुक्" ( पा० सू० ७।१।३९ ) इति शे आदेशः । "शेषे लोपः" ( पा० सू० ७।२।९० ) ॥

---

मिति चेन्न । 'अप्रगृह्यादसः' इति न्यासेनैव सिद्धौ सामान्यसञ्ज्ञासूत्रकरणसामर्थ्येन "प्लुतप्रगृह्या" ( पा० सू० ६।१।१२५ ) इत्यत्राप्युपस्थित्या तत्सामर्थ्येनासिद्धत्वबाधात् । हेऽसुकाऽसुका, इत्यादौ व्यवस्थितविभाषाश्रयणात्तयोरनभिधानाद्वा सूत्रमतेऽपि नानुनासिक इत्याशयात् । स्पष्टं चेदं भाष्ये ॥

छान्दसमिति । शे आदेशस्य च्छान्दसत्वादिति भावः । मे इतीत्यनुकरणे इति । प्रकृतिवदनुकरणमित्यतिदेशेन पदत्वात्पदान्तत्वप्रयुक्तः प्रकृतिभावस्तत्र, तेनातिदेशेन प्रगृह्यत्वं तु न । त्वे राय इत्यादावनुकार्ये फलाभावेन प्रगृह्यत्वाप्रवृत्त्या तदनुकरणेऽतिदेशेनासिद्धयोपदेशप्रवृत्तिरेव वाच्येति भावः ॥

---

एतावता ग्रन्थेन सामर्थ्यादित्यनुपपन्नमित्युपपाद्य समाधत्ते—अप्रगृह्येति । अणोऽप्रगृह्यादसोऽनुनासिकः इति न्यासेनेत्यर्थः तत्सामर्थ्येन = उपस्थितिसामर्थ्येन ।

असिद्धत्वेति । मूत्वादेरितिभावः । ननु छन्दसीत्यस्याप्रकृतत्वात् कथं तत्त्वमत आह—

---

शब्द से ग्रहण नहीं कर सकते, अतः जो यह कहने वाले थे कि कार्यकाल पक्ष में भी पाठ कृत पूर्वत्व नष्ट नहीं होता है । अतः प्रगृह्य संज्ञा के प्रति मूत्व मीत्व का असिद्धत्व दुर्वार है, वे परास्त हो गये । तो नहीं कह सकते । "अप्रगृह्यादसः" इस न्याय से सिद्ध रहा सामान्यसञ्ज्ञा सूत्र करण सामर्थ्य से तथा "प्लुतप्रगृह्या" इसमें "अदसोमात्" की उपस्थिति सामर्थ्य से भी मूत्व मीत्व असिद्ध नहीं होता । अर्थात् कार्यकाल पक्ष में "प्लुतप्रगृह्या अचि नित्यम्" इस सूत्र में जितनों की प्रगृह्य सञ्ज्ञा होती है । वे सब उसी रूप में वहाँ पर उपस्थित हो जाते है । अतः "अदसोमात्" में उपस्थिति सामर्थ्य से मूत्व मीत्व असिद्ध नहीं होता ।

यदि कहो कि "अप्रगृह्यादसः" अर्थात् प्रगृह्यसंज्ञक से भिन्न जो अदस् शब्द उसको अनुनासिक होता है । तो हे असुक असुका का साधुत्व नहीं होगा, तो नहीं कह सकते, सूत्रकार के मत में दोष नहीं है, व्यवस्थित विभाषा होने से अथवा इन दोनों का अनभिधान है । यह भाष्य में स्पष्ट है । "अदसोमात्", यहाँ पर ईकार ऊकार की तरह एकार की भी अनुवृत्ति प्राप्त रहती है "ईदूदेताम्" यहाँ पर समस्तपकपद में एकार को रहने के कारण । किन्तु मात् ग्रहण करने से उसका अवरोध हो जाता है ।

यहाँ पर यह विचारणीय है, कि "ईदूत्सप्तम्यर्थे" प्रगृह्यम् "अदसः", एचद्विवचनम् इस तरह क्यों नहीं लिखा गया, इस तरह स्वीकार कर लेनेपर "ईदूदेद्" ( १।१।११ ) में ईत् ऊत् "अदसोमात्" ( १।१।१२ ) में मात् ग्रहण तथा एकदेश की अनुवृत्ति का क्लेश नहीं करना पड़ता ।

शे आदेश छान्दस रहने पर भी प्रकरणवश यहाँ पर लिख दिया । वस्तुतस्तु अनुकरणार्थ लोक में भी आवश्यक है, अतः 'त्वे रायो मे रायः' से त्वे मे का अनुकरण करने पर त्वे इति, मे इति में, प्रगृह्यसंज्ञा होती है । तथा मे इति यहाँ पर "प्रकृतिवद् अनुकरणम्" यह अतिदेश होने से यह संज्ञा

"निपात" ( पा० सू० १।१।१४ ) अनाङिति पर्युदासादेवाज्रूपनिपाते लब्धे निपातग्रहणमुत्तरार्थं स्पष्टार्थमिहैव कृतम् । आ एवमिति । पूर्वप्रक्रान्तस्य वाक्यार्थस्यान्यथात्वद्योतकोऽयमाकारः पूर्वमित्थं नामंस्था इदानीं त्वेवं मन्यसे इत्यर्थः । आ एवं किलेति । स्मरणद्योतकोऽयमाकारः । वाक्येत्यादि । तथा च भाष्यम् ।

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥ १ ॥ इति ।

अत्र अङिल्लक्षण एव तात्पर्यं लाघवात् । अन्यस्य ङित्त्वं त्वर्थसिद्धम् । ईषदर्थे त्यादिस्तु अवयुत्यानुवादः । एवं च अभ्र आँ अप इत्यत्र सप्तम्यर्थवृत्तेरप्याकारस्य ङित्त्वात् "आङोऽनुनासिकश्छन्दसि" ( पा० सू० ६।१।१२६ ) इति प्रवर्तत इति भावः ॥

"ओत्" । ( पा० सू० १।१।१५ ) निपातः किम् ? देवोऽसि । वायवायाहि ।

---

अन्यथात्वेति । अनभिमतत्वेत्यर्थः । तदाह—नामंस्था इति । स्मरणेति । विस्मृतस्य स्मरणविषयताद्योतक इत्यर्थः । मर्यादाभिविधावित्यत्र मध्यमपदलोपी समासः । तत्सहितेऽभिविधावित्यर्थः । सप्तम्यर्थेति । तद्वृत्तित्वं च तस्य निरुक्ते स्पष्टम् । अव्ययीभावाभावश्च श्रुतौ छान्दसत्वाद् बोध्यः ।

---

शे इति । अनुकरणत्वभङ्गभिया सन्धिकार्याकरणम् । निपातग्रहणमिति । एकाज्रूपस्य निपातस्यैवार्थवत्त्वम्, प्रत्ययस्तु नार्थवत्त्वम् । 'नापि केवलप्रत्ययः' इति नियमेन केवलप्रत्ययस्य प्रयोगाभावेनानर्थक्यात् 'न च कल्पितार्थवत्त्वेन तत्त्वम्' कल्पनाया अनित्यत्वादितिमते "अनाङ्" इति पर्युदासेन निपातत्वसादृश्यमादाय चकारात्र, इत्यत्र दोषाभावेऽपि—अन्वयव्यतिरेकाभ्यां प्रत्ययस्यैवार्थवत्त्वमितिमते निपातानां द्योतकत्वमिति मते च अर्थवत्त्वेन सादृश्यमादाय 'चकारात्र' इत्यत्रातिव्याप्तिवारणाय निपातग्रहणमिति भावः ।

---

हो जाने पर पदान्तत्व प्रयुक्त प्रकृतिभाव होता है । अर्थात् "शे" से प्रगृह्यसंज्ञा हो जाने पर 'प्लुतप्रगृह्या अचि नित्यम्'—से प्रकृतिभाव होगा । क्योंकि "प्रकृतिवदनुकरणम्" इस अतिदेश से प्रगृह्यसंज्ञा नहीं होगी, 'त्वे रायः' इत्यादि अनुकार्य में, अच् परे न होने से प्रगृह्यसञ्ज्ञा का अभाव होने से अनुकरण में अतिदेश से प्रगृह्य सञ्ज्ञा नहीं हो सकती, अतः उपदेश की प्रवृत्ति होगी अर्थात् "शे" इस सूत्र से प्रगृह्यसञ्ज्ञा होगी ।

अस्मे का अर्थ है—अस्मभ्यम् = हम लोगों के लिये, अस्मद् से परे भ्यस् को "सुपां सुलुक्" सूत्र से शे आदेश टि का लोप हो जाने पर—अस्मे का साधुत्व होता है ।

"निपात एकाजनाङ्" में अनाङ् पर्युदास से ही, एक ही, एक अच् रूप निपात का लाभ हो जायगा, निपात ग्रहण उत्तरार्थ है, स्पष्टता के लिये यहाँ पर ही लिख दिया गया । विद्वान् लोग इसका भाव यह भी लगाते हैं कि, निपात ग्रहण के अभाव में आङ् भिन्न, आङ् सदृश जो एकाच् इस अर्थ में सादृश्य अर्थवत्त्वेन ग्रहण कर लेने पर णल् में अर्थवत्वरूपा एकाच् रूपता होने से "चकारात्र" में प्रगृह्यसंज्ञा हो जाने पर प्रकृतिभाव होने लगेगा । निपातग्रहण करने पर तो निपातत्वेन सादृश्य ग्रहण होता है ।

"संबुद्धौ" ॥ ( पा० सू० १।१।१ ) ऋषिर्वेदः "तदुक्तमृषिणा" इत्यादौ तथा दर्शनादित्यभिप्रेत्याह—अवैदिक इति । सम्बुद्धौ किम् ? अहो इति । अत्र परत्वाद्विकल्पो मा भूत् । यत्तु "ओत्" इत्यत्र निपातानुवृत्तेरिह च सम्बुद्धिग्रहणस्य प्रत्युदाहरणं वृत्त्यादावुक्तं गवित्ययमाहेति तन्न । तत्र प्रगृह्यसञ्ज्ञासत्त्वेऽपि प्रकृति-

---

अत्र परत्वादिति । न चैतदभावे नित्यविधिर्दुर्वारः । इतिशब्दातिरिक्ते "ओत्" ( पा० सू० १।१।१५ ) इत्यस्य निपातातिरिक्ते "सम्बुद्धौ–" ( पा० सू० १।१।१६ ) इत्यस्य चारितार्थ्येन सामर्थ्याभावादेव च फलेऽविशेष इति वाच्यम् । परत्वेन विकल्पप्रवृत्ताव-भावपर्यन्तमप्यस्य व्यापारेण सकृद्गतिन्यायेन "ओत्" ( पा० सू० १।१।१५ ) इत्यस्य तदभावेऽप्रवृत्तेः । अत एव "न यदि" ( पा० सू० ३।२।११३ ) "विभाषा साकाङ्क्षे" ( पा० सू० ३।२।११४ ) इति सूत्रे निषेधीयोभयत्र विभाषेति सङ्गच्छते । अन्यथा परत्वाद्-

---

सम्बुद्धौ किम् ? अहो इति । वस्तुतस्तु ओदिति न्यासे स्वरादिस्थमिथो शब्दादेतिपरे प्रगृह्यसञ्ज्ञा प्रसज्येत् तद्वारणार्थं सम्बुद्धिग्रहणम् ।

अभावपर्यन्तमपीति । "सम्बुद्धौ शाकल्यस्येतावनार्षे" इति शास्त्रस्य प्राप्तविभाषा-त्वेनात्र प्रगृह्यसंज्ञायाः "ओत्" इत्यनेनैव सिद्धत्वेन तस्या अपूर्वबोध्यत्वाभावेन तत्सा-

---

आ एवं नु मन्यसे । पूर्वप्रकरण प्राप्त जो वाक्यार्थ है, उसका अनभिमतत्व द्योतन करने वाला यह आकार है । पहले तुम इस प्रकार नहीं मानते थे, इस समय मान रहे हो । 'आ एवं किल तत्, में आकार स्मरण द्योतक है । अर्थात् विस्मृति की स्मरण विषयता का द्योतक हैं । ईषत् अर्थ में "आ +उष्णः ओष्णः" क्रियायोग में, आ+इतः । मर्यादाभिविधि यहाँ पर मध्यमपदलोपी समास है तथा च मर्यादा सहित अभिविधि अर्थ में तेन विना मर्यादा, तेन सहितोऽभिविधिः । जैसे आ+उदकान्तात्, ओदकान्तात् आ+अहिच्छत्रात्, आहिच्छत्रात् इन अर्थों में ङित् होता है । वाक्य और स्मरण अर्थ में आङित् होता है ।

भाष्यकार का यहाँ पर अङित् बोधन में ही तात्पर्य है, अन्यार्थों में ङित् तो अर्थात् सिद्ध है । ईषत् इत्यादि अर्थ तो एकदेश का अनुवादमात्र है । अतः "अभ्र आँ अपः" यहाँ आङ् को सप्तम्यर्थ में रहने पर आकार को ङित् होने के कारण "आङोऽनुनासिकश्छन्दसि" ( ६।१।१२६ ) से अनुनासिक होता है । सप्तम्यर्थवृत्तित्व आङ् में है, यह निरुक्त में स्पष्ट है । निरुक्तकार ने लिखा है । "अथाप्यध्यर्थे दृश्यते" "अभ्र आं अपः" अर्थात् फिर भी यह 'आ' अधि के अर्थ में ( ऊपर अर्थ में ) देखा जाता है । 'अभ्र आँ अपः'=ऊपर आकाश में जलों कों, अव्ययीभाव समास का अभाव तो छान्दसत्वात् जानना चाहिये ।

"ओत्" ( १।१।१५ ) इस सूत्र का यदि ओदन्त जो निपात उसकी प्रगृह्यसञ्ज्ञा होनी है, यह अर्थ नहीं करेंगे तो, 'देवोऽसि' यहाँ 'वायवायाहि' यहाँ ओदन्त होने से प्रगृह्यसंज्ञा हो जायगी, तथा प्रकृतिभाव होकर अनिष्ट प्रयोग बनने लगेगा, अतः निपात कहना चाहिये ।

"सम्बुद्धौ शाकल्यस्येतावनार्षे" ( १।१।१६ ) इस सूत्र में उच्चरित जो ऋषि शब्द है, वह वेदवाचक है । "तदुक्तमृषिणा" इत्यादि में ऋषि पदेन वेद का ही ग्रहण होता है । "ऋषौ भवः" आर्षः न आर्षः अनार्षः तस्मिन् अर्थात् अवैदिक इति शब्दपरे रहते । सम्बुद्धिनिमित्तक ओकार की विकल्प से प्रगृह्यसंज्ञा होती है । इस सूत्र में सम्बुद्धि ग्रहण के अभाव में 'अहो इति' यहाँ पर "ओत्" ( १।१।१५ ) इस सूत्र को बाधकर परत्वात् "सम्बुद्धौ शाकल्यस्येतावनार्षे" ( १।१।१६ ) से विकल्प से प्रगृह्यसञ्ज्ञा होने लग जायगी ।

भावाप्रसक्तेः। "इकोऽसवर्णे" ( पा० सू० ६।१।१२७ ) इत्यत्र हि पदान्तग्रहणमनुवर्त्तते इत्याकरे स्पष्टम्। एवं च "प्लुतप्रगृह्या" ( पा० सू० ६।१।१२५ ) इति सूत्रे तत्सम्बन्ध आवश्यकः। गविति च न पदम्। अनुकार्यानुकरणयोरभेदविवक्षया अर्थवत्त्वाभावेन विभक्तेरनुत्पादात्॥

---

तत्प्रवृत्तावप्यनेन निषेधाभावे पूर्वसूत्रस्य दुर्वारत्वेन सा दुर्लभा स्यात्। न च "आकडार" ( पा० सू० १।४।१ ) सूत्रेणान्यत्र सञ्ज्ञानां बाध्यबाधकभावाभावस्य ज्ञापितत्वात्परत्वाद्विकल्प इत्यसंगतमिति वाच्यम्। सञ्ज्ञाया एकत्वात्, ज्ञापकस्य च विशेषापेक्षत्वेन सञ्ज्ञाभेदविषयत्वादिति भाव इति केचित्।

परे तु "ओत्" ( पा० सू० १।१।१५ ) इत्यस्येतिशब्दनिरपेक्षत्वेनान्तरङ्गत्वमिति परत्वं न युक्तं "सम्बुद्धौ" ( पा० सू० १।१।१६ ) इति तु निपातपदाननुवृत्तये। अन्यथौदन्तनिपातस्यैवेतौ विकल्पापत्तिः। नित्यविकल्पविध्योर्युगपत्प्रवृत्तावपि विरोधाभावेन परत्वादित्यस्यासङ्गतेः। एवं च परत्वादित्यस्योत्कृष्टत्वादपवादत्वादित्यर्थः। ओद्ग्रहणानुवृत्त्यैव सिद्धे पुनरोद्ग्रहणेनापि तन्निवृत्तिसिद्धौ वैचित्र्यार्थमेव सम्बुद्धिग्रहणमित्याहुः। आवश्यक इति।

---

मानाधिकरण्येन तदभावस्यैव विधेयतापर्यवसानात्। अनेन प्रकारेण सर्वत्र प्राप्तविभाषासु भावसमानाधिकरणोऽभावो विधीयते।

अप्राप्तविभाषासु तु विपरीतम्। अभावसमानाधिकरणो भावो विधीयते, न त्वभावांशेऽपि विधेयत्वम्। अत एव "नॄन् पे" इत्यस्याभावपक्षे 'नॄन्पाहि' इत्यत्राभावस्याविधेयत्वेन "अत्रानुनासिकः" इत्यनुनासिकः "अनुनासिकात्परोऽनुस्वारः" इत्यनुस्वारश्च न। अन्यथा 'संस्कर्त्ता' इत्यत्र लोपस्येव 'नॄन्पाहि' इत्यत्र रुत्वाभावस्य रुप्रकरणीयविधेयत्वमाश्रित्य तत्प्रवृत्त्यापत्तिः। अत एव च "मुचोऽकर्मकस्य गुणो वा" इत्यस्याभावपक्षे 'मुमुक्षते वत्सः स्वयमेव' इत्यत्र "अत्रलोपोऽभ्यासस्य" इत्यभ्यासलोपस्य न प्रवृत्तिरिति।

वैचित्र्यार्थमिति—गोभ्यां गोयानमिति प्रयोगघटकपदत्वोपहितगोशब्दानुकरणे गवित्ययमाहेत्यादौ विष्णो इतीत्यादाविवं प्रकृतिवदनुकरणमित्यतिदेशलब्धपदत्वनिमित्तकप्रकृतिभावफलकप्रगृह्यत्वस्य प्रकृतसूत्रप्राप्तस्य लक्ष्यानुसारिणा तदतिदेशानित्यत्वेन वारणे क्लेशात् सौगम्येन तन्निवारणार्थमिह सम्बुद्धिग्रहणमित्यर्थः।

---

यदि कहो कि ( एतदभावे ) जिस पक्ष में "सम्बुद्धौ शाकल्यस्येतावनार्षे" ( १।१।१६ ) प्रगृह्य सञ्ज्ञा नहीं करेगा, उस पक्ष में "ओत्" इससे प्रगृह्यसञ्ज्ञा हो जायगी। क्योंकि जहाँ पर इति शब्द नहीं है, वहाँ पर "ओत्" यह चरितार्थ है। और "सम्बुद्धौ शाकल्यस्येता वनार्षे" वहाँ पर चरितार्थ है जहाँ पर निपात नहीं है। अतः यह कल्पना नहीं कर सकते कि सूत्र व्यर्थ हो जायगा, तदारम्भ सामर्थ्य से "ओत्" सूत्र की प्रवृत्ति नहीं होगी। अतः पक्ष में "ओत्" यह लग जायगा भेदाभाव है। तो नहीं कह सकते, क्योंकि परत्वेन विकल्प की प्रवृत्ति होने से इसका व्यापार अभाव पर्यन्त रहेगा, "अर्थात्" 'प्रगृह्यसञ्ज्ञा भवति' 'पक्षे प्रगृह्यसंज्ञा न भवति' जब "सम्बुद्धौ शाकल्यस्येतावनार्षे" ( १।१।१६ ) यह सूत्र लग जायगा, तब पुनः ओत् यह सूत्र नहीं लगेगा। क्योंकि "सकृद् गतौ यद्बाधितं तद्बाधितमेव" इस न्याय की प्रवृत्ति हो जायगी। अभाव पर्यन्त व्यापार स्वीकार कर लेने से "विभाषा साकाङ्क्षे" ( ३।२।११४ ) सूत्र में निषेधीयोभयत्र विभाषा बन जाती है। अर्थात् निषेध सम्बन्धिनी तत्प्राप्त्यप्राप्तिपूर्विका विभाषा की प्रतीति होने लगती है, अन्यथा परत्वात्

अन्यथा "इकोऽसवर्णे" (पा० सू० ६।१।१२७) इत्यत्र मण्डूकानुवृत्त्यापत्तिः। सा च सम्बन्धतदभावोभयकल्पनापत्त्याऽन्याय्येति भावः। अनुत्पादादिति। अतएव तस्याः श्रवणं न। अभेदविवक्षापदार्थश्चार्थवत्सूत्रे निरूपयिष्यते। न च लिङ्गसर्वनामनपुंसकताभ्युपगमेनोत्पन्नाया विभक्तेर्लुक्, ह्रस्वापत्तेः। न च सुप्सुपेति समासेन निर्वाहः। इतिशब्दस्य शब्दस्वरूपपरतात्पर्यग्राहकत्वेन तेनैकार्थीभावरूपसामर्थ्यस्य दुरुपपादत्वात्। न च गोभ्यां गोक्षीरमित्याद्येकदेशगोशब्दानुकरणे "ऋलृक्" सूत्रभाष्योक्तेन "प्रकृतिवदनुकरणम्" इत्यतिदेशेन पदत्वं सुलभमिति वाच्यम्। "क्षियोदीर्घात्" (पा० सू० ८।२।४६) इति सूत्रभाष्योक्तेन तदतिदेशानित्यत्वेन तदप्रवृत्तिमाश्रित्यापि सुसाधत्वेनासाधारणप्रयोजनत्वाभावादिति भावः॥

---

ननु इति हरिशब्देनाव्ययीभावेन समासे गवितिहरीत्यत्र प्रसक्तस्य प्रगृह्यत्वस्य वारणाय सम्बुद्धिग्रहणस्यावश्यकत्वात् कथं वैचित्र्यमिति चेन्न वैदिके इति शब्दस्य स्वसमभिव्याहृतौदन्तस्वरूपबोधकस्यैव प्रसिद्धतया तद्भिन्नस्यापि तथाभूतस्यैव ग्रहणमित्याशयात्। लिङ्गसर्वनामेति। लिङ्गसामान्यमित्यर्थः। स्त्रीत्वपुंस्त्वोभयाभावरूपस्य तस्य मृदु पचति, प्रातः कमनीयमित्यादौ प्रसिद्धिर्द्रष्टव्या। अत्र भेदविवक्षायामितिशेषः। सामर्थ्यस्यदुरूपपादादिति। गोशब्दस्य शब्दविषयकप्रकाशबोधकेनेतिशब्देनाव्ययीभावे तु पूर्वनिपात इति शब्दस्यैव स्यादित्यपि बोध्यम्। तदतिदेशानित्यत्वेनेति। यथा "क्षियो-

---

"विभाषासाकाङ्क्षे" इस सूत्र की प्रवृत्ति होनेपर इससे निषेधाभाव होने से अर्थात् 'विभाषासाकाङ्क्षे' (३।२।११४) सूत्र अभाव पर्यन्त व्यापार करेगा नहीं, तथा च "न यदि" (३।२।११३) इसका अवरोध न होने से "न यदि" की अवश्य प्रवृत्ति होने से निषेधीयोभयत्र विभाषा नहीं बनेगी।

यदि कहो कि सञ्ज्ञाओं में तो परस्पर बाध्यबाधकभाव होता नहीं। पुनः "आकडारादेका सञ्ज्ञा" इस सूत्र को करने की क्या आवश्यकता वह व्यर्थ पड़कर ज्ञापन करेगा आकडारीय सञ्ज्ञाओं से अन्यत्र सञ्ज्ञाओं में परस्पर बाध्यबाधकभाव नहीं होता, तथा च परत्वात् विकल्प असङ्गत है, तो नहीं कह सकते क्योंकि यहाँ पर एक सञ्ज्ञा है। और ज्ञापक विशेषापेक्ष होने से जहाँ पर दो सञ्ज्ञायें होगीं, वहाँ पर ही बाध्यबाधकभाव होगा। अतः परत्वात् विकल्प हो जायगा, यह कहना ठीक नहीं।

शब्दरत्नकार स्वीयमत को स्पष्ट करते हैं "ओत्" यह सूत्र इति शब्द की अपेक्षा नहीं करता, अतः अल्पापेक्ष होने से अन्तरङ्ग हुआ, अतः परत्वात् कहना उचित नहीं। सम्बुद्धि ग्रहण तो निपात पद की अनुवृत्ति न आये इसलिए करते हैं। अन्यथा ओदन्त निपात को ही, इति परे रहने विकल्प होता। नित्य विधि और विकल्प विधि को एक साथ प्रवृत्त होने पर भी विरोधाभाव होने से परत्वात् यह कहना ठीक नहीं। परत्वात् का भाव है, उत्कृष्टत्वात् अपवादत्वेन विकल्प न हो। यदि निपात पद की अननुवृत्ति के लिये ही सम्बुद्धि ग्रहण है, तो "सम्बुद्धौ शाकल्यस्येतावनार्षे" सूत्र से सम्बुद्धि पद का परित्याग कर "ओत् शाकल्यस्य" सूत्र कर देते तत्सामर्थ्य से निपात पद की अनुवृत्ति हो जाती, इसलिए कहते हैं, ओत् की अनुवृत्ति से ही ओत् का लाभ हो जायगा। पुनः ओत् ग्रहण निपात पद की अनुवृत्ति न हो इसलिए है, सम्बुद्धि ग्रहण वैचित्र्यार्थ ही है। अर्थात् गोयानम्, गोभ्याम्, प्रयोग घटक पदत्व विशिष्ट गो शब्द का अनुकरण करने पर इति शब्द पर रहने पर 'विष्णो इति' की तरह प्रकृतिभावफलक प्रगृह्यसंज्ञा न हो इसलिए सम्बुद्धि ग्रहण करना चाहिये। विशेष बालप्रकाशिका सं० टी० में स्पष्ट है।

"उञः" (पा० सू० १।१।१७) "निपात एकाज्-" (पा० सू० १।१।१४) इति प्राप्ते विभाषेयम्।

"ऊँ" (पा० सू० १।१।१८)। अनुनासिक इति। तेनास्मिन्परे "यरोऽनुनासिक—" (पा० सू० ८।४।४५) इति विकल्पः। यदेतनूँ इति पठसि, यदेनदूँ इति वा तद्दीर्घमित्यादि। एतदर्थमेव तत्रानुनासिकग्रहणम्। अन्यथा यरो ञमि ञम्वेत्येवावक्ष्यत्॥

---

एतदर्थमेवेति। एतदर्थमपीत्यर्थः। अनितेः क्विपि सम्बुद्धावान् चिनोपीत्यत्र "नश्छवि" पा० सू० ८।३।७) इति रुत्वे "अत्रानुनासिकः" (पा० सू० ८।३।२) इति पूर्वस्यानुनासिके यदेतनांश्चिनोपि कमलँ आँश्चिनोपीत्यत्रापि फलसत्त्वात्। अवक्ष्यदिति। न चैवं-

---

दीर्घात्" इति निर्देशेनेयङन्यथाऽनुपपत्या "प्रकृतिवदनुकरणम्" इति ज्ञाप्यते तथैव तत्रैव विभक्त्युत्पत्त्यन्यथानुपपत्त्या तदनित्यत्वमपि ज्ञायते। अन्यथानुकार्यवृत्तिधातुत्वातिदेशे तत्र "अधातुः" इति पर्युदासेन "अर्थवदधातुः" इत्यस्याप्रवृत्या प्रातिपदिकत्वाभावेन विभक्तेर्दुर्लभत्वात्। अनित्यत्वमपि इष्टसिद्धयर्थमिति नेयङ्प्रतिबन्धः। तथा च प्रकृते तदनित्यत्वाश्रयणे न तत्प्रयोजनमसाधारणमिति भावः। एतदर्थमपीति। नन्वेतदर्थमेवेत्यत्रैवकारस्य वैयर्थ्यम्, अन्यत्रापि प्रयोजनसत्त्वादत आह—एतदर्थमपीति। तथा च निपातानामनेकार्थत्वेन एवकारोऽप्यर्थक इत्यभिप्रायः।

---

जो लोग यह कहते हैं कि सम्बुद्धि ग्रहण नहीं करेंगे, तो "गो इत्ययमाह" यहाँ पर प्रगृह्यसञ्ज्ञा हो जायगी "ओत्" इस सूत्र से प्रगृह्यसञ्ज्ञा हो नहीं सकती, क्योंकि वहाँ पर निपात की अनुवृत्ति आती है, अतः वृत्त्यादि में सम्बुद्धि ग्रहण का प्रत्युदाहरण गवित्यमाह दिया वह उचित नहीं, क्योंकि प्रगृह्यसञ्ज्ञा होने पर भी प्रकृतिभाव नहीं होगा। "इको सवर्णे शाकल्यस्य" में पदान्त का अनुवर्तन होता है, यह कैयट में स्पष्ट है, तथा च "प्लुतप्रगृह्या" इसमें भी पदान्त का सम्बन्ध आवश्यक है। अन्यथा "इको सवर्णे शाकल्यस्य" में मण्डूकानुवृत्ति होने लगेगी। "गविति" यह पद नहीं है। अनुकार्य अनुकरण में अभेद विवक्षा के कारण अर्थवत्त्वाभाव होने से विभक्ति नहीं आयेगी। अतः विभक्ति का श्रवण नहीं होता। अभेद विवक्षापदार्थ को "अर्थवत्" सूत्र पर कहेंगे।

यदि कहो कि भेदविवक्षा पक्ष में भी लिङ्गसर्वनामनपुंसक स्वीकार कर लेने पर विभक्ति का लुक् हो जायगा। लिङ्गसर्वनामनपुंसक का अभिप्राय है, लिङ्ग सामान्य जो मृदुपचति इत्यादि में देखा गया है। नपुंसक लिङ्ग ही लिङ्ग सामान्य माना जाता है। तो नहीं कह सकते, ह्रस्व की प्रवृत्ति हो जाने से। यदि कहो "सुप्सुपा" से समास होने के कारण विभक्ति का लुक् हो जायगा तो नहीं कह सकते। इति शब्द, शब्दस्वरूपपरक तात्पर्य का ग्राहक होने से एकार्थीभावरूप सामर्थ्याभाव है। यदि कहो कि गोभ्याम् 'गोक्षीरम्' का घटक गो शब्द का अनुकरण कर लेने पर "ॠलृक्" सूत्रभाष्योक्त "प्रकृतिवदनुकरणम्" इस अतिदेश से पदत्व आ जायगा तो नहीं कह सकते, "क्षियोदीर्घात्" (८।२।४६) इस सूत्र घटक "क्षियः" इसमें प्रातिपदिक निमित्तक विभक्ति करने से यह परिभाषा अनित्य है। तथा च "प्रकृतिवदनुकरणम्" इस परिभाषा का अनाश्रयण करने पर भी समाधान हो सकता है, यह असाधारण फल नहीं है।

उ इति, विति में निपातएकाजनाङ" (१।१।११४) से प्रगृह्यसंज्ञा प्राप्त रहती है नित्य ही, किन्तु "उञः" (१।१।५७) से अर्थात् अञ्रूपनिपात से इति शब्द परे रहते शाकल्याचार्य के मत से विकल्प से प्रगृह्यसंज्ञा होगी। उञ् के स्थान पर दीर्घ अनुनासिक प्रगृह्य संज्ञा जो ऊँ इसका विधान

"मय उञो वो वा" ॥ ( पा० सू० ८।३।३३ ) मयः परस्येति । परादिति तु प्राचः प्रमादः "षष्ठीनिर्दिष्टस्य हि आदेशा उच्यन्ते" इति भाष्यात् आदेशविधौ स्थानिनः षष्ठ्या एव न्याय्यत्वाच्च । असिद्धत्वादिति । अत एवेदं वत्वं त्रिपाद्यां विधीयते । प्रकृतिभावमात्रबाधनार्थत्वे हि "इको यण्–" ( पा० सू० ६।१।७७ ) इत्यनन्तरं मय उञो वेत्येवावक्ष्यत् । यणं चान्ववर्त्तयिष्यत् । इह मय उञ इतौ परे अष्टाविंशतिरूपाणि । तथा हि—"उञः" इति प्रगृह्यत्वे किमु इति वत्वपक्षे किम्विति । ऊँ आदेशे किमूँ इति । आदेशस्य स्थानिवत्त्वेन "मय उञ्—" ( पा० सू० ८।३।३३ ) इति प्रकृतिभावापवादभूते आन्तरतम्यादनुनासिके वकारे किम्वँिति । अनुनासिकाननुनासिकयोर्वकारयोः "मयो यण" इति द्वित्वस्य

---

न्यासे यथासंख्यापत्तिः । तस्यासार्वत्रिकत्वात् "आन्महतः—" ( पा० सू० ६।३।४६ ) इत्यादिनिर्देशाच्चेति भावः । पूर्वोक्ते कमलाँश्चिनोपीत्यत्र लस्य नकारापत्तिवारणाय विधेयकोटावनुनासिक इति । विधेयकोटौ यकारमारभ्य प्रत्याहारे तु विधेयविषये सवर्णग्रहणाभावेन पूर्वोक्ते निरनुनासिकलस्यैवापत्तिरिति यथान्यासमेव साधु ।

इत्येवावक्ष्यदिति । न चात्रापि न्यासे सन्निपातपरिभाषयाऽनुस्वाराप्राप्तिरिति वाच्यम् । त्रिपाद्यान्तथा पाठेन सन्निपातपरिभाषाऽनित्यत्वस्यापि ज्ञापनादिति भावः ॥

---

असार्वत्रिकत्वादिति । स्वरितत्वविशिष्टे एव तत्सूत्रप्रवृत्तिस्वीकारादितिभावः । नकारापत्तीति । "यरोऽनुनासिके ऽम्" इत्युपादाने स्थानतः आन्तर्यान्नकारापत्तिरित्यर्थः । प्रत्याहारेत्विति । तदा यम् पदेन लकारस्याप्युपस्थितौ स एव भविष्यतीति भावः । लस्येति = आन्तरतम्यादिति भावः । सन्निपातपरिभाषयेति । मयः परत्वोपजीव्यकरणादित्यादिः । तथापाठेनेति । "मयउञो वो वा" इति पाठेन ।

---

करने से "यरोऽनुनासिक" ( ८।४।४५ ) से विकल्प से अनुनासिक होता है, अनुनासिक परे रहते, यदेतनूँ इति पठसि, यदेतदूँ इति वा इत्यादि में । ऋग्वेद प्रातिशाख्य में लिखा है—"उकारश्चेति कारणेन युक्तो रक्तोऽपृक्तो द्राघितः शाकलेन" । किसी व्यञ्जन से न मिला हुआ ( अपृक्त ) जो उकार उसको इति शब्द युक्त रहने पर ( रक्त ) अनुनासिक दीर्घ और प्रगृह्य हो जाता है, शाकल के मत में । इसलिए भी वहाँ पर अर्थात् "यरोऽनुनासिक" ( ८।४।४५ ) इसमें अनुनासिक ग्रहण किया गया, अन् धातु से क्विप् सर्वापहारिलोप उपधादीर्घ सम्बुद्धि में "आन् चिनोषि" यहाँ पर "नश्छवि" ( ८।३।७ ) से रुत्व "अत्रानुनासिकः" ( ८।३।२ ) से पूर्व को अनुनासिक हो जाने पर "यदेतनांश्चिनोषि" कमलँ "ाँश्चिनोषि" यहाँ पर भी फल है । अन्यथा "यरो अमि अम्वा" इस तरह का सूत्र बनाते ।

यदि कहो कि उक्त न्यास में यथासंख्य से होने लगेगा तो नहीं कह सकते असार्वत्रिक होने से । असार्वत्रिकत्व में प्रमाणाभाव है, इस अरुचि पर कहते हैं, "आन्महतः" ( ६।३।४६ ) इस निर्देश के बल से समझते हैं कि वह असार्वत्रिक है । पूर्वोक्त "कमलांश्चिनोषि" यहाँ पर लकार को नकार न हो इसलिए विधेय कोटि में अनुनासिक पड़ा है । अर्थात् "यरोऽनुनासिके अम्" यह कहने पर सादृश्यात् नकार होने लग जायगा । विधेय कोटि में यकार से लेकर मकार पर्यन्त अर्थात् यम् प्रत्याहार मानने पर तो विधेय विषय में सवर्ण का ग्रहण तो होता नहीं है, तथा च पूर्वोक्त "कमलँाँश्चिनोषि" इत्यादि में निरनुनासिक लकार ही होगा, अतः यथान्यास ही ठीक है ।

मकारस्य "अनचि च" ( पा० सू० ८।४।४७ ) इति द्वित्वस्य च विकल्पेन वत्वपक्षे रूपाष्टकम्। तदभावे द्वयमिति दशकम्। प्रगृह्यसञ्ज्ञाविरहपक्षे "मय उञ–" ( पा० सू० ८।३।३३ ) इति वत्वस्यासिद्धत्वात् "इको यण्–" (पा० सू० ६।१।७७) इति यणेव तस्य सिद्धत्वान्मोऽनुस्वारे "वा पदान्तस्य" ( पा० सू० ८।४।५९ ) इति परसवर्णपक्षे अनुनासिकाननुनासिकवकारद्वयोपेतमेकादशं रूपम्। अनुनासिकस्य द्वित्वे "हलो यमाम्" ( पा० सू० ८।४।६४ ) इति लोपस्य वैकल्पिकत्वादकरणे त्रिवकारं द्वादशं रूपम्। परसवर्णाभावपक्षे अनुस्वारस्य यत्वात्पाक्षिके द्वित्वे द्वे। संकलनया चतुर्दश। इतिशब्देकारस्य "अणोऽप्रगृह्यस्य–" ( पा० सू० ८।४।५७ ) इत्यनुनासिकविकल्पादष्टाविंशतिरिति ॥

॥ इत्यच्सन्धिः ॥

---

अनुनासिके वकारे इति। इदं कैयटानुरोधेन। "मय उञः—" ( पा० सू० ८।३।३३ ) इत्यत्र विधीयमानस्य सवर्णग्राहकत्वाभावेनानेन सानुनासिकविधानाभावेन कथमत्र सः। अन्यथेदमो मस्यानुनासिकोऽकारः स्यात्। अत एवेदृशे विषये गुणानामभेदकत्वपक्षानाश्रयणमिति चिन्त्यम्।

इत्यच्सन्धिः।

---

अष्टाविंशतिरूपाणीति। ननु "दिक्संख्येसंज्ञायाम्" इति नियमात्, अष्टाविंशतिरूपाणि, इति समस्तपदमसंगतमिति चेन्नानेकत्र शिष्टानामेतादृशप्रयोगदर्शनेन संख्यात्वव्याप्यधर्मप्रकारकसंख्याविशेष्यकबोधाजनकैकादिदशान्तसंख्येयवाचकेष्वेव तादृशनियमप्रवृत्तिस्वीकारात्। विंशत्यादीनाञ्च "विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः" इत्यमरात् संख्यासंख्येयोभयबोधकत्वात्।

अच्सन्धिरिति। नन्वत्र कुत्वाभावादसाधुत्वमिति चेन्न अल्पाच्तरमिति निर्देशेन स्वघटितवृत्तिघटकयत्किचिन्निरूपितपूर्वत्वविशिष्टाच्पदीयचकारगतचुत्वप्रयुक्तप्रकृतशास्त्रीयकार्यसमर्पकत्वाभावज्ञापनेनाभीष्टसिद्धेरिति शिवम्।

इति बालप्रकाशिकायां अच्सन्धि प्रकरणं समाप्तम्।

---

"मय उञो वो वा" (८।३।३३) मय् से पर जो उञ् उसको व होता है विकल्प से, अच् परे रहते। परस्य के स्थान पर प्राचीन 'परात्' कहते हैं, उनका कथन युक्त नहीं है, क्योंकि भाष्यकार ने कहा है, "षष्ठी निर्दिष्टस्य हि आदेशा उच्यन्ते" अर्थात् स्थानी षष्ठ्यन्त रहने पर ही आदेश होता है। तथा षष्ठी विभक्ति ही न्याय प्राप्त है, पञ्चमी करना ठीक नहीं। "किम्वुक्तम्" में आशङ्का होती है कि वकार परे रहने पर "मोऽनुस्वारः" से अनुस्वार होना चाहिये, तो उसका उत्तर देते हैं। वकार को असिद्ध हो जाने से अनुस्वार नहीं होता। इस कारण ही "मय उञो वो वा" ( ८।३।३३ ) का त्रिपादी में पाठ करते हैं। प्रकृतिभाव मात्र का बाधक रहने पर तो "इकोयणचि" ( ६।१।७७ ) के बाद ही "मयउञो वो वा" को पढ़ते और यण् का अनुवर्तन कर लेते। यदि कहो कि त्रिपादी पाठ में भी "सन्निपातपरिभाषा" की प्रवृत्ति हो जाने से अनुस्वार की अप्राप्ति है तो नहीं कह सकते,

# अथ हल्सन्धिप्रकरणम्

'स्तोः श्चुना'' ( पा० सू० ) ८।४।४० ) ॥ स्तोरिति समाहारद्वन्द्वः । सौत्रं-पुंस्त्वम् । श्चुनेति । "सह युक्ते—" इति सूत्रे विनापि तद्योगं तृतीयेति वक्ष्यते । योग इत्येतदध्याहारलभ्यम् । अत्र स्थान्यादेशयोर्यथासंख्यं, निमित्तकार्यिणोस्तु

---

विनापि तद्योगमिति । साहित्यं च योगक्रियायाम् । एतदिति । संयोग इति तदर्थः । सत्या भामेतिवन्निर्देशः । संयोगश्चाव्यवहितयोरेवेति चितं कटु तैलमित्यादौ न दोषः । यथासंख्यमिति । तथदधनेत्यादेरप्यनादितया तमादाय "परस्मैपदानां णल्" ( पा० सू०

---

सौत्रंपुंस्त्वमिति । न चेतरेतरद्वन्द्वस्वीकारेण सौत्रत्वादेकवचनमेव स्वीकार्यमिति वाच्यम् वचनबाधापेक्षया लिङ्गबाधकल्पने लाघवात् । "लिङ्गमशिष्यं लोकश्रयत्वा-ल्लिङ्गस्य" इत्युक्त्या लिङ्गस्य लौकिकत्वबोधनेन वचनबाधे सूत्रबाधापत्तौ गौरवात् ।

---

त्रिपादी में पाठ होने से सन्निपातपरिभाषा का अनित्यत्व ज्ञापन होता है । मय् से परे उञ्, तथा उञ् से इति परे रहने पर अट्ठाइस रूप बनते हैं । उनको दिखाते हैं, "उञः" से प्रगृह्यसंज्ञा हो जाने पर 'किमु इति', वत्व पक्ष में 'किम्विति' । ऊँ आदेश करने पर 'किमूँ' इति । आदेश की स्थानि-वद्भाव हो जाने पर "मय उञ" ( ८।३।३३ ) से प्रकृतिभाव का अपवादभूत सादृश्यात् अनुनासिक वकार कर देने पर 'किम्विति' यह कैयट के अनुरोध से कहा गया । कारण "मय उञः" (८।३।३३) से वकार विधीयमान होने से सवर्ण का ग्रहण होगा नहीं तथा च सानुनासिक नहीं होगा । अन्यथा "इदम्" शब्द के मकार को भी सानुनासिक अकार होता । अतः एतादृश विषय में "गुणा अभेदकाः" इस पक्ष का अनाश्रयण होता है । अतः 'किम्विति' यह प्रयोग विचारणीय है । अनुनासिक और अननुनासिक वकार को "मयो यणः" इस पक्ष में जो वकारों को द्वित्व हुआ तथा "अनचि च" से जो मकार को द्वित्व हुआ वह विकल्प होने से वत्वपक्ष में आठ रूप बनेंगे । वत्वा-भाव पक्ष के दो रूपों को लेकर कुल संख्या दश हो गई । प्रगृह्यसंज्ञा अभावपक्ष में "मय उञो" से विहित वत्व को असिद्ध होने से "इको यणचि" ( ६।१।७७ ) से यण् ही होगा । वह सिद्ध होने से "मोऽनुस्वारः" से अनुस्वार "वापदान्तस्य" से परसवर्णपक्ष में अनुनासिक अननुनासिक वकारद्वय विशिष्ट होने पर कुल ग्यारह रूप बने अनुनासिक को द्वित्व करने पर "हलोयमाम्" ( ८।४।६४ ) से लोप न करने पर त्रिवकारक हो जाने पर कुल बारह रूप हो जायँगे । पर सवर्णाभाव पक्ष में अनुस्वार पर होने से पाक्षिक द्वित्व करने पर चौदह रूप बनेंगे इति शब्द के इकार को "अणोऽप्रगृह्यस्य" ( ८।४।५७ ) से विकल्प से अनुनासिक करने पर अट्ठाईस रूप बनते हैं ।

॥ हिन्दी बालप्रकाशिका में अच्सन्धि प्रकरण समाप्त ॥



"स् च तुश्चेत्यनयोः समाहारः" सकार तथा तु का समाहार द्वन्द्व है, सौत्रत्वात् पुंल्लिङ्ग हो गया । श्चुना यहाँ पर सहार्थ में तृतीया है क्योंकि सह का योग न रहने पर सहार्थ गम्यमान रहने पर भी तृतीया विभक्ति हो जाती है । यह "सहयुक्तेऽप्रधाने" ( २।३।१९ ) सूत्र पर कहा जायगा । योग क्रिया निरूपित ही निमित्त निमित्ती का साहित्य है, इसलिए योग का अध्याहार होता है । यहाँ पर "आद्यन्तौ टकितौ" की तरह एकधर्मावच्छिन्न 'स्तोः' समुदाय का एक धर्मावच्छिन्न श्चुः समुदाय में एक धर्मावच्छिन्न निवर्त्य निवर्तकभाव सम्बन्ध से अन्वय होगा । सामान्य अन्वय

न। "शात्" (पा० सू० ८।४।४४) इति ज्ञापकात्। "अल्पाच्तरम्" (पा० सू० २।२।३४) इत्यादौ तु सौत्रत्वात् श्चुत्वं न। तज्ज्ञानमित्यादौ तु भवत्येव। स्तोः श्चौ श्चुरिति सुवचम्। न च "तस्मिन्निति निर्दिष्टे–" (पा० सू० १।१।६६) इति परिभाषोपस्थानेन यज्ञः याच्ञा इत्यादि न सिध्येत्। "शात्" (पा० सू० ८।४।४४) इति लिङ्गेन तस्या इहानुपस्थानात्॥

---

३।४।८४) इत्यादौ सूत्रान्तरस्थक्रमेणैव यथासंख्यमिति भावः। च्वादिशब्दैश्चानादिसिद्ध-लोकप्रसिद्धक्रमेणैवोपस्थितिरिति तात्पर्यम्। ननु तज्ज्ञानमित्यादौ श्चुयोगाभावान्न स्यादत आह—तज्ज्ञानमिति। जञयोगे तथोच्चारणमात्रं न त्विदं वर्णान्तरमिति भावः। अनुपस्थानेति। पूर्वत्वांशानुपस्थानेत्यर्थः। तेन चितमित्यादौ न दोषः।

---

वस्तुतस्तु स इति लुप्तविभक्त्यन्तं पृथक् पदम्। पुंस्त्वस्य कथंचित्साधनेऽपि सह विवक्षाया-ऽभावेन द्वन्द्वानुपपत्तेः। "आद्यन्तौ टकितौ" इत्यत्रेव यथासंख्यसूत्रबलेन प्रथमतः साहित्यावच्छिन्ने साहित्यावच्छिन्नान्वयेन सहविवक्षोपपादनं त्वगतिकगतिकमिति बोध्यम्। संयोग इति तदर्थ इति। अत्र सूत्रे योगः शाब्दिकोऽव्यवहितत्वरूपो गृह्यते, नतु "नमः स्वस्ति" इत्यत्रेवार्थिक इति तदाशयः। उपपत्त्यन्तरमाह—सत्याभामेति। चितं, कटु-तैलम् इति क्वाचित्कं वाक्यमेतत्। अनादितयेति। अत्र प्रमाणञ्च नारदीयशिक्षा तत्रोक्तम्—

> अनन्त्यश्च भवेत्पूर्वो ह्यन्त्यश्च परतो यदि।
> तत्र मध्ये यमस्तिष्ठेत्सवर्णः पूर्ववर्णयोः॥

ज्ञापकादिति। न च विश्नशब्दात् णिजन्तादाचारक्विबन्ताद्वाकर्तरि क्विपि अल्लोप-स्ततो "ङुङ्" शब्दे इति धातोर्लिट् एकवचने जुङुवे इति पदे परे प्राप्तस्य श्चुत्वस्य

---

के पश्चात् 'यथासंख्य' सूत्र के सहकार से दन्त्य सकार का तालव्य शकार के साथ तवर्ग का चवर्ग के साथ अन्वय हो जायगा। इसको अगतिक गति मानने पर तो स् यह लुप्तषष्ठीकपद है। इसी प्रकार 'श्चुः' घटक श् भिन्नपद है। योग का अभिप्राय है संयोग, "विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वक्तव्यः" से सत्या, भामा की तरह पूर्वपद का लोप हो गया।

संयोग का यहाँ पर अभिप्राय है, सम्यक्त्वविशिष्ट समभिहार, सम्यक्त्व नैरन्तर्येण लेंगे, अर्थात् व्यवधानशून्यत्वेन लेगें, अतः चितम् इत्यादि में श्चुत्व नहीं होता। स्थानी आदेश का ही यथा-संख्य है। 'त थ द ध न' यह क्रम अनादि होने से उसके स्थान पर च छ ज झ ञ होगा सूत्रा-न्तरस्थ क्रम को लेकर जैसे णलादि होते हैं। च्वादि शब्द तो अनादि सिद्ध लोकप्रसिद्ध क्रम से ही उपस्थित होते हैं। निमित्त और स्थानी का यथासंख्य नहीं होता, शात् इस सूत्र के ज्ञापन के बल से। अन्यथा शकार से परे तवर्ग को चुत्व प्राप्त ही नहीं होगा। "अल्पाच्तरम्" (२।२।३४) में तो सौत्रत्वात् श्चुत्व नहीं होता। तज्ज्ञानमित्यादि में श्चुत्व का योगाभाव होने से श्चुत्व नहीं होना चाहिये तो उत्तर देते हैं, तज्ज्ञानम् में तो श्चुत्व होता ही है। ज् ञ् का योग रहने पर ज्ञ का उच्चारण होता है, वर्णान्तर नहीं है। "स्तोः श्चौ श्चुः" ही कहना उचित है। यदि कहो "तस्मिन्निति" (१।१।६६) परिभाषा की उपस्थिति हो जाने पर 'यज्ञः' 'याच्ञा', इत्यादि का साधुत्व नहीं होगा तो नहीं कह सकते "शात्" इस सूत्र सामर्थ्यात् से पूर्वत्वांश की उपस्थिति नहीं होगी। अव्यवहितांश की उपस्थिति तो होगी ही, अतः चितम् इत्यादि का साधुत्व हो जाता है।

"ष्टुना" ( पा० सू० ८।४।४१ ) ॥ इहापि कार्यिनिमित्तयोर्यथासंख्यं न । "तोष्षि" ( पा० सू० ८।४।४३ ) इति ज्ञापकात् । ष्टौ ष्टुरिति सुवचम् । ईट्टे, ईष्टे; इत्यादौ "न पदान्तात्–" ( पा० सू० ८।४।४२ ) इति ज्ञापकान्न दोषः । सर्पिष्टममिति । "ह्रस्वात्तादौ–" ( पा० सू० ८।३।१०१ ) इति षत्वम् ।

'प्रत्यये भाषायाम्' इति । यत्तु प्राचा मयटि नित्यमिति । पठितम् । यच्च हलन्तप्रकरणे षण्णां, षड्णामित्युदाहृतम् । यच्च "यरोऽनुनासि–" ( पा० सू० ८।४।४५ ) इति वाऽनुनासिक इति तत्र व्याख्यातं तत्सर्वं भाष्यविरोधादुपेक्ष्यम् । यवादिगण इति । "यचि भं तसौ मत्वर्थे" इति संहितया पाठे तसाविति तात्पूर्वं दकारं प्रश्लिष्य भत्वेनाप्येतत् समाधातुं शक्यम् ।

---

षत्वमिति । न च षस्य पदान्ते जश्त्वं भविष्यतीति तद्व्यर्थमिति वाच्यम् । षत्वस्यासिद्धत्वेनास्य जश्त्वाभावात् ।

भाष्येति । प्रत्यय इत्येव तत्र पाठादिति भावः । दकारमिति । चर्त्वेनेति भावः । छुचछन्दस्य यवादिगणे पाठे न मानमिति तत्र "झयः" ( पा० सू० ८।२।१० ) इति वत्वे छुद्वानित्येवेति तात्पर्यमिति केचित्, तन्न । छुन्मानित्यदावतिप्रसङ्गात्—इति तु क्वाचित्कोऽसांप्रदायिकः पाठः ।

---

निषेधेन "शात्" इति सूत्रस्य चारितार्थ्येन ज्ञापकत्वासंगतिरिति वाच्यम् ज्ञापकपरभाष्यप्रामाण्येन "विश्न्" इत्यादीनामनभिधानात् । संयोगान्तलोपेन तादृशरूपाभावाद्वा । श्चुयोगाभावादिति । "ज्ञ" इति वर्णस्य वर्णान्तरत्वाभिमानेनेदम् । पूर्वत्वांशानुपस्थानेत्यर्थ इति । 'तस्मिन्निति निर्दिष्टे पूर्वस्य" इति परिभाषयांऽशत्रयमुपस्थाप्यते पूर्वत्वमव्यवहितत्वं-विधेयान्वयिषष्ठ्यर्थश्चेति । तत्र "शात्" इति सूत्रेण पूर्वत्वमात्रं बाध्यते, अंशान्तरद्वयंतूपस्थाप्यते एव । तत्र षष्ठ्याः सूत्रे उपादानेन षष्ठ्यर्थांशस्य सिद्धतयाऽव्यवहितत्वांशएवात्रोपस्थाप्यते । येन 'चितं, कटु, तैलम्' इत्यत्रेकारेण व्यवधानान्न तकारस्य श्चुत्वम् । एवञ्च परिभाषया यावानंशो सिद्धो बाधितो वा, तावन्तमंशं वर्जयित्वा शेषांशमुपस्थाप्यते । षत्वमिति । "ह्रस्वात्तादौ तद्धिते" ( ८।३।१०१ ) इत्यनेनात्रषत्वम् । तच्च "झलां जशोऽन्ते" ( ८।२।३९ ) इति दृष्ट्या असिद्धमिति भावः । ननु 'सर्पिस्तमम्" इत्यवस्थायां जश्त्वं प्राप्नोति, तदपवादत्वात् रुत्वम्, तदपवादत्वात्" ह्रस्वादिति षत्वम् ।

---

"ष्टुना ष्टुः" (८।४।४१) यहाँ पर भी स्थानी निमित्त का यथासंख्य नहीं है । "तोष्षि" ( ८।४।४३ ) इस सूत्र के ज्ञापन के बल से । ईट्टे ईष्टे, में ती ष्टुत्व होता है, "न पदान्त" (८।४।४२) सूत्र के ज्ञापन से "नपदान्ताट्टोरनाम्" ( ८।४।४२ ) इस सूत्र में "टोः" ग्रहणाभाव में अर्थ होगा "पदान्त षकार टवर्ग से, परे नामावयवभिन्न तवर्ग को तथा सकार को ष्टुत्व नहीं होता । तथा च "सर्पिष्टमम्" में ष्टुत्व का निषेध होने लगता, यहाँ पर "ह्रस्वात्तादौ" ( ८।३।१०१ ) से षत्व हुआ है, यदि कहो कि पदान्त में जश्त्व हो जायगा टो ग्रहण व्यर्थ है, तो नहीं कह सकते, षत्व को असिद्ध हो जाने से जश्त्वाभाव होगा । वस्तुतस्तु 'सर्पिस् तमम्' इस स्थिति में जश्त्व को बाधकर अपवादत्वात् रुत्व हो जायगा विसर्ग हो जायगा, सत्व हो जायगा, सकार को षत्व हो जायगा । तथा च विसर्ग सत्व षत्व को असिद्ध हो जाने से जश्त्वाभाव होगा । रुत्व के पूर्व षत्व नहीं होगा, रुत्व की दृष्टि में षत्व असिद्ध हो जाने से ।

"उदः स्थाः–" ( पा० सू० ८।४।६१ ) ॥ "अनुस्वारस्य ययि–" ( पा० सू० ८।४।५८ ) इत्यत्र समस्तमपि सवर्णग्रहणमिह निष्कृष्य सम्बध्यते । एकदेशे स्वरितत्वप्रतिज्ञानादित्याशयेनाह—पूर्वसवर्णः स्यादिति । अघोषस्येत्यादि । एतेन सस्य तकार इति प्राचां ग्रन्थाः प्रत्युक्ताः । यदपीह "चयो द्वितीयाः शरि" इत्यस्योपन्यसनं तदतिरभसात् ॥

---

ननु सवर्णपदमधिकं "परसवर्णः" इत्यत्रैकार्थीभावापन्नस्यान्यत्र सम्बन्धो वक्तुमशक्यः । न च पूर्वस्येत्यस्य सम्बन्ध्याकाङ्क्षायां यत्किञ्चित्सम्बन्धिकल्पनापेक्षया पूर्वत्रोपस्थितार्थवाचकपदाध्याहारौचित्यात्तल्लाभः । "चुटू" ( पा० सू० १।३।७ ) इत्यादावादेरप्येवमेव सम्बन्धोपपत्तौ तत्र तत्र स्वरितत्वप्रतिज्ञाया वैयर्थ्यापत्तेः न च स्वरितत्वप्रतिज्ञासामर्थ्यादेकदेशानुवृत्तिः, "तोर्लि" ( पा० सू० ८।४।६० ) इत्यत्र समुदायानुवृत्त्या तस्याश्चारितार्थ्यादित्यत आह—अनुस्वारस्येत्यादि । एकदेशे इति च । पकारमात्रे स्वरितत्वप्रतिज्ञयैव "तोर्लि" (पा०सू० ८।४।६०) इत्यादावनुवृत्तिसिद्धौ पुनः सकारांशे तत्प्रतिज्ञया तावतोऽप्यंशस्य उत्तरत्रानुवृत्तिरिति भावः । तदतिरभसादिति । चयोऽभावात् । दीर्घादा-

---

तस्यासिद्धत्वाज्जश्त्वम् इति चक्रकापत्त्या षत्वानापत्तिरिति चेन्न 'चतुष्ट्वम्' इत्यादौ 'विसर्जनीयस्य सः' इत्यस्यासिद्धतया रुत्वजश्त्वयोरप्राप्त्या तत्र षत्वस्य चारितार्थ्येनापदत्वाभावात् षत्वस्यासिद्धतया रुत्वे विसर्गे षत्वे च चक्रकाभावात् ।

न च सन्निपातपरिभाषया षत्वाभावः त्रिपाद्यां तदप्रवृत्तेरित्यन्यत्र विस्तरः । तात्पर्यमिति । इदमेव युक्तमिति, यवादिगणे ककुद्मान् इति विशिष्टपाठे मानाभावात् । तं विना दकारनिपातनकल्पनाया अयोगात् । पाठ इति । मूले समाधातुं शक्यमित्युत्तरमिति केचिदित्यादिग्रन्थ इत्यर्थः । अधिकमिति । तत्सम्बन्धोपायानुपलम्भादित्याशयः । पकारमात्रे इति । परसवर्णपदे इति शेषः । चयोऽभावादिति । उदस्येति थादेशस्या-

---

जो 'प्रत्यये भाषायाम् नित्यम्' के स्थान पर "मयटि नित्यम्" यह पढ़ते हैं तथा हलन्त प्रकरण में 'षण्णाम्' 'षड्णाम्' यह उदाहरण देते हैं, तथा जो "यरोऽनुनासिक" (८।४।४५) से विकल्प से अनुनासिक हुआ यह व्याख्यान करते हैं, वह सब भाष्यविरुद्ध होने से उपेक्षणीय है । क्योंकि भाष्यकार ने "प्रत्यये भाषायाम् नित्यम्" ही पढ़ा है । प्रत्यय परे रहते, भाषा में नित्य ही अनुनासिक होता है तो "ककुद्मन्तः" में भी अनुनासिक होना चाहिये तो उत्तर देते हैं यवादिगण में दकारान्तनिपातन होने से अनुनासिक नहीं होता । "यचि भं तसौ मत्वर्थे" इस संहिता पाठ में तसौ यहाँ तकार के पूर्व दकार का प्रश्लेष करने पर अर्थ होगा, मत्वर्थीय प्रत्यय परे रहते, तान्त सान्त दान्त की भसञ्ज्ञा होती है, तथा च भ संज्ञा होने के कारण पदान्तत्व नष्ट हो जाने से अनुनासिक नहीं होता । प्रश्लिष्ट दकार को चर्त्व हो जायगा । मृत् शब्द का यवादि गण में पाठ है, इसमें कोई प्रमाण नहीं है "झयः" सूत्र से वत्व हो जाने पर मृद्वान् ही बनता है, यह किन्हीं विद्वानों का मत है, किन्तु यह ठीक नहीं मृन्मान प्रयोग की असिद्धि होने से, मृच्छब्द से लेकर अतिप्रसङ्गात् पर्यन्त क्वाचित्क असांप्रदायिक पाठ है । "उदःस्थास्तम्भोः" ( ८।४।६१ ) में "अनुस्वारस्य ययि परसवर्णः" सूत्र से सवर्णपद समस्त रहने पर भी एकदेश में स्वरितत्व प्रतिज्ञा करके उसका अनुवर्तन कर लेते हैं, तथा च अर्थ होता है, उद् से परे जो स्था, स्तम्भ उसको पूर्व सवर्ण होता है ।

यहाँ पर आशंका करते हैं कि "उद स्थाः" ( ८।४।६१ ) सूत्र में सवर्ण न देखा जाने से वृत्ति में सवर्ण पद अधिक करना उचित नहीं क्योंकि एकार्थीभावापन्न परसवर्ण का अन्यत्र सम्बन्ध नहीं

तच्छिव इति। यत्तु प्राचा तत् शिव इत्यत्र जश्त्वे कृते "खरि च" (पा० सू० ८।४।५५) इत्युक्तम्। तन्न। तदो दान्तत्वेन जश्त्वोपन्यासवैयर्थ्यात्। यत्तु तत्पौत्रेणोक्तं तदो "वाऽवसाने" (पा० सू० ८।४।५६) इति चर्त्वे कृते पश्चाच्छिव-

---

चार्याणाम्" (पा० सू० ८।४।५२) इत्युत्तरं "अनुस्वारस्य ययि" (पा० सू० ८।४।५८) "वा पदान्तस्य" (पा० सू० ८।४।५९) "तोर्लि" (पा० सू० ८।४।६०) "उदः स्थाः" (पा०सू० ८।४।६१) "झयो हो" (पा०सू० ८।४।६२) "शश्छोऽटि" (पा० सू० ८।४।६३) इति षट्सूत्रीपाठोत्तरं "झलां जश् झशि" (पा० सू० ८।४।५३) "अभ्यासे चर्च" (पा० सू० ८।४।५४) "खरि च" (पा० सू० ८।४।५५) "वाऽवसाने" (पा० सू० ८।४।५६) "अणोऽप्रगृह्यस्य" (पा०सू० ८।४।५७) इति पञ्चसूत्र्याः पाठे भाष्यसम्मते थस्य चर्त्वेऽपि तस्यासिद्धत्वाच्छर्परत्वाभावाच्चेति भावः॥

---

सिद्धत्वादप्रवृत्या धातौ प्रवृत्तस्यासिद्धत्वेन वा शर्परत्वेऽपि चर्त्वासिद्धत्वेनोपसर्गे चयोऽभाव-इत्याशयः। प्रसिद्धाष्टाध्यायीपाठानुरोधादसिद्धत्वेन थस्य चर्त्वाभावाच्चयोऽभाव इति

---

हो सकता। यदि कहो कि पूर्व को सम्बन्धी की आकाङ्क्षा होने पर यत्किञ्चित्सम्बन्धिकल्पना की अपेक्षा पूर्व में उपस्थित अर्थवाचक पदाध्याहार उचित होने से सवर्ण पद का लाभ हो जायगा। तो नहीं कह सकते "चुटू" (१।३।७) इत्यादि में भी इसी प्रकार आदि का सम्बन्ध हो जायगा, स्थान-स्थान पर स्वरितत्व प्रतिज्ञा व्यर्थ हो जाने से। यदि कहो कि स्वरितत्व-प्रतिज्ञा सामर्थ्य से एकादेशानुवृत्ति नहीं होगी, क्योंकि समुदायानुवृत्ति अचरितार्थ है तो नहीं कह सकते, समुदायानुवृत्ति "तोर्लि" (८।२।६०) में चरितार्थ होने से स्वरितत्व प्रतिज्ञासामर्थ्य से एकादेशानुवृत्ति हो जायगी, इस कारण मनोरमाकार ने कहा 'अनुस्वारस्य' इत्यादि। एकदेश में स्वरितत्व प्रतिज्ञा का अभिप्राय है। केवल पकारमात्र में स्वरितत्व प्रतिज्ञा से ही 'तोर्लि' में अनुवृत्ति सिद्ध रही पुनः सकारांश में स्वरितत्व प्रतिज्ञा होने से उतने अंश की भी उत्तर में अनुवृत्ति होती है।

उत्थानम् में अघोष महाप्राण वाले सकार को अघोष महाप्राण वाला थकार हो गया यह स्वीकार कर लेने पर सकार को तकार हो गया, यह प्राचीनों का ग्रन्थ खण्डित हो गया, उत्थानम् में जो चय् को द्वितीय अक्षर करते हैं, शर् परे रहते पौष्करसादि आचार्य के मत से वह अत्यन्त शीघ्रता से कह दिया गया। कारण "चयो द्वितीया शरिपौष्करसादेरिति वाच्यम्" इस वार्तिक को "नादिन्याक्रोशे पुत्रस्य" (८।४।४८) इस सूत्र पर पढ़ा गया है, "खरि च" ८।४।५५ का है तथा च पूर्व त्रिपादी दृष्टि से पर त्रिपादी असिद्ध हो जाने पर वहाँ चय् का अभाव रहेगा दकार दिखाई पड़ेगा। यहाँ पर भाष्यसम्मत अष्टाध्यायी निम्नलिखित है। "दीर्घादाचार्याणाम्" (८।४।५२) इसके उत्तर "अनुस्वारस्य ययि" (८।४।५) इसके उत्तर "वापदान्तस्य" (८।४।५९) इसके उत्तर "तोर्लि" (८।४।६०) इसके पश्चात् "उदः" (८.४।६१) इसके पश्चात् "झयो" हो (८।४।६२) तथा "शश्छोटि" (८।४।६३) इस षट्सूत्री पाठ के उत्तर "झलां जश् झशि" (८।४।५३) "अभ्यासे चर्च" (८।४।५४) "खरिच" (८।४।५५) "वावसाने" (८।४।५६) "अणोऽप्रगृह्यस्य" (८।४।५७) पञ्चसूत्री पाठ है। वृत्तिकारादि सम्मत अष्टाध्यायी पक्ष में तो "खरि च" (८।४।५५) से चर्त्व नहीं होता, चर्त्व के प्रति थकार असिद्ध होने से। क्योंकि "उदः स्थास्तम्भोः पूर्वस्य" ८।४।६१ का है, अर्थात् पर त्रिपादी होने से असिद्ध हो जाता है। किन्तु भाष्यसम्मत अष्टाध्यायी पक्ष में तो थकार को चर्त्व हो जायगा किन्तु चर्त्व को असिद्ध होने से तथा शर्परत्वाभाव होने से "चयोः द्वितीया" की प्राप्ति नहीं रहेगी।

इत्यनेन सम्बन्धे "झलां जशोऽन्ते" ( पा० सू० ८।२।३९ ) इति जश्त्वे "खरि च" ( पा० सू० ८।४।५५ ) इति चर्त्वमिति तददितिस्थवीयः। जश्त्वं प्रति अवसाने चर्त्वस्यापवादत्वात्। जश्त्वे शिवशब्दानपेक्षणाच्च। भाविन्यवसानभङ्गे "वाऽव-साने" ( पा० सू० ८।४।५६ ) इत्यस्य पूर्वमप्रवृत्तेश्च। प्रवृत्तस्य वा निवृत्ति-सम्भवात्। उक्तं च "अकृतव्यूहाः पाणिनीयाः" इति "कृतमपि शास्त्रं निवर्त-यन्ति" इति च। अन्यथा हरिरयमित्यत्रापि त्वदुक्तरीत्या प्रवृत्तो विसर्गः केन वार्यताम्। अथ तनोतीति तदिति क्विबन्तं ब्रूषे एवमपि जश्त्वेन दकारोऽस्तु। चर्त्वे कृते श्चुत्वमिति तु न न्याय्यम्। श्चुत्वं प्रति चर्त्वस्यासिद्धत्वात्।

---

चर्त्वमिति। ततः श्चुत्वे "शश्छोऽटि" ( पा० सू० ८।४।६३ ) इति प्रक्रियेति भावः। चर्त्वस्यापवादत्वादिति। एवं च तत्र कृते जश्त्वाप्रवृत्तिरिति भावः। न च जश्त्वे कृते चर्त्वस्य चारितार्थ्येन तस्यासिद्धत्वादपवादत्वे न मानमिति वाच्यम्। तत्कालेऽवश्यं प्राप्तत्वेन येन नाप्राप्तिन्यायेनापवादत्वस्य सुलभतयोक्तरीतेरसम्भवात्। एतदेवाभिप्रेत्य मिदचो-ऽन्त्यात्" ( पा० सू० १।१।४७ ) सूत्रे भाष्ये उक्तम्—सत्यपि सम्भवे बाधनं भवतीति। अन्यथा कौण्डिन्याय तक्रमित्यनेन ब्राह्मणेभ्यो दधीति प्राप्तदधिदानस्यापि बाधो न स्यात्। तद्दानोत्तरं तत्पूर्वं वा तद्दानस्य चारितार्थ्यात्। अत एव "अजादेर्द्वितीयस्य" ( पा० सू०

---

मूलकाराशयमुत्प्रेक्ष्याह। शर्परत्वाभावाच्चेति। धातुलकारस्येति भावः। उक्तरीतेरिति। अपवादभूतावसानिकचर्त्वप्रवृत्त्युत्तरंजश्त्वप्रवृत्तिरीतेरित्यर्थः। अत्रायं निष्कर्षः। विशेष-शास्त्रेण सामान्यशास्त्रस्य बाधनं द्वेधा। सर्वथा निरवकाशत्वेन उत्सर्गप्राप्तिकालिक-तदप्राप्तियोग्यलक्ष्यशून्यत्वेन च। तत्र सर्वे ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवे-विषामित्यत्र भोजनकाले भोजनोत्तरं चानुपपन्नतया सर्वथा निरवकाशेन परिवेषणेन भोजनस्यैव यथा 'ङेराम्नद्याम्नीभ्य इत्यनेन' याडाप इत्यस्य नहि कृते याटचाम: प्रवृत्तिसम्भवः। निर्दिश्यमानस्ययाटा व्यवधानात् प्रवृत्तिकालेप्यनुपपत्तिरेव, यौगपद्या-संभवात्तत्र परिवेषणोत्तरं भोजनवत् सर्वथा निरवकाशेन बाधितस्ययाटो बाधप्रवृत्युत्तर-

---

जो प्राचीन 'तद् शिवः' इस स्थिति में जश्त्व हो जाने पर 'खरि च" ( ८।४।५५ ) से चर्त्व करते हैं वह युक्त नहीं हैं, तद् शब्द दकारान्त है, अतः जश्त्वोपादन व्यर्थ है। जो उनके पौत्र ने तद् में 'वावसाने' ( ८।४।५६ ) से चर्त्व करने पर पश्चात् शिव का सम्बन्ध करके "झलां जशोऽन्ते" ( ८।२।३९ ) से जश्त्व 'खरिच' से चर्त्व श्चुत्व "शश्छोटि" ( ८।४।६३ ) से छत्व करके 'तच्छिवः' का साधुत्व किया है, वह अत्यन्त स्थूल है। क्योंकि अवसान चर्त्व जश्त्व का अपवाद है। अतः अपवादभूत वावसाने की प्रवृत्ति हो जाने पर जश्त्व नहीं होगा।

यदि कहो कि जश्त्व हो जाने पर चर्त्व को चरितार्थ होने से चर्त्व पर त्रिपादी होने के कारण असिद्ध हो जायगा अतः वावसाने अपवाद है, इसमें कोई प्रमाण नहीं है तो नहीं कह सकते, अवसान काल में "झलां जशोऽन्ते" ( ८।२।३९ ) की अवश्य प्राप्ति होने से। अपवादभूतावसानिक चर्त्व की प्रवृत्ति असम्भव है। इसी अभिप्राय से "मिदचोऽन्त्यात्" ( १।१।४७ ) सूत्र पर भाष्य में कहा है। 'सत्यपिसम्भवे बाधनं भवति' अर्थात् सम्भव रहनेपर भी बाध होता है। अन्यथा "कौण्डिन्यायतक्रम्" इससे "ब्राह्मणेभ्यो दधि" इससे प्राप्त दधिदान का भी बाध नहीं होगा। दधिदान के पूर्व अथवा दधि-

यत्तु "न मु ने" (पा० सू० ८।३।३) इत्यत्र "न" इति योगं विभज्यासिद्धत्वमिह नेत्याहुः। तदपि न। असिद्धत्वेऽपि रूपसिद्धौ निर्बाधायां योगविभागस्यागतिकगतिभूतस्येहाश्रयणे प्रमाणाभावात् ॥

---

६।१।२) इति सूत्रे प्रथमद्विर्वचनोत्तरमस्य चारितार्थ्येन प्रथमद्विर्वचनस्यानेन बाधो न स्यादित्याशङ्क्य सत्यपि सम्भवे इति न्यायेन बाधकत्वमुक्तं भाष्ये। एवञ्च "दयतेर्दिगि—" (पा० सू० ७।४।९) इति सूत्रस्थकैयटादिग्रन्था 'असम्भवे एव बाधकता' इति वार्तिकानुसारेण प्रवृत्ता अयुक्ता एवेति बोध्यमिति भावः। केन वार्यतामिति। एवं चेदृशविषये वाक्यसंस्कारपक्षेणैव साधुत्वान्वाख्यानमिति स्वीकृत्याकृतव्यूहपरिभाषा त्याज्येति चेदिष्टापत्तिरिति बोध्यम्।

अन्ये तु पदसंस्कारे हरिः अस्तीति सविसर्गमपि साध्वेव सत्यभिधाने, परिभाषाया भाष्येऽदर्शनादित्याहुः। प्रमाणाभावादिति। योगविभागस्य भाष्येऽदर्शनेनाप्रामाणिकत्वाच्चेत्यपि बोध्यम् ॥

---

मुत्सर्गस्य सति सम्भवे भवत्येव प्रवृत्तिः। यत्र तु सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यत्रदधिदानोत्तरं प्राप्तियोग्यतया चरितार्थेनापि तक्रदानेन दधिदानस्येवोत्सर्गप्रवृत्त्युत्तरकालिकचारितार्थ्योपहितेन तत्प्रवृत्तिकालिकतदप्रवृत्तियोग्यलक्ष्यशून्यत्वेन बाधः। यथा "दयतेर्दिगि लिटी" त्यनेन "लिटिधातोरनभ्यासस्येत्यस्य", तत्र हि द्वित्वोत्तरमुत्तरखण्डे प्रवृत्त्या सत्यपि चरितार्थे द्वित्वप्रवृत्तिकालिकद्वित्वाप्रवृत्तियोग्यस्वप्रवृत्तिविषयलक्ष्यशून्यतया दिग्यादेशेन द्वित्वस्य बाधः। तत्र तक्रदानोत्तरं दधिदानस्येव बाधकप्रवृत्त्युत्तरं पुनरुत्सर्गस्याप्रवृत्तिः। एवञ्च तक्रकौण्डिन्यन्यायप्रयुक्तचारितार्थ्यमूलकबाधकत्वोपहितेनावसानिकचर्त्वेन बाधितस्य जश्त्वस्य पुनः प्रवृतिर्नसम्भवतीति। तदेतत्सूचयन्नाह, एतदेवाभिप्रेत्येति। ननु यथासंख्यमित्यस्य क्रिया विशेषणत्वात्तद्विशिष्ट-

---

दान के पश्चात् तक्रदान चरितार्थ होने से। उत्सर्ग के अप्राप्ति योग्य विषय में अचरितार्थ अपवाद बाध प्रयोजक होता है, यह स्वीकार करने के कारण ही 'अजादेर्द्वितीयस्य' इस सूत्र पर भाष्यकार ने प्रथम एकाच् को द्वित्व हो जाने पर 'अजादेर्द्वितीयस्य' को चरितार्थ होने से प्रथम द्विर्वचन का "अजादेर्द्वितीयस्य" से बाध नहीं होना चाहिये यह आशंका करके "सत्यपि सम्भवे बाधनं भवति" यह कहा। जैसे—दधिदान का सम्भव रहने पर तक्रदान निवर्तक होता है, उसी प्रकार यहाँ पर भी प्रथम द्विर्वचन सम्भव रहने पर भी द्वितीय द्विर्वचन बाध लेता है। अतः "दयतेर्दिगिति" (७।४.९) सूत्रस्थ कैयटादिग्रन्थ "असम्भवे एव बाधकता" इस वार्तिकानुसार प्रवृत्त होने के कारण अयुक्त है। जश्त्व में शिव शब्द की अपेक्षा भी नहीं है। आगे अवसानभङ्ग होने वाला हो तो "वावसाने" (८।४।५६) इसकी प्रवृत्ति भी नहीं होगी, अथवा प्रवृत्त हो गया तो, उसकी निवृत्ति हो जायगी। "अकृतव्यूहाः पाणिनीयाः कृतमपिशास्त्रं निवर्तयन्ति"। अन्यथा हरिरयम् इत्यादि में प्रवृत्त जो विसर्ग है उसका किससे वारण होगा। इस तरह के स्थलों में वाक्यसंस्कारपक्ष से ही साधुत्व स्वीकार करके अकृतव्यूहपरिभाषा को छोड़ देना चाहिये, यदि कहो तो इष्टापत्ति ही है। अन्य विद्वान् तो कहते हैं, शिष्ट प्रयुक्त रहने पर पद संस्कारपक्ष में हरिः अस्ति, इत्यादि विसर्ग भी साधु है। भाष्य में अकृतव्यूहपरिभाषा देखी नहीं गई है। यद्यपि तनोतीति तत् क्विबन्त है, तब भी जश्त्वेन दकार हो जायगा। चर्त्व कर देने पर श्चुत्व नहीं होगा, श्चुत्व के प्रति चर्त्व असिद्ध हो जाने से।

आक्रंस्यत इति। "आङ उद्गमने" (पा० सू० १।३।४०) इति तङ्। "स्नुक्रमोः–" (पा० सू० ७।२।३६) इति नेट्॥

समसम्बन्धी विधिरिति। समकर्मकं विधानमिति तु नोक्तम्। अनुवाद्ययोरपि यथासंख्यस्येष्टत्वात्। "समूलाकृतजीवेषु हन्कृञ्ग्रहः" (पा० सू० ३।४।३६) इत्यत्र यथा॥

"ङ्णोः" (पा० सू० ८।३।२८)॥ कुक्टुकोः पूर्वान्तत्वात्प्राङ्क्साय इत्यत्र "सात्पदाद्योः" इति षत्वं न। 'सुगण्ट्साय' इत्यत्र "न पदान्तात्" (पा० सू० ८।४।४२) इति ष्टुत्वं न।

पुष्करे तीर्थविशेषे सीदतीति पुष्करसत् तस्यापत्यं पौष्करसादिराचार्यः। बाह्वादित्वादिञ्। अनुशतिकादित्वादुभयपदवृद्धिः॥

---

यथासंख्यस्येति। ख्यान्तैकदेशेन सूत्रस्य ग्रहणं बोध्यम्॥

---

विधिप्रवृत्तिनियामकशास्त्रप्रवृत्तेरिष्टत्वादिति वक्तव्ये यथासंख्यस्येष्टत्वादित्ययुक्तमत आह— ख्यान्तैकदेशेनेति। एवञ्चानुवाद्ययोरपि यथा संख्यमनुदेशस्समानामित्येतच्छास्त्रस्य व्यवस्थापकत्वेनाभीष्टत्वादित्यर्थ इत्यदोषः।

---

जो कहते हैं कि "न मु ने" (८।३।३) यहाँ पर 'न' यह योग विभाग करके कहेंगे, नत्व असिद्ध नहीं होता। उनका कहना ठीक नहीं असिद्ध हो जाने पर भी रूप सिद्ध हो जायगा, अगतिकगति योग विभागाश्रयण में कोई प्रमाण नहीं। योग विभाग भाष्य में न देखा जाने से अप्रमाणिक भी है।

आक्रंस्यते यहाँ पर "आङ्उद्गमने" (१।३।४०) से आत्मनेपद हुआ है। "स्नुक्रमोः" (७।२।३६) से अनात्मनेपद में ही इट् का आगम होता है। तथा च आत्मनेपद परे होने से इट् का निषेध हो जायगा। "यथासंख्यमनुदेशः समानाम्" (१।३।१०) का अभिप्राय होता है, समसंख्या का सम्बन्ध क्रम से होता है। "सम्यक्ख्यानम् संख्या" अर्थात् क्रमविशिष्टज्ञान, "तमनतिक्रम्य यथा-संख्यम्" "अनुदिश्यते यः सोऽनुदेशः" अर्थात् "पश्चाद्भववाक्यार्थबोधकालिकः सम्बन्धः"। समानाम् में सम्बन्ध में षष्ठी है। अतः "समूलाकृतजीवेषु हन्कृञ्ग्रहः" यहाँपर उद्देश्य मात्र में समूलादि उपपदों में तथा हनादि धातुओं में समसंख्या होने पर विधेय एक रहने पर यथासंख्य की प्रवृत्ति होती है। यदि 'अनुदेशनमनुदेशः' भाव में घञ् प्रत्यय करेगें, समानाम् में कर्म में षष्ठी मानेगें तो अर्थ होगा। 'समकर्मकविधान', तथा च "एचोऽयवायावः" इत्यादि में तो उद्देश, विधेय में समसंख्या होने से यथासंख्य हो जायगा, किन्तु "समूलाकृतजीवेषु" में नहीं होगा। अतः उद्देशगत सम संख्या रहने पर भी यथासंख्य हो इसलिए कर्म में प्रत्यय तथा सम्बन्ध में षष्ठी मानकर, समसम्बन्धी कार्य क्रम से होता है यह फलितार्थ किया जाता है। "यथासंख्यस्येष्टत्वात्" यह मनोरमाकार ने कहा है, किन्तु यहाँ पर अव्ययीभावसमास होने पर यथासंख्यस्य का साधुत्व नहीं हो सकता विभक्ति का लुक् हो जाने से। इस पर शब्दरत्नकार कहते हैं कि ख्यान्त का अनुकरण कर भेद विवक्षा मान लेने पर 'यथासंख्यस्य' बन जायगा। "ङ्णोः" (८।३।२८) से जो कुक् टुक् का आगम होता है, वह "आद्यन्तौ" परिभाषा के बल से पूर्वान्त होने से "प्राङ्क्सायः" यहाँपर "सात्पदाद्योः" से षत्व नहीं होता। 'सुगण्ट् सायः' यहाँ पर "न पदान्त" से ष्टुत्व का निषेध होता है। पुष्कर नामक तीर्थविशेष में जो ज्ञान प्राप्त करता है, उसको पुष्करसत् कहते हैं। पुष्करसत् शब्द से अपत्य अर्थ में इञ् प्रत्यय करके उभयपद को वृद्धि कर देने पर "पौष्करसादिः" शब्द का साधुत्व होता है।

"डः सि धुट्" ( पा० सू० ८।३।२९ ) ॥ 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्, परत्वात्" इत्यभिप्रेत्याह—सस्येति। सीति सप्तमीनिर्देशस्तु लाघवार्थः। षट्त्सन्त इति। धुटश्चर्त्वेन तकारः।

यत्त्वाहुः-"चयो द्वितीया" इति पक्षे तस्य थ इति तन्न। चर्त्वस्यासिद्धत्वात्। अत एव धुडभावे षट् सन्त इत्यत्र टस्य ठो न। टकारनकारविसर्गाणां द्वित्वविकल्पात् षोडश। "खयः शर" इति सकारद्वित्वे द्वात्रिंशत्। न च तत्र चर्त्वस्यासिद्धत्वं शङ्क्यम्। "पूर्वत्रासिद्धीयमद्वित्वे" इत्युक्तेः। न च "शरोऽचि" ( पा० सू० ८।४।४९ ) इति द्वित्वनिषेधः शङ्क्यः, तस्य सौत्रद्वित्वमात्रविषयत्वात्। अत एव "शरः खयः" इति वार्तिकस्य वत्सः अप्सराः, इत्युदाहरणं भाष्ये स्थितम्। धुटः परादित्वं "न पदान्तात्-" ( पा० सू० ८।४।४२ ) इति ष्टुत्वनिषेधार्थम्। अत एव वक्ष्यमाणस्तुगिहैव न कृतः।

---

परत्वादिति। "तस्मिन् ( पा० सू० १।१।६६ ) इति सूत्रापेक्षया "तस्मात्—" ( पा० सू० १।१।६७ ) इत्यस्य परत्वादित्यर्थः। डकारात्सकारे धुडित्यर्थे "तस्मिन्—" ( पा०सू० १।१।६६ ) इत्यस्य प्रवृत्तावुपस्थितडकारस्यागमित्वं, "तस्मात्—" इत्यस्य प्रवृत्तावुपस्थितसस्य तत्त्वमित्यसम्भवरूपविरोधे परत्वेन व्यवस्थेति सस्यागमित्वनिर्णय इति भावः। स्पष्टं चेदं "तस्मिन्" ( पा० सू० १।१।६६ ) इति सूत्रे भाष्ये। लाघवार्थ इति। षष्ठ्याः प्रयोगे एव कर्त्तव्ये इत्यर्थः।

चर्त्वस्यासिद्धत्वादिति। अत एव तुडिति नोक्तम्। अत एव—चर्त्वस्यासिद्धत्वादेव।

---

डः सीति। "डः" इति पञ्चमी प्रथमोपस्थितत्वात्। एवं नश्चेत्यत्रापि। अत्र न तावत् सप्तमीपञ्चम्योर्युगपत्प्रकल्पकत्वम्। कार्यित्वनिमित्तत्वयोर्युगपदसम्भवात्। "एकः पूर्वपरयोरिति ज्ञापकाच्च" न च पर्यायेण आवृत्त्यापत्तेः। किञ्च कथञ्चिदपि निर्णयस्य कर्तुं शक्यत्वेनाष्टदोषदुष्टविकल्पस्यायुक्तत्वादिति ध्वनयन्नाह—उभयेति। अतएवेति। चर्त्वस्यासिद्धत्वेन तकारस्य यकाराभावादेवेतिभावः।

ननु यथा कर्त्रर्थकसार्वधातुके शप् भवतीत्यर्थेनोभयोर्मध्येऽनवयवः शप्भवति तथैव डःसि धुट् भवतीत्यर्थेऽनवयवो धुट्स्यादिति चेन्न आगमलिङ्गटकारोच्चारणवैयर्थ्यापत्तेः।

---

जहाँ पञ्चमी, और सप्तमी दोनों का निर्देश रहता है, वहाँ 'पर' होने से अर्थात् "तस्मिन्निति" ( १।१।६६ ) इससे "तस्मात्" ( १।१।६७ ) यह पर है तथाच पञ्चमी निर्देश बलवान् होगा। अतः "डः सि धुट्" का अर्थ होता है, डकार से परे जो सकार उसको धुट् विकल्प से होता है। डकार से सकार परे रहते धुट् होता है, इस अर्थ में "षड् सन्तः" इस स्थिति में "तस्मिन्निति" परिभाषा की प्रवृत्ति होने पर डकार आगमी होगा, और "तस्मात्" परिभाषा की प्रवृत्ति होने पर सकार आगमी होगा, यह असम्भव रूप विरोध होने से, परत्वेन व्यवस्था करके सकार को आगमी बनाते हैं, यह "तस्मिन्निति" ( १।१।५६ ) सूत्र के भाष्य में स्पष्ट है।

"सः" यह षष्ठ्यन्त कहना चाहिये, सप्तमी निर्देश लाघवार्थ है। 'षट्त् सन्तः' यहाँ पर चर्त्व करने पर तकार हो गया। जो कहते हैं कि "चयो द्वितीयाः" से तकार को थकार हो जायगा, वह नहीं क्योंकि चर्त्व असिद्ध हो जाता है। थकाराभाव होने से ही तुट् का आगम नहीं कहा गया। चर्त्व असिद्ध होने के कारण धुट् अभावपक्ष में 'षट् सन्तः' यहाँ पर टकार को ठकार नहीं होता। धुट् विकल्प होने से दो रूप बन जाने पर "अनचि च" से टकार, तथा नकार विसर्ग को द्वित्व हो जाने

यत्त्वाहुः—एवमपि प्रक्रियालाघवार्थं तुडेव कर्तुमुचित इति तन्न। "चयो-द्वितीया-" इति पक्षे थकारापत्तेः॥ "श्चुत्वं धुटि सिद्धं वाच्यम्" अटतीत्यट्-श्चोतति। इह धुड् न।

"शि तुक्" ( पा० सू० ८।३।३१ ) शीति सप्तमी पूर्वत्र कृतार्थायाः "नः" इति पञ्चम्याः षष्ठीं कल्पयतीत्याह—नस्येति। ननु प्रकृतो धुडेवास्तु किं तुका। मैवम्। "शश्छोऽटि" ( पा० सू० ८।४।६३ ) इत्यस्य हि पदान्ताज्झयः परस्य शस्य छ इत्यर्थ आकरे स्थितः। एवं च धुटः परादित्वात् सञ्छम्भुरित्यत्र च्छो न स्यात्। विपूर्वाद्रपेरौणादिके शप्रत्यये "मध्वश्चोतन्त्यभितो विरप्शम्" इत्यादौ यथा। अतः पूर्वान्तस्तुक् कृतः।

---

ननु 'धुक् डः सि' इत्यस्तु सप्तमी च यथाश्रुतैव, ड इति च पष्ठ्यन्तं, परमार्थतो-वाक्यशक्त्यङ्गीकारेण पूर्वान्तत्वे परादित्वे वा न शक्ततावच्छेदकभेदोऽत आह—धुटः परादित्वमिति। श्चोततिरुपदेशे सादिः। श्चुत्वस्य धुटि सिद्धत्वेऽपि तुक्यसिद्धत्वात्सन्-श्चोततीत्यत्र तुग्नेति बोध्यम्।

षष्ठीं कल्पयतीति। न च "शि" इति सप्तमीनिर्देशो लाघवार्थः। द्वयोरचरितार्थत्वे लाघवेनान्यविभक्त्युच्चारणं युक्तं न त्वन्यथेत्याशयात्। धुडेवास्त्विति। शीति च पष्ठ्यर्थं-

---

अतस्तस्यागमत्वमेव। एवञ्चागमित्वं डकारस्य सकारस्य वेति सन्देहे "उभयनिर्देशे" इत्यादिना सस्यागमित्वनिर्णयः कृतः। तत्र "डः" इत्यस्य पञ्चम्यन्तत्वे पूर्वोक्तः सन्देहो-भवति, यदि डः इति षष्ठ्यन्तन्तदा न सन्देहः, परन्तु धुडागम एव चेत् क्रियते तदा डकारात्पूर्वः स स्यादितीष्टरूपासिद्धिरित्याशयेन "धुगितिकृत्वा डकारस्यागमित्व निर्णयाय सूत्रानुपूर्वी व्यत्यासङ्कृत्वाशङ्कते नन्वित्यादिना।

---

पर सोलह रूप बनते हैं। "खयः शरः" से सकार को द्वित्व होने पर बत्तीस। यदि कहो कि चर्त्व असिद्ध हो जाने से खय् से परे शर् नहीं मिलेगा तो नहीं द्वित्व भिन्न में पूर्वत्रासिद्धम् होता है।

यदि कहो कि "शरोचि" करके द्वित्व निषेध हो जायगा, तो नहीं सूत्र से जो द्वित्व प्राप्त है उसको निषेध करता है, यहाँ पर तो वार्तिक से द्वित्व प्राप्त है, अतएव "शरः खयः" इस वार्तिक का उदाहरण 'वत्सः' अप्सराः भाष्यकार दिये।

यदि कहो कि 'धुक् डः सि' यही सूत्र करना चाहिये। सप्तमी यथा श्रुत है, जैसे "ङः सि धुट्" इस सूत्र में उसी प्रकार "ङः सि धुक्" इस सूत्र में। "ङः सि धुट्" में ङ पञ्चम्यन्त है "ङः सि धुक्" में षष्ठ्यन्त रहेगा। वास्तविक वाक्य में शक्ति स्वीकार करने पर पूर्वान्तत्व में अथवा परादित्व में वाक्यानुपूर्वी भेदाभाव है तो नहीं कह सकते क्योंकि धुट् परादि होने से षट्त्सन्तः यहाँ पर "न पदान्तात्" से ष्टुत्व निषेध होता है। अतः "शि तुक्" से होने वाला तुक् यहाँपर नहीं किया गया। जो कहते हैं कि प्रक्रियालाघव होने से तुट् कहना चाहिये, वह ठीक नहीं "चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्" से पक्ष में थकार होने लग जायगा। यदि कहो कि 'श्चोतति' उपदेश में दन्त्यसकारादि है, तथा च 'अट्श्चोतति' यहाँ पर धुट् कर्तव्यता में श्चुत्व असिद्ध हो जायगा तो नहीं कह सकते, "श्चुत्वं धुटि सिद्धं वाच्यम्" अर्थात् धुट् कर्तव्यता में श्चुत्व सिद्ध रहता है। श्चुत्व-कर्तव्यता में सिद्ध रहने पर भी तुक् कर्तव्यता में असिद्ध हो जाता है, अतः "सन्श्चोतति" में तुक् नहीं होता। "शितुक्" ( ८।३।३१ ) इस सूत्र में शि सप्तम्यन्त है."नश्च" ( ८।३।३० ) इस सूत्र में

नन्वेवं कुर्वञ्च्छोते इत्यत्र "पदान्तस्य" ( पा० सू० ८।४।३७ ) इति णत्वनिषेधो न स्यादिति चेन्न । कार्यकालपक्षे बहिरङ्गत्वेन तुकोऽसिद्धत्वात् । यथोद्देशपक्षे "स्तोः श्चुना" इति योगो विभज्यते 'न' इति वर्तते 'णः' इति च । स्तोः श्चुना योगे णत्वं न स्यात् । नकारार्थमिदम् । सकारग्रहणं वर्गग्रहणं चोत्तरार्थम् । ततः "श्चुः" इति पूर्वमनुवर्तते । एवं "नश्च" ( पा० सू० ८।३।३७ ) इति सूत्रे कुर्वन्त्सीदतीत्यत्र "पदान्तस्य" ( पा० सू० ८।४।३७ ) इति णत्वप्रतिषेधो धुटः परादित्वे प्रयोजनमिति प्राचां ग्रन्थोऽपि यथोद्देशपक्षे बोध्यः ।

यत्तु वदन्ति–इदं प्रयोजनं बहिरङ्गपरिभाषया गतार्थत्वात्प्रत्युक्तमिति । तत्पाक्षिकम् । त्रिपादीस्थेऽन्तरङ्गे बहिरङ्गपरिभाषेयं न प्रवर्तते इति सुद्ध्युपास्यइत्युदाहरणे स्वोक्त्या सह विरुद्धं चेत्यास्तां तावत् । सञ्च्छम्भुरिति । इह श्चुत्वतुकोरसिद्धतामाश्रित्य "नश्छवि" ( पा० सू० ८।३।७ ) इति रुत्वं न शङ्क्यम् । छत्वस्यासिद्धत्वात् ।

---

इति भावः विरप्शमिति । छान्दसार्थमपि बहुशः सूत्रकृतो यत्नदर्शनादिति भावः । णत्वं न स्यादिति । एतद्दृष्ट्या श्चुत्वस्यासिद्धत्वं तु न, वचनसामर्थ्यादिति भावः । त्रिपाद्यां सर्वथा परिभाषाऽप्रवृत्तौ पक्षद्वयेऽपीदमेव समाधानम् । यथोद्देशपक्षे इति । कार्यकाले तु असिद्धत्वान्न दोषः पूर्वान्तत्वेऽपीति भावः ।

---

ननु विरप्शम् इत्यस्य छान्दसत्वात् तत्र वर्णव्यत्ययेनाप्युपपत्तौ तदर्थं पदान्तादित्यनुवृत्तिपरिक्लेशो व्यर्थ इत्यत आह छान्दसार्थमपीति । सत्यामुपपत्तौ बाहुलकाश्रयणमयुक्तमित्याशयः ।

असिद्धत्वन्तु नेति । सम्प्रतिप्राप्तमसिद्धत्वन्नेत्यर्थः । पक्ष द्वये इति । यथोद्देशकार्यकालभेदेन पक्षद्वये । इदमेवेति । अत्रैवकारेण यत्तु वदन्तीत्यादिना यदभिहितन्तन्नयुक्तमित्यभिहितम् । असिद्धत्वादिति । असिद्धं बहिरङ्गमित्यनेनेतिभावः ।

---

चरितार्थ पञ्चमी यहाँ षष्ठी हो जाती है। अतः इसका अर्थ होता है, पदान्त नकार को तुक् का आगम विकल्प से होता है शकार परे रहते। यदि कहो कि ङः सि धुट् की तरह शि यह सप्तमी निर्देश लाघवार्थ है तो नहीं कह सकते, दोनों विभक्तियों को अर्थात् पञ्चमी सप्तमी को अचरितार्थ रहने पर "उभयनिर्देशे पञ्चमी निर्देशो बलवान्" इस न्याय की प्रवृत्ति होती है, तथा लाघव होने से षष्ठ्यर्थ में सप्तमी होती है, अन्यथा नहीं। यहाँ पर पञ्चमी चरितार्थ है तथा च लाघवार्थ सप्तमी नहीं है।

यदि कहो कि प्रकरण प्राप्त धुट् का ही आगम कीजिये, तुक् करने की क्या आवश्यकता तो नहीं कह सकते। क्योंकि "शश्छोटि" ( ८।४।६३ ) इसका अर्थ है, पदान्त झय् से परे जो शकार उसको छकार होता है, यह कैयट ने लिखा है। तथा च धुट् परादि होने से 'सञ्च् छम्भुः' यहाँ पर छकार नहीं होगा। जिस प्रकार विपूर्वक रप् धातु से औणादिक श प्रत्यय करने पर "विरप्शम्" में छ नहीं होता, उसी प्रकार छत्व नहीं होगा। यदि कहा जाय कि छान्दसत्वात् छकार नहीं होगा तो अनुपयुक्त है, क्योंकि छान्दस प्रयोगों में भी सूत्रकार ने बहुत यत्न किया है। इसलिए पूर्वान्त तुक् किया गया। यदि कहो कि 'कुर्वञ्श्शेते' यहाँ पर "पदान्तस्य" करके णत्व का निषेध नहीं होगा, तुक् अन्त में होने से, तो नहीं कह सकते। कार्यकाल पक्ष में बहिरङ्ग तुक् असिद्ध हो जाने से। यथोद्देश पक्ष में "स्तोः श्चुना" यह योग विभाग करके न का अनुवर्तन करते हैं।

"ङमो ह्रस्वात्" (पा० सू० ८।३।३२) ङम्। प्रत्याहारः। सञ्ज्ञायां च कृतं-टित्वं सामर्थ्यात् संज्ञिभिः सम्बद्ध्यते। तेन यथासंख्यं ङुट्–णुट् नुटः प्रवर्तन्ते। नित्यग्रहणं विस्पष्टार्थम्। "हे मपरे" (पा० सू० ८।३।२६) इति "मय उञो वो-वा" (पा० सू० ८।३।३३) इति च विकल्पद्वयस्य मद्ध्ये पाठादेव नित्यत्वलाभात्। सुगण्णीश इति। ण्यल्लोपौ न स्थानिवत्पूर्वत्रासिद्धे तन्निषेधात्। ङमुटः परादित्वं-कुर्वन्नास्ते इत्यत्र णत्वप्रतिषेधार्थम्। अत एव ङमो ह्रस्वादचि द्वे इति नासूत्रि। परं णत्वं प्रति पूर्वस्य सिद्धतया णत्वापत्तेरिति प्राञ्चः।

---

सञ्ज्ञायाम्—ङमिति प्रत्याहाररूपायाम्। विकल्पद्वयस्य मद्ध्ये इति। 'विभाषामध्ये च ये विधयस्ते नित्या' इति "पूङः क्त्वा च" (पा० सू० १।२।२२) इति सूत्रे भाष्योक्तेरिति भावः। न च तन्मध्ये पाठेन नित्यत्वकल्पने तन्मध्यपतितानां "नपरे नः" (पा० सू० ८।३।२७) इत्यादीनामपि नित्यत्वापत्तिः। स्वरितत्वबलादनुवृत्तस्य पुनर्वाग्रहणान्निवृत्तौ कल्प्यमानायां स्वानन्तर एव तत्कल्पनेनोपपत्तावन्यत्र तत्कल्पने मानाभावात्। तस्मादु-त्तरत्र वाग्रहणसामर्थ्यात्पूर्वसूत्रे एव वाग्रहणस्य निवृत्तिरिति भावः। तन्निषेधादिति। "तस्य

---

ननु मनोरमाकारस्य तत्र चेति वक्तव्यम् सञ्ज्ञायामितिभ्रामकमनन्वितार्थकस्मात आह ङमितिप्रत्याहार रूपायाम्।

न च ङमुट् इत्यत्र टित्वम् दृश्यते तत्रोकारान्तस्य टित्वन्नतु संज्ञाया इति सञ्ज्ञाया-मिति मूलमसङ्गतमिति वाच्यम् उकारस्योच्चारणार्थत्वात्।

---

'स्तोः श्चुना योगे णत्वं न स्यात्'। अर्थात् दन्त्य सकार तवर्ग को तालव्य शकार चवर्ग का योग रहने पर णत्व नहीं होता। यदि कहो कि पूर्वयोग की दृष्टि से पर त्रिपादी "श्चुः" असिद्ध हो जायगा तथा च 'कुर्वञ्शेते' में श्चुत्व असिद्ध होने से णत्व निषेध नहीं होगा, यह नहीं कह सकते, वचन सामर्थ्य से असिद्ध नहीं होगा। त्रिपादी में सर्वथा अर्थात् यथोद्देश या कार्यकालपक्ष में "असिद्धं-बहिरङ्गमन्तरङ्गे" इस परिभाषा की अप्रवृत्ति होने से पक्षद्वय में यही समाधान है। योग विभाग करके न का अनुवर्तन करके "स्तोःश्चुना योगे णत्वं न" अर्थात् दन्त्यसकार तवर्ग को तालव्य शकार चवर्ग का योग रहने पर णत्व नहीं होता यह अर्थ करते हैं। योगविभाग कर के नकार णकार का अनुवर्तन नकार करने के वास्ते हैं। सकार ग्रहण और वर्ग ग्रहण का फल उत्तर सूत्र में है। पश्चात् "श्चुः" सूत्र का पाठ होगा, इसमें "स्तोः श्चुना" का अनुवर्तन होगा। "नश्च" सूत्र से "धुट्" आगम करने का फल है। 'कुर्वन्सीदति' में "पदान्तस्य" से णत्व प्रतिषेध। यह प्राचीनों का कथन यथोद्देशपक्ष विषयक है। कार्यकाल पक्ष में पूर्वान्तत्व रहने पर भी अर्थात् धुक् का आगम करने पर भी असिद्ध हो जाने से दोष नहीं।

जो कहते हैं कि "कुर्वन्त्सीदति" यहाँ पर "नश्च" सूत्र से धुक् का आगम करने पर, पूर्वान्त रहने पर भी णत्व प्रतिषेध हो जायगा। अन्तरङ्ग परिभाषा के बल से। अन्तरङ्ग "पदान्तस्य" होगा "नश्च" बहिरङ्ग होगा। अतः धुट् आगम का फल णत्व प्रतिषेध नहीं। इन विद्वानों का कथन पाक्षिक है, अर्थात् कार्यकाल पक्ष विषयक है। और त्रिपादीस्थ अन्तरङ्ग करने पर बहिरङ्ग परिभाषा नहीं लगती इस स्वोक्ति से भी विपरीत है, जो आपने "सुद्ध्युपास्यः" पर कही है। यदि कहो कि "सञ्च्छम्भुः" यहाँ पर श्चुत्व और तुक् असिद्ध हो जाने पर "नश्छवि" (८।३।७) से रुत्व हो तो नहीं कह सकते छत्व असिद्ध हो जाने से।

यत्त्वाहुः—बहिरङ्गपरिभाषया गतार्थत्वादुभयमप्यसङ्गतमिति । तदपि पाक्षिकम् । राज्ञ इत्यत्रेव यथोद्देशे त्रैपादिकेऽन्तरङ्गपरिभाषाविरहस्योक्तत्वेन प्राचां ग्रन्थस्य सौष्ठवात् । कथमन्यथा द्वियं त्रियं च स्वयमेवोक्तमिति दिक् ।

---

दोषः" इत्यस्य तु न प्राप्तिः । लत्वसाहचर्येणादेशणत्वस्यैव ग्रहणात् । पञ्चमीसमासस्या नित्यत्वाच्चेत्यपि बोध्यम् । परादित्वमिति । ततः परस्याच इति व्याख्यानेनेत्यर्थः । ङम इत्यस्य षष्ठ्यन्तत्वमाश्रित्य ङमन्तपदावयवस्य ह्रस्वात्परस्य ङमो ङमुडजादौ पदे इत्यर्थेन पूर्वादित्वमेव कुतो न कृतम् । "पदस्य" ( पा० सू० ८।१।१६ ) इति च "मादुपधायाः" ( पा० सू० ८।२।९ ) इत्यादाविवावयवषष्ठी । अजादौ पदे इत्युक्तेर्म्नां अभ्यासे इत्यतः शतरि मनन्नित्यादावनन्त्यस्य नेति भावः । बहिरङ्गपरिभाषयेति । नुटो बहिरङ्गतयाऽसिद्धत्वादित्यर्थः । उभयम्—ङमुटः परादित्वं द्वे इति सूत्राकरणं च । पाक्षिकम्—कार्यकालसम्बन्धि । दिगिति । दिगर्थस्तु तत्परिभाषायाख्रिपाद्यामभाव एव । किं च यदि 'यदागमा' इति न्यायेनागमानामागमिधर्मवैशिष्ट्यमपि बोद्ध्यते इति तेन नकाराद्यवयवनस्यापि पदान्तत्वाण्णत्वनिषेधसिद्धिरित्युच्यते; तर्हि ह्रस्वात्परस्य ङमन्तपदस्याचि परे ङमुडित्येवार्थस्तथासति स्यान्न प्रागुक्तः, स्याच्चातिमहदनिष्टमिति । स्पष्टं चेदं सर्वं भाष्ये ।

---

यदागन्यायेनेति । यमुदिश्यागमो विहितस्तन्निष्ठोद्देश्यतानिरूपित विधेयताश्रयः तद्विशिष्टः तद्ग्रहणेन गृह्यते इत्यर्थकं "यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते" इति-परिभाषाबलेन आगमाः आगमिधर्मविशिष्टाः भवन्ति । अतएव "ङमोह्रस्वादचि ङमुण्नित्यम् ८।३।३२ इति सूत्रे भाष्यकारेणोक्तम् "पदान्तभक्तः पदान्तग्रहणेन ग्राहिष्यन्ते ।

---

लक्ष्य में टित्वात् आद्यावयव होना ही टित् आगम् का फल है । किन्तु "ङमोह्रस्वादचिङमुण्नित्यम्" इस सूत्र में ङम् प्रत्याहाररूपा सञ्ज्ञा में किया हुआ टित्व व्यर्थ है, तत्सामर्थ्य से टित् का सम्बन्ध सञ्ज्ञी जो ङ् ण् न् है, इनमें हो जायगा अर्थात् ङुट् णुट् नुट् का आगम होगा । तथा च ङकार णकार नकार को यथाक्रम ङुट् णुट् नुट् होगा । इस सूत्र में नित्यग्रहण स्पष्टार्थ है, "हे मपरे" ( ८।३।२६ ) "मय उ ञो वो वा" इन विकल्पद्वय के मध्य में पाठ से ही नित्यत्व लाभ होने से । "पूङः क्त्वा च" ( १।२।२२ ) इस सूत्रपर भाष्यकार ने लिखा है, विभाषाओं के मध्य में जो विधि सूत्र हैं, वे नित्यत्वेन प्रवृत्त होते हैं । यदि कहो कि विभाषाओं के मध्य में पाठ होने से नित्यत्व की कल्पना होती हैं, तो "नपरे नः" ( ८।३।२७ ) इस सूत्र से भी नित्य ही मकार को नकार होना चाहिये तो नहीं कह सकते, क्योंकि स्वरितत्व प्रतिज्ञा के बल से अनुवृत्त वा ग्रहण की निवृत्ति की कल्पना पुनर्वाग्रहण सामर्थ्य से स्वाव्यवहित पूर्व सूत्र में ही होगी, तथा च "मय उञो वो वा" ( ८।३।३३ ) इससे अव्यवहित पूर्व "ङमो ह्रस्वादचिङमुण्नित्यम्" ( ८।३।३२ ) इसमें वा अनुवृत्ति नहीं होगी, "नपरे नः" ( ८।३।२७ ) इसमें तो वा ग्रहण की अनुवृत्ति होगी । इसका भाव है । उत्तर में वा ग्रहण सामर्थ्य से पूर्व सूत्र में ही वा ग्रहण की निवृत्ति होगी ।

यदि कहो कि सुगण्णीशः यहाँ पर णिलोप अल्लोप का स्थानिवद्भाव हो जाने पर ङमन्त पद नहीं मिलेगा तो नहीं कह सकते, त्रिपादीस्थ कार्य करने में स्थानिवद्भाव का अभाव होने से । "तस्य दोषः" इत्यादि प्रतिप्रसव वार्त्तिक की तो प्राप्ति नहीं है, क्योंकि लत्व के साहचर्य से आदेशभूत णकार रहने पर ही "पूर्वत्रासिद्धे न स्थानिवत्" इसका बाध "तस्य दोषः" से होता है । अथवा पूर्वस्माद्विधिः "पूर्वविधि" यह पञ्चमी समास होने से स्थानिवद्भाव नहीं होगा । ह्रस्व से परे जो ङम् तदन्त जो पद उससे परे जो अच् उसको ङुट् णुट् नुट् का आगम होने से कुर्वन्नास्ते यहाँ

ननु परमदण्डिनावित्यादौ अन्तर्वर्तिविभक्त्या पदत्वान्नुट् स्यादिति चेन्न। "उत्तरपदत्वे चापदादिविधौ" इति प्रत्ययलक्षणप्रतिषेधात्। अत एव परमवाचौ, परमगोदुहौ, परमलिहावित्यादौ कुत्वघत्वढत्वादीनि न।

यत्तु प्राचा "ञ्जि च पदे" ( पा० सू० ८।३।२१ ) इत्यतः "पदे" इत्यनुवर्त्या-जादेः पदस्येति व्याख्यानाद् ङमुण् नेत्युक्तं, तदनेन प्रत्युक्तम्। इहैव नलोपं वारयितुमुक्तरीतेरेव तेनाप्यनुसर्तव्यत्वात्॥

---

प्रत्ययलक्षणप्रतिषेधादिति। इदं च प्रकृतसूत्रे भाष्ये स्पष्टम्। अनुसर्तव्यत्वादिति। यदि तु स निषेधः "अपदादिविधौ" इति पर्युदासेन पदान्तत्वनिमित्तके विधावेवेति "न लुमता-" (पा० सू० १।१।६३) इति सूत्रे भाष्ये स्पष्टम्। किं चोत्तरपदस्य कार्यित्वे एव तत्प्रवृत्तिरत एव माषकुम्भवापेनेत्यादौ "पदव्यवायेऽपि" ( पा० सू० ८।४।३८ ) इति निषेधसिद्धिरित्युच्यते; तदा प्राचीनोक्तमजादेः पदस्येति व्याख्यानमेव शरणम्। स्पष्टं चैवं व्याख्यानं प्रकृतसूत्रे "ञ्जि च पदे" ( पा०सू० ८।३।२१ ) इत्यत्र च भाष्ये। तेन निषेधेन सिद्धमिति प्रकृतसूत्रभाष्योक्तिस्त्वेकदेशिन इत्यास्तां तावत्।

---

उत्तरपदत्वे इति। तत्रोत्तरेति लुप्तषष्ठीकं पदं पदत्वे इत्यस्य पदत्वप्रयुक्ते कार्ये, इत्यर्थः, उत्तरेत्यस्योत्तरपदे लक्षणा च एवञ्च पदादिविधिभिन्ने यस्य कस्यचित् पदत्वप्रयुक्ते कार्ये कर्त्तव्ये उत्तरपदस्य प्रत्ययलक्षणन्नेत्यर्थः। परमदण्डिनेत्यत्र पदत्वप्रयुक्ते ङमुटि कर्त्तव्ये दण्डिन्नित्यस्य न पदत्वम्। अतएव भाष्ये ङमुटमाशक्यानेनैव न्यायेन समाहितम्। तेन निषेधेन सिद्धिरित्यादिनेति भट्टोजिदीक्षिताः। नव्यास्तु उत्तरपदस्य पदादिविधिभिन्ने पदत्वप्रयुक्ते कार्ये कर्त्तव्ये प्रत्यासत्त्योत्तरस्य प्रत्ययलक्षणं नेत्यर्थः। अतएव माषकुम्भवापेनेत्यत्रोत्तरपदस्य कार्यित्वाभावेन निषेधाप्राप्त्या प्रत्ययलक्षणेन पदत्वे पदव्यवायेऽपीति निषेधान्न णत्वम्। एवञ्चपरमदण्डिनावित्यत्रोत्तरपदस्य कार्यित्वाभावेनैतन्निषेधाप्राप्त्या

---

परादि होने के कारण "पदान्तस्य" करके प्रथम नकार को णकार का प्रतिषेध हो जाता है। ङम् इसको षष्ठ्यन्त मानकर ह्रस्व से परे ङमन्त पदावयव ङम् को ङमुट् होता है, अजादि पद परे रहते, इस पक्ष में पदस्य का जो अधिकार आता है, उसमें विभक्ति विपरिणाम नहीं करना पड़ेगा यह लाघव होता है। 'पदस्य' में "मादुपधायाः" ( ८।२।९ ) की तरह अवयव षष्ठी है। अजादि पद कहने से शतृ प्रत्ययान्त जो मनन् शब्द है, इसमें अजादिपदाभाव होने से मन् अन् इस स्थित में नुट् नहीं होता। अतः पूर्वादिङमुट् हों, इसका समाधान करने के अभिप्राय से मनोरमाकार ने लिखा ङमुट् परादि है, कुर्वन्नास्ते में णत्वप्रतिषेधार्थ है। कुर्वन्नास्ते यहाँ पर णत्व प्रतिषेध आवश्यक होने के कारण ही "ङमोह्रस्वादचि द्वे" यह सूत्र नहीं किया, क्योंकि पर त्रिपादीणत्वविधायक शास्त्र की दृष्टि में पूर्व त्रिपादी ङमुट् विधायकशास्त्र असिद्ध नहीं होगा, तथा च णत्व होने लगेगा, अतः उक्त दोष वारणार्थ "ङमो ह्रस्वादचि द्वे" सूत्र नहीं किया गया।

जो यह कहते हैं कि अन्तरङ्ग णत्व की दृष्टि में बहिरङ्गङमुट् असिद्ध हो जाने से ङमुट् को परादि मानना तथा "ङमोह्रस्वादचि द्वे" इस सूत्र को बनाना, यह दोनों असङ्गत है। तो उनका कहना ठीक नहीं, क्योंकि यह समाधान कार्यकालपक्ष सम्बन्धी है। यथोद्देशपक्ष में जैसे "राज्ञः" यहाँ पर "वाह ऊठ्" से ज्ञापित पाठी "असिद्धं बहिरङ्गमन्तरङ्गे" "परिभाषा त्रैपादिक अन्तरङ्ग श्चुत्व कर्तव्य रहने पर परिभाषा के प्रति श्चुत्व अन्तरङ्ग असिद्ध होने से श्चुत्व का अभाव होने के कारण श्चुत्व के विषय में अन्तरङ्ग परिभाषा नहीं प्रवृत्त होती, श्चुत्व कर्तव्यता में बहिरङ्ग भी अल्लोप असिद्ध

प्रासङ्गमुट्वारणार्थं प्राचोक्तमुक्तिच पदे इत्यतः पद इत्यनुवर्त्य व्याख्यानमाश्रयणीयम् । अजादिपद इत्यादि, तथा च औ इत्यस्य पदत्वाभावान्न ङमुडित्याहुः । अत्र केचित् । पूर्वो-दण्डी प्रियो यस्येति त्रिपदे बहुव्रीहौ, निष्पन्नपूर्वदण्डिन् प्रियइत्यत्र दण्डिन्नित्यस्योत्तर-पदत्वरूपत्वादनेन प्रत्ययलक्षणनिषेधे पदत्वाभावान्नलोपो न स्यात्तदर्थं मध्यमपदत्वाना-क्रान्तोत्तरपदस्य वक्तव्यतया तद्घटकमध्यमत्वस्य च स्वघटकावधिकपूर्वत्वस्वघटका-वधिकोत्तरत्वस्वघटकत्वैतत्त्रितयसम्बन्धेन वृत्तिविशिष्टरूपेण स्वीकर्तव्यतया पूर्वदण्डिप्रिय-इत्यत्र दण्डिन्नित्यस्य बहुव्रीहिवृत्तिवैशिष्टयस्य सत्वेन यथादोषावकाशस्तथैव मापकुम्भ-वापेनेत्यत्रापि वृत्तिवैशिष्ट्यस्योत्तरवृत्तिमादाय सत्वेनानेन निषेधाप्राप्तौ व्यर्थकार्यित्व निवेश इति तदपरे न क्षमन्ते पूर्वोक्तमध्यमपदत्वस्वीकारे प्रत्यङ्चासौ अग्निश्च तस्य स्फुलिङ्ग इति कर्मधारयगर्भतत्पुरुषनिष्पन्न'प्रत्यङग्निस्फुलिङ्ग' इत्यत्राग्नीत्यस्य मध्यम-पदत्वस्य सत्वेन तदनाक्रान्तत्वाभावान्निषेधाप्राप्त्या प्रत्ययलक्षणेन पदत्वसत्वात् ङमुडा-पत्तेर्दुर्वारतया तद्वारणार्थं स्वारम्भकसुबन्ताव्यवहितपूर्वत्वस्वारम्भकसुबन्ताव्यवहितो-त्तरत्वस्वारम्भकत्वैतत्त्रितयसम्बन्धेन वृत्तिवैशिष्ट्यस्यैव ग्राह्यतया 'प्रत्यङग्निस्फुलिङ्ग'-इत्यत्र कर्मधारयवृत्तिग्रहस्वारम्भकसुबन्तावधिकोत्तरत्वेऽपि तदव्यवहितपूर्वत्वाभावेन तदनाक्रान्तस्य सत्वात् प्रत्ययलक्षणनिषेधो यथा तथैव माषकुम्भवापेनेत्यत्रापि पूर्वोक्त-सरण्यां कुम्भेत्यस्य मध्यमपदत्वानाक्रान्तत्वेनानेन पदत्वनिषेधस्य दुर्वारतया तत्रपदत्व-सम्पत्तये कार्यित्वनिवेशस्य गले पतितत्वात् । अत्रोत्तरपदत्वं यदि समासचरमावयवरूपं तर्हि अत्रेरपत्यानीति विग्रहे "इतश्चानिञः" इत्यनेन विहितस्य ढको "अत्रिभृग्विति लुकि ततो जसि गुणेऽत्रे अस् इत्यवस्थायाम्" "एङः पदान्तादति" इति पूर्वरूपापत्तिः । समास-चरमावयवत्वाभावेनोत्तरपदत्वाभावादेतन्निषेधाप्रवृत्त्या प्रत्ययलक्षणेन पदत्वस्य दुर्वारत्वात् ।

न चैङः पदान्तादतीत्यत्रैङः पदेऽतीति न्यासः कार्यः, अकारादौ पदे इति च तदर्थः एवञ्च प्रकृते जसः पदत्वाभावान्न तत्प्राप्तिरिति वाच्यम् पचतु भवतु इति यस्यां क्रियायां-पचतु भवतुः क्रियात्राख्यातमाख्यातेनेति समासे ततः आचारक्विबन्तात्लटि शपि गुणे

---

नहीं होता श्चुत्व हो जाने पर 'राज्ञः' प्रयोग बनता है, उसी प्रकार यहाँ पर भी यथोद्देशपक्ष-में त्रैपादिक अन्तरङ्ग में बहिरङ्गपरिभाषा की प्रवृत्ति नहीं होगी, अतः प्राचीनों ने अर्थात् काशिका-कारादि ने जो ङमुट् को परादि कहा है वह उचित है । त्रैपादिक अन्तरङ्ग में बहिरङ्ग परिभाषा की प्रवृत्ति हो तो त्रैपादिक अन्तरङ्ग करने में बहिरङ्ग यण् असिद्ध हो जायगा, द्वित्व नहीं होगा । आपने ने जो दो यकारक तीन यकारक रूप बनाया है, वह तभी बन सकता है जब त्रैपादिक अन्तरङ्ग में बहिरङ्ग परिभाषा का अभाव हो ।

दिक् का भाव शब्दरत्नकार लिखते हैं । अन्तरङ्ग परिभाषा का त्रिपादी में अभाव होता है । और भी "यमुद्दिश्यागमोविहितस्तन्निष्ठोद्देश्यतानिरूपितविधेयताश्रयः तद्विशिष्टस्तद्ग्रहणेन गृह्यते ।" जैसे कुर्वन्नास्ते" यहाँ पर नकार को उद्देश करके नुट् का विधान करते हैं, अतः नकार निष्ठ उद्देश्यता नुट् में रहेगी, तदाश्रय नुट् होगा, नुट् विशिष्ट नकार ग्रहण से गृहीत हो जायगा । इत्यर्थक यदागम न्याय से आगम में आगामी ( नकार ) के धर्म का सम्बन्ध हो जाने से नकार के आधवयव नकार में भी पदान्तत्व आ जाने से णत्व निषेध हो जायगा, अतः ह्रस्व से परे जो ङमन्त पद तदवयव जो ङम् उसको ङमुट् होता है, अच् परे रहते, यही अर्थ होना चाहिये, ह्रस्व से परे जो ङम् तदन्त जो

'एङः पदान्तादतीति' पूर्वरूपे पचतु भवतोऽति इष्टस्य रूपस्याकारादिपदाभावेन पररूपाप्रवृत्याऽसिद्धया तादृशन्यासस्यापाणिनीयत्वेन वक्तुमशक्यत्वात्। यदि च वृत्तिघटकावधिकपूर्वत्वाभावत्वेनात्रेय इत्यस्योत्तरपदत्वम्, माषकुम्भवापेनेत्यत्रोत्तरवृत्तिमादाय वृत्तिघटकावधिकपूर्वत्वस्यैव सत्वादेतन्न्यायाप्राप्त्या तदर्थंकार्यित्वनिवेशः पूर्वदण्डिप्रियइत्यर्थं मध्यमपदत्वानाक्रान्तेति निवेशश्च न कर्तव्यो भवतीति च सिध्यति कर्मधारयपूर्वषष्ठीतत्पुरुषनिष्पन्नप्रत्यग्निस्फुलिङ्ग इत्यत्र ङमुडभावः। तथापि परमलोम्निचर इत्यत्रोत्तरपदत्वाभावेन निषेधाप्राप्त्या प्रत्ययलक्षणेन पदत्वे न लोपः प्राप्तो दुर्द्धर एव स्यात् न च ङौ परे "यचिभमित्यनेन पदत्वबाधान्नदोष इति वाच्यम् यकारादावजादौ चासर्वनामस्थानपरतः प्रत्यासत्त्या तत्प्रकृतेर्भत्वविधानेन ङौपरे परमलोम्नि भत्वेऽपि "अपवादो यद्यन्यत्र चरितार्थं" इति न्यायेन तद्घटकलोम्नः प्रत्ययलक्षणेन पदत्वस्य दुर्वारत्वात्, एतदर्थं यद्वृत्तिघटकसुपः प्रत्ययलक्षणं चिकीर्षितं तद्वृत्तिघटकावधिकपूर्वत्वाभाववत्वमित्युच्यते, परमलोम्निचर इत्यत्र च परमञ्च तल्लोम चेति वृत्तिघटकसुपः प्रत्ययलक्षणं चिकीर्षितंतद्वृत्तिघटकावधिकपूर्वत्वाभाववत्वस्य लोम्नि सत्वेन न दोषः। तदा कार्यित्वनिवेशेमध्यमपदत्वानाक्रान्तेति विशेषणञ्च देयमेव। माषकुम्भवापेन पूर्वदण्डिप्रिय इत्यादौ पूर्ववृत्तिमादाय कुम्भेत्यस्य दण्डिन्नित्यस्य चोत्तरपदत्वसत्वात्।

न चैवमपि पञ्चगावो धनं यस्येति त्रिपदे बहुव्रीहौ, गो इत्यस्य वृत्तिघटकटजकारावधिकपूर्वत्वेनोत्तरपदत्वाभावान्निषेधाप्राप्तौ प्रत्ययलक्षणेन पदत्वे टजकारेण पूर्वरूपापत्तिस्तदर्थं पूर्वदण्डिप्रिय इत्यत्र तत्पुरुषवृत्तिमादायाप्राप्तनलोपप्राप्त्यर्थमेवं परमराजपुरुषइत्यत्र नलोपप्राप्त्यर्थश्चवृत्तिघटकप्रत्ययेतरतदवधिकपूर्वत्वाभावत्वमित्यभ्युपेयते पञ्चगवधनइत्यत्र वृत्तिघटकप्रत्ययेतरो टजकारो न भवितुमर्हतीति किन्तु कश्चिदुदासीनस्तदवधिकपूर्वत्वाभावस्य गो इत्यत्र सत्वेनोत्तरपदत्वादनेन निषेध पदत्वाभावान्न पूर्वरूपम्। एवंपूर्वदण्डिप्रिय इत्यत्र वृत्तिघटकप्रत्ययेतरप्रियशब्दावधिकपूर्वत्वादेतन्निषेधाप्राप्त्या प्रत्ययलक्षणेन पदत्वान्नलोपसिद्धिः। एवं परमराजपुरुष इत्यत्रापीति स्थिते माषकुम्भवापेनेत्यत्र कुम्भेत्यस्य वृत्तिघटकप्रत्ययेतरवापशब्दावधिकपूर्वत्वादुत्तरपदत्वाभावेन तदर्थं कार्यित्वनिवेशः पूर्वदण्डिप्रिय इत्याद्यर्थं मध्यमपदत्वानाक्रान्तेति निवेशश्च न कार्यः इति वाच्यम्। पूर्वोदण्डिर्यस्य पूर्वदण्डीत्यत्र दण्डी, इत्यस्योत्तरपदत्वापत्त्या न लोपानापत्तेः।

पद उससे परे जो अच् उसको ङुट् णुट् नुट् का आगम होता है, यह अथ नहीं करना चाहिये। यदि कहो तो नहीं कारण अव्याप्ति अतिव्याप्ति दोष हो जायगा, 'प्रत्यङ्ङात्मा' यहाँ पर ह्रस्व से परे ङमन्त पद नहीं है। अतः लक्ष्य में लक्षण न घटने से अव्याप्ति दोष होगा। अस्ति पराङात्मा, देवदत्त ! रामानिति यहाँ पर ह्रस्व से परे ङमन्त पद पराङ् हो जायगा, रामान् हो जायगा, तथा च लक्ष्य का अतिक्रमण करके अलक्ष्य में लक्षण जाने से अतिव्याप्तिदोष हो जायगा। अतः लक्ष्यानुरोध से मूलोक्त अर्थ ही करना उचित है, सम्पूर्ण यह भाष्य में स्पष्ट है।

ननु ह्रस्व से परे जो ङम् तदन्त जो पद उससे परे जो—अच् उसको ङुट्, णुट, नुट् का आगम होता है। इस मूलोक्त अर्थ में भी परमदण्डिनौ यहाँपर "प्रत्ययलोपे प्रत्ययलक्षणम्" से अन्तर्वर्तिनी विभक्ति आ जाने से पदसञ्ज्ञा हो जाने पर नुट् हो तो नहीं कह सकते, "उत्तरपदत्वे च पदादिविधौ" इससे प्रत्ययलक्षण निषेध हो जायगा। 'उत्तरपदत्वे' घटक उत्तर लुप्त षष्ठ्यन्त है, उसकी

न च वृत्तिविशिष्टाव्यवहितपूर्वत्वाभाववत्त्वम् "वैशिष्ट्यञ्च स्वघटकत्वस्वघटकोद्देश्यकप्रत्ययेतरत्वैतदुभयसम्बन्धेनेति लक्षणस्वीकारेण तत्र तादृशप्रत्ययेतराव्यवहितपूर्वत्वेन पदत्वान्नलोपः स्यादिति वाच्यम् "नः क्ये" इति सूत्रस्थभाष्यासङ्गत्यापत्तेः भाष्यकृता "न क्ये:" इत्यस्य नियमार्थत्वमुक्तमेतादृशोत्तरपदत्वस्वीकारे राजयतीत्यत्र राजन् इत्यस्य उत्तरपदत्वेन प्रत्ययलक्षणनिषेधात्तस्य विध्यर्थत्वं स्यात्। अतो द्वितीयसम्बन्धस्थाने स्वघटकनिष्ठसुबन्तत्वानवच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयप्रत्ययेतरत्वेतिनिवेशः कार्य इति, कार्यित्वनिवेशस्य न किञ्चित्फलम्। नन्वेतादृशोत्तरपदत्वे अग्नीत्यस्यपदत्वेन ङमुडापत्तिरिति चेन्न वार्तिकारम्भप्रत्याख्यानयोः फलैक्यायङमुड्घटितस्यैवेष्टत्वात्। आरम्भपक्षे यद्युत्तरपदत्वं स्यात् तदानेन निषेधः। प्रत्याख्यानपक्षे प्रत्ययलक्षणेनपदत्वेङमुडापत्तिरित्यारम्भप्रत्याख्यानयोः फलभेदः स्पष्ट एव।

ननु कार्यित्वनिवेशाभावेऽटतीत्यटः पचाद्यचि परमश्चासौ अटश्चेति परमाटस्तस्मादाचारक्विबन्तात् "क्विच्क्तौचेतितिक्विचि" तितुत्रेतीण् निषेधेऽतो लोप इत्यकारलोपेपरमाट्तिरितिसिद्ध्यति। अट् इत्यत्रोत्तरपदत्वसत्वेन प्रत्ययलक्षणाप्राप्त्या पदान्तत्वाभावन्नपदान्तादित्यस्य प्राप्त्यभावेन ष्टुत्वे परमाट्टिरिति स्यात्, ममतूत्तरपदस्य कार्यित्वाभावादेतन्निषेधाप्राप्त्या पदत्वान्नपदान्तादिति निषेध इति चेन्न वार्तिकारम्भप्रत्याख्यानपक्षयोः फलैक्याय परमाट्टिरित्यस्यैवेष्टत्वात्। कार्यित्वनिवेशवादिनां तादृशदोषस्यैव सत्वात् वार्तिकारम्भप्रत्याख्यानफलैक्याय तत्कल्पनात्। तथाहि स्वादिष्वति सूत्रे स्वादिषु इत्येको योगः। स्वादिषु पूर्वपदं भवतीत्यर्थः। ततोऽसर्वनामस्थाने यचि भ इति प्रसज्यप्रतिषेधः। अजादौ सर्वनामस्थाने पूर्वपदं न भवति। मध्ये यत्सुबन्तं तदपि पदं न भवति। ततो भम् इति। सर्वनामभिन्नेषु कप्रत्ययावधिषु यकारादौ अजादिषु पूर्वं भंभवति मध्ये यत्सुबन्तं तदपि भंभवतीत्यर्थः इति योगविभागेनोत्तरपदत्वेचेति वार्तिकं भाष्ये प्रत्याख्यातम्। एवञ्च लेढीति लिहः 'इगुपधेति कः' परमश्चासौ लिहश्च परमलिहस्तस्मादाचारक्विबन्तात् वनिपि परमलिह्वेत्यत्र उत्तरपदत्वस्य सत्वेन प्रत्ययलक्षणनिषेधा-

---

उत्तरपद में लक्षणा है। पदत्व का अभिप्राय है—पद प्रयुक्त कार्य। अतः इसका अर्थ मनोरमाकार की दृष्टि में होता है—पदादिविधि भिन्न जिस किसी को पदत्व प्रयुक्त कार्य कर्तव्य रहने पर उत्तरपद को प्रत्यय लक्षण नहीं होता।

परमदण्डिनौ यहाँ पर पदत्व प्रयुक्त 'ङमुट्' कर्तव्य रहने पर दण्डिन् की यह सञ्ज्ञा नहीं होती "उत्तरपदत्वे च पदादिविधौ" इसको स्वीकार करने के कारण ही, परमवाचौ में "चोकुः" से कुत्व परमगोदुहौ में 'दादेर्धातोर्घः' से घत्व परमलिहौ में "होढः" से ढत्व नहीं होता।

जो प्राचीन परमदण्डिनौ में ङमुट् वारण के लिये "उभि च पदे" (८।३।२१) से पदे का अनुवर्तन करके अर्थ करते हैं। ह्रस्व से परे जो ङम् तदन्त जो पद उससे परे अजादि पद को ङमुट् होता है, इसको स्वीकार कर लेने पर, यहाँ पर अजादि पदाभाव होने से ङमुट् नहीं होगा। यह व्याख्यान "उत्तरपदत्वे च पदादिविधौ" इस वचन का सञ्चार हो जाने के कारण खण्डित हो गया। "परमदण्डिनौ" यहाँ पर ही नलोप वारण करने के लिये उक्तरीति का अनुसरण प्राचीनों को भी करना पड़ेगा। यदि कहो कि 'अपदादि विधौ' में पर्युदास होने से पदान्तत्वनिमित्तक विधि में ही निषेध लगता है, यह "न लुमता" (१।१।६३) इस सूत्र के भाष्य में स्पष्ट है।

"समः सुटि" ( पा० सू० ८।३।५ ) ॥ यद्यपि मोऽनुस्वारेण सिद्धं; तथाप्यनुनासिकत्वत्रिसकारत्वसिद्ध्यर्थमिदम् ॥

---

त्रिसकारत्वेति । न च पुनर्द्वित्वेन तदपि सिद्धम् । लक्ष्ये लक्षणस्येति न्यायात् । अत्र चेदमेव ज्ञापकं बोध्यम् ॥

---

ढ्ढत्वं न भवति, इति उभयोः फलैक्याय सर्वनामस्थाने यचीत्यस्याजादिस्वादीतरो यः कप्रत्ययावधिकस्वादितदितरप्रत्ययोपलक्षणत्वस्वीकारेण तादृशप्रत्यये परे पूर्वं पदं न भवतीत्यर्थस्यावश्यं वक्तव्यतया वनिपश्चाजादिस्वादीतरकप्रत्ययावधिकस्वादीतरत्वान्निषेधः, तथाच परमाट्तिरित्यत्रक्तिचोऽपि तदितरत्वेन पदत्वनिषेधेन ष्टुत्वघटितस्यैवेष्टत्वात् । एवञ्चकार्यित्वनिवेशो न कार्य्यः । पूर्वदण्डिप्रिय इत्यत्रापि दण्डिनित्यस्योत्तरपदत्वाभावेन मध्यमपदत्वानाक्रान्तत्वविशेषणं न देयम् ।

ननु त्रयो गावो भव्या यस्येति त्रिपदे बहुव्रीहौ, अवान्तरतत्पुरुषे त्रिगवभव्येनेत्यत्र कार्यित्वनिवेश आवश्यकः । तथाहि गो इत्यस्य पदत्वस्वीकारेऽवङ्स्फोटायनस्येत्यवङ् स्यात् । तदभावे पदव्यवायेऽपीति निषेधाप्राप्त्याणत्वापत्तिरित्युभयतः स्पाशा रज्जुः स्यात् । कार्यित्वनिवेशे तु गो इत्यस्योत्तरपदत्वेन कार्यित्वेन च प्रत्ययलक्षणनिषेध इति नावङादेशः, णत्वे तु उत्तरपदस्य कार्यित्वाभावेन निषेधाप्रवृत्त्या प्रत्ययलक्षणेन पदत्वाण्णत्वनिषेधः सिद्ध्यति इति चेन्न पदव्यवायेतिसूत्रस्थस्यातद्धित इति वार्तिकस्य प्रत्याख्यानाय पदे व्यवायः पदव्यवायः इति भाष्यकृता व्याख्यानमिति माषवापेनेत्यत्रफलाभेदाय पदव्यवायेऽपीत्यत्र पदपदं पदत्वयोग्योपलणमिति स्वीकारेणादोषात्, भाष्ये हि, अतद्धित-इति वक्तव्यम् 'इहमाभूत्', आर्द्रगोमयेण शुष्कगोमयेण, तर्त्तहि वक्तव्यम् न वक्तव्यम् नैवं विज्ञायते पदेन व्यवायः पदव्यवायः इति कथं तर्हि पदे व्यवाय पदव्यवाय इति ॥

---

किञ्च नवीनों के मत से इसका अर्थ होता है। उत्तरपद को पदादिभिन्न पदत्व प्रयुक्त कार्य कर्त्तव्य रहने पर उत्तर को प्रत्यय लक्षण नहीं होता। अर्थात् उत्तरपद को कार्यी रहने पर ही 'उत्तरपदत्वे चापदादिविधौ' की प्रवृत्ति होती है, अतएव 'माषकुम्भवापेन' यहाँ पर "पदव्यवायेऽपि" ( ८।३।३८ ) से णत्व निषेध होता है। अर्थात् 'माषाणां कुम्भः माषकुम्भः माषकुम्भस्य वापः' माषकुम्भवापस्तेन माषकुम्भवापेन, उत्तरपद' समास के चरमावयव में रूढ़ है। वाप से टा विभक्ति नहीं आयी, अपितु, माषकुम्भवाप से तृतीया विभक्ति आई है। "प्रातिपदिकान्तनुम्विभक्तिषु च" ( ८।४।११ ) से णत्व प्राप्त रहेगा, उत्तरपद वाप का अवयव नकार नहीं है, अतः उत्तरपद कार्यी नहीं है। तथा च प्रत्ययलक्षण प्रतिषेधाभाव होने से "पदव्यवायेऽपि" ( ८।४।३८ ) से निषेध होगा। इस स्थिति में परमदण्डिनौ यहाँ पर भी उत्तरपद कार्यी नहीं है। "उत्तरपदत्वे" से प्रत्ययलक्षण प्रतिषेध होगा नहीं, तो प्राचीनोक्त "ञमि च पदे" ( ८।३।२१ ) से पदे का अनुवर्तन करके अजादि पद को ङमुट् होता है, इस व्याख्यान से ही नुट का वारण करना चाहिये। यह व्याख्यान "ङमो ह्रस्वादचि" इस सूत्र के भाष्य में तथा "ञमि च पदे" इस सूत्र के भाष्य में स्पष्ट है। अतः "ङमोह्रस्वादचिङमुणित्यम्" इस सूत्र पर भाष्यकार ने जो कहा है, "तैन निषेधेन सिद्धम्" अर्थात् 'उत्तरपदत्वे च' इस वार्तिकोक्त निषेध से सिद्ध है वह भाष्य एकदेशी है।

यद्यपि 'सम् स्कर्ता' इस स्थिति में "मोऽनुस्वारः" से मकार को अनुस्वार करके "अनचि च" से द्वित्व करने पर द्विसकारक रूप सिद्ध हो जायगा, तथापि त्रिसकारक रूप सिद्ध करने के लिये "समः

"अत्रानुनासिकः" ( पा० सू० ८।३।२ ) ॥ अयमधिकारो विधिर्वेति द्वैतम् । आद्येऽत्रग्रहणमनर्थकम् । अधिकारादेव रुप्रकरणलाभात् । तुशब्दस्त्वधिकारपक्षे परस्मात्कार्यिणो विशेषद्योतनार्थः, परस्य नित्यं रुत्वं, पूर्वस्य तु वाऽनुनासिक इति । विधिपक्षे व्यर्थः । वाग्रहणं स्पष्टार्थम् । "अनुनासिकात्पर–" ( पा० सू० ८।३।४ ) इति ज्ञापकादेव सिद्धेः । न हि विकल्पं विनाऽनुनासिकाभावपक्ष इति सम्भवति । इदमेव ध्वनयितुं वृत्तौ तु वेति शब्दौ नोक्तौ ॥

---

अनर्थकमिति । इदमुपलक्षणं प्रतिसूत्रमावृत्तौ गौरवं चेत्यपि बोद्ध्यम् । स्पष्टार्थमिति । अनेन तु ग्रहणमधिकारपक्षेऽपि परस्य रुत्वतः पूर्वस्यानुनासिक इत्यर्थस्य स्पष्टं बोधनार्थं वाशब्दवदिति सूचितम् । विधिपक्षेऽत्रग्रहणं तु एतद्रुप्रकरणे इत्यर्थलाभार्थम् ।

वस्तुतोऽत्राधिकारत्वमेवोचितम् । "मतुवसो रु–( पा० सू० ८।३।१ ) इति सूत्रे कृतयोः "वने उपसंख्यानं" विभाषा भवत्–" इत्यनयोरुदाहरणभाष्येऽनुनासिकाद्यनुच्चारणात् विधित्वे तु तत्र प्रवृत्तिर्दुर्वारैव । अधिकारत्वे तूत्तरत्रैव प्रवृत्तिः । स्पष्टं चेदं वृत्ताविति तत्त्वम् ।

---

इदमेव ज्ञापकमिति—समस्सुटीति सूत्रमेवेत्यर्थः । अन्यथा समो मलोपमेक इति लोपे लोपस्यापि रुप्रकरणविधेयत्वादनुस्वारानुनासिकयोः सकृद् द्वित्वेन द्विसकारकस्य पुनर्द्वित्वेन त्रिसकारस्यापि सिद्धौ सूत्रं व्यर्थमेव स्यादितिभावः । ननु सूत्रसत्वे त्रिसकारकरूपसम्पत्तये सकृदेव द्वित्वशास्त्रस्य प्रवृत्तिः सूत्राभावे द्विवारं द्वित्वशास्त्रप्रवृत्तिरिति प्रक्रियालाघवार्थं सूत्रमावश्यकम् । न च सूत्रसत्त्वे द्विसकारकसम्पत्त्यर्थं खरवसानयोरित्यादिप्रवृत्त्याश्रयणप्रयुक्तं गौरवमधिकमिति वाच्यम् । सम्पुङ्कानामिति वार्तिकबलेन समस्सुटीत्यत्र सकारं प्रश्लिष्य मकारस्यैव सकारविधानेन विसर्गाद्यनपेक्षणादिति चेन्न । समस्सुटीत्यस्य सत्त्वे तत्प्रवृत्त्या द्विसकारकं द्वित्वप्रवृत्त्या त्रिसकारकं सूत्राभावे च द्विवारं द्वित्वशास्त्रप्रवृत्त्या द्विसकारकत्रिसकारकयोस्सिद्धिरिति शास्त्रप्रवृत्त्यप्रवृत्तिकृतलघुगुरुभावस्य दुर्वचत्वादित्याहुः ।

---

सुटि" ( ८।३।५ ) सूत्र है । यदि कहो कि पुनः द्वित्व हो जाने पर त्रिसकारक भी बन जायगा तो नहीं लक्ष्य में लक्षण एकवार ही लगता है । इस न्याय का ज्ञापक "समः सुटि" सूत्र ही है, अन्यथा पुनः द्वित्व करने पर त्रिसकारक बन जायगा, सूत्र व्यर्थ हो जायगा ।

"अत्रानुनासिकः" ( ८।३।२ ) यह अधिकार है या विधि यह द्वैत है । द्वैत का भाव होता है । ( द्वाभ्यामितं द्वीतंतदेव द्वैतम् ) विरुद्ध धर्मद्वय प्रकारक ज्ञान विषयक सन्देह । अधिकार पक्ष में अत्र ग्रहण निरर्थक है । यदि कहो कि रु प्रकरण लाभार्थ अत्रग्रहण है तो नहीं क्योंकि अधिकार रहने पर रुत्व अनुनासिक सह विधान होने से अन्यत्र अनुनासिक नहीं होगा । "मतुवसोरुसम्बुद्धौ छन्दसि" ( ८।३।१ ) का रु प्रकरण "ढोढे लोपः" ( ८।३।१३ ) के पूर्व तक माना जाता है । यदि कहो कि अत्र रहने पर रु प्रकरण में ही सम्बन्ध होता है । "ढो ढे लोपः" इत्यादि में सम्बन्ध नहीं होता इसलिए अत्रग्रहण चाहिये तो इसका उत्तर देते हैं प्रतिसूत्र में आवृत्ति करने पर गौरव होगा । अधिकार पक्ष में तु शब्द, पर स्थानी से, पूर्व स्थानी, में विशेषता है, इसको द्योतन करने के लिये है । जैसे 'सम् स्कर्ता' इस स्थिति पर स्थानी मकार को नित्य रु होता है, पूर्वस्थानी अकार को विकल्प से अनुनासिक होता है । विधि पक्ष में तु ग्रहण व्यर्थ है । वा ग्रहण स्पष्टार्थ है । इस

"अनुनासिकात्" ( पा० सू० ८।३।४ ) ॥ ल्यब्लोपे पञ्चमीत्याह—अनुनासिकं विहायेति । एवं च संसर्गवद् [1]विप्रयोगस्यापि विशेषावगतिहेतुत्वादवत्साऽऽनीयतामित्यत्रेव सम्भावितानुनासिक्यगुणक एव उपस्थितत्वादाकाङ्क्षितत्वाच्चावधित्वेन सम्बध्यत इत्यभिप्रेत्याह—रोः पूर्वस्मादिति । अनुस्वारागम इति । आगमत्वं च परशब्देनैव लभ्यते "पूर्वौ तु ताभ्यामैच्–" ( पा० सू० ७।३।३ ) इत्यत्र पूर्वशब्देनैचोरिवेति भावः ।

---

ल्यब्लोपे इति । दिग्योगलक्षणा तु न, अत्रानुस्वारपरानुनासिकः पूर्वस्य तु वेति न्यासेन सिद्धौ "अनुनासिकात्पर—" ( पा० सू० ८।३।४ ) इत्यस्य वैयर्थ्यापत्तेरिति भावः परशब्देनैवेति । प्रसिद्धावेवकारः ॥

---

परशब्दस्यश्रूयमाणत्वेन दिग्योगपञ्चम्याः सन्देहवारणार्थं शब्दरत्नकारेणोक्तम्—दिग्योगलक्षणा तु न ।

---

कथन से सूचित होता है कि 'तु' ग्रहण भी, अधिकार पक्ष में पर को रु उससे पूर्व को अनुनासिक होता है, इस अर्थ को, स्पष्ट बोधन करने के लिये है । वा शब्द की तरह । वास्तविक अधिकारत्व ही उचित है । "मतुवसोरु" ( ८।३।१ ) इस सूत्र पर पढ़े गये "मतुवसोरादेशे वन उपसंख्यानम्" विभाषाभवत् इनके उदाहरण प्रातरित्वः, भोः, भगोः, अघोः, में भाष्यकार ने अनुनासिक उच्चारण नहीं किया, यदि यह सूत्र विधि रहता तो वहाँ पर इसकी प्रवृत्ति दुर्वारा थी । अधिकार में तो उत्तर उत्तर ही प्रवृत्ति होती है । अतः इसके पूर्व 'मतुवसोरुः' में इसकी प्रवृत्ति की कोई बात ही नहीं ।

यदि कहो कि वा विकल्पार्थ है तो नहीं कह सकते, क्योंकि "अनुनासिकात्परः" ( ८।३।४ ) इसके ज्ञापन से विकल्प सिद्ध है । विकल्प के बिना अनुनासिकाभाव हो नहीं सकता । इसी को ध्वनन करने के लिये वा शब्द नहीं कहा, वृत्तिकार ने । अनुनासिकात् यहाँ पर ल्यप् लोप में पञ्चमी होने से अनुनासिक को छोड़कर यह अर्थ होता है । दिग्योगलक्षणा पञ्चमी यहाँ पर नहीं है । इसको माननेपर "अत्रानुस्वार परानुनासिकः पूर्वस्य तु वा" इस न्यास से ही सिद्धि हो जायगी, "अनुनासिकात्परः" ( ८.३.४ ) यह सूत्र व्यर्थ हो जायगा ।

गाय के छोटे बच्छड़े का नाम वत्स होता है । धेनु शब्द अनेकार्थक है, नव प्रसूता गौ महिषी इत्यादि को धेनु कहा जाता है । किन्तु "सवत्सा धेनुः" कहने पर बच्छड़े के सम्बन्ध से गाय का ही ग्रहण होगा, महिषी इत्यादि का नहीं । सम्बन्ध के समान वियोग भी विशेष ज्ञान का कारण होने से, अवत्सा आनीयताम् की तरह सम्भावित आनुनासिक्य गुणवाला ही उपस्थित होने के कारण, तथा आकाङ्क्षित होने से अनुस्वार का अवधिभूत होगा । इसी अभिप्राय से कहा गया है, रु से पूर्व से पर को अनुस्वारागम होता है । पर शब्द से आगमत्व की प्रतीति होती है । जैसे "पूर्वौ तु ताभ्यामैच्" से ऐच् का आगम करते हैं, पूर्व शब्द का उच्चारण होने से । उसी प्रकार पर शब्द का उच्चारण होने से अनुस्वार का आगम करते हैं । अतः शब्दरत्नकार ने कहा है, प्रसिद्धि में एवकार है । अर्थात् पर शब्द होने से आगमत्व प्रसिद्ध है । क्योंकि इसका भाव होता है परावयव अनुस्वार होता है, अतः "अवयवत्वावच्छिन्न विधेयताश्रयत्वेन" इसमें आगमत्व रहेगा ।

---

१. संयोगो विप्रयोगश्च साहचर्यं विरोधिता । अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिस्वरादयः । शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥
इत्यत्र विशेषार्थनिर्णयकेषु विप्रयोगस्यापि गणनेन तस्यापि तत्त्वात् । अनवच्छेदे सन्देहे इति तदर्थः । 'सवत्साधेनुरा नीयताम्' इत्यत्र वत्ससम्बन्धस्य गव्येव सत्त्वेन यथा वत्ससंयोगेन गोपदार्थोऽवगम्यते तथैव 'अवत्सा' इत्यत्र वत्स पदस्य विप्रयोगेन गोपदार्थोऽवगम्यतेइति । प्रकृतेऽपि तथैव बोध्यम् ।

"विसर्जनीयस्य (पा० सू० ८।३।३४)॥ खरीति। एतच्च मण्डूकप्लुत्या "खरवसानयोः (पा० सू० ८।३।१५) इति सूत्रादनुवर्तते। नन्वनुस्वारस्यानच्त्वात्ततः परस्य द्वित्वं न स्यादेवेत्यत आह—अनुस्वारविसर्गेत्यादि। अकारोपरीति। यदि त्विकारोपरि पठ्येत् तर्हि पयःसु, यशःसु, इत्यादौ इणः परस्येति षत्वं स्यादिति भावः। अच्त्वादिति। न चैवं हरिः कर्त्ता, हरिं स्मरेदित्यादौ यणादिप्रसङ्गः त्रिपादीस्थत्वेन विसर्गादीनामसिद्धत्वात्। अनुस्वारस्यापि द्वित्व इति। अपि शब्दात्ककारस्य। वचनान्तरेणेति। "अचो रहाभ्याम्" (पा० सू० ८।४।४६) इति कृतेऽपि "यणो मयः" इति भवत्येवेति भावः॥

---

मण्डूकेति। एकदेशे स्वरितत्वप्रतिज्ञयेत्यपि बोद्ध्यम्। अत एवावसाने न सः। पूर्वेण संनिकर्षरूपा संहिता त्ववसानेऽप्यस्त्येव। अत एव संहिताधिकारेऽवसानकार्यपाठः सङ्गच्छते। षत्वं स्यादिति। अत एव पुंस्वित्यादावुकारं निमित्तीकृत्यानुस्वारव्यवधाने षत्वमाशङ्क्य नुम्स्थानिकानुस्वारस्यैव "नुम्विसर्जनीय" (पा० सू० ८।३।५८) इति सूत्रे ग्रहणान्नेति भाष्यं सङ्गच्छते। इकाराद्युत्तरं पाठे हि अनुस्वारमिमं गृहीत्वा षत्वं दुर्वारं स्यादिति भावः। यणादीति। पूर्वसवर्णदीर्घ आदिशब्दार्थः। अयं पाठोऽनित्यः। "अट्कुपु" (पा० सू० ८।४।२) इति सूत्रेऽनुस्वारोपलक्षणनुम्ग्रहणात्। अत एव हरिं जयतीत्यादौ "झलां जश् झशि" (पा० सू० ८।४।५३) इति नेति बोद्ध्यमिति कश्चित्। भवत्येवेति। एकस्य द्वितीयोच्चारणस्यैकेन साधुत्वबोधनं तयोर्मद्ध्ये परस्य द्वितीयोच्चारणस्यान्येन साधुत्वबोधनमिति भावः॥

---

एकदेशे स्वरितत्वेति। "खरवसानयोः सः इति न्यासेनैवसिद्धे "विसर्जनीयस्य सः" इत्यस्यारम्भसामर्थ्यादत्रावसानपदसम्बन्धाभावाय, एकदेशे खर्पदमात्रे स्वरितत्वज्ञापनादित्यर्थः।

---

"विसर्जनीयस्य" (८।३।३४) इस सूत्र में "खरवसानयोः" (८।३।१५) इस सूत्र से खर् का अनुवर्तन करते हैं मण्डूकप्लुति से। एकदेश खर् में स्वरितत्व प्रतिज्ञा से ही खर् की अनुवृत्ति समझना चाहिये। इसका भाव है "खरवसानयोः सः" इस न्यास से ही सकार सिद्ध रहा। "विसर्जनीयस्य सः" इस सूत्र के आरम्भ सामर्थ्य से अवसानपद सम्बन्ध करने के लिये एकादेश खर् में स्वरितत्व प्रतिज्ञा करते हैं। अतः अवसान में सकार नहीं होता। यदि कहो कि अवसान संज्ञा से संहिता का बाध हो जायगा तो नहीं पूर्व सूत्र से सन्निकर्ष रूपा संहिता अवसान में भी है। इसलिये संहिताधिकार में अवसान कार्य का पाठ है। यहाँ पर आशंका करते हैं कि अनुस्वार तो अच् है नहीं, तथा "अनचि" अच् से परे यर् को द्वित्व करता है, अनुस्वार से परे जो सकार उसको द्वित्व कैसे होगा, इसका समाधान करते हैं, अनुस्वार विसर्ग जिह्वामूलीय, उपध्मानीय और यमों का अकार तथा शर् पर पाठ समझना चाहिये।

यदि इकार के ऊपर पढ़ेंगे तो पयः सु यशः सु इत्यादि में इण् से परे सकार होने के कारण षत्व हो जायगा। इस कारण से ही 'पुंसु' इत्यादि में उकार को निमित्त करके अनुस्वार व्यवधान में षत्व की आशङ्का करके नुम् स्थानिक अनुस्वार का ही "नुम्विसर्जनीय" इस सूत्र में ग्रहण होने से षत्व नहीं होता यह भाष्य लग जाता है। इकार पर पाठ करने पर तो अनुस्वार इण् को लेकर षत्व दुर्वार है।

"पुमः खयि" ( पा० सू० ८।३।६ ) । पुंसः संयोगान्तलोपे कृतेऽवशिष्टभागस्येदमनुकरणम् । पर्युदासादिति । "इदुदुपधस्य—" ( पा० सू० ८।३।४१ ) इति षत्वविधायके सूत्रे इति भावः । अप्रत्ययस्य यो विसर्ग इति वैयधिकरण्येन व्याचक्षाणानां प्राचां मतेनेदम् । वक्ष्यमाणरीत्या सामानाधिकरण्येनान्वये तु षत्वप्राप्ताविति बोध्यम् ॥

ख्याञादेश इति । आदेशो हि उपदेशे ख्शादिः । असिद्धप्रकरणे णत्वानन्तरं ख्शाञः शस्य यत्वं विकल्प्यते । तेन सुप्रख्येन निर्वृत्तं सौप्रख्यं तत्र भव सौप्रख्यीयः । यत्वस्यासिद्धत्वात् "धन्वयोपधात्—" ( पा० सू० ४।२।१२१ ) इति वुञ्नेत्यादिप्रयोजनान्याकरे स्थितानि । एवं च यत्वस्यासिद्धतयाऽम्परत्वाभावात् "पुमः खयि" ( पा० सू० ८।३।६ ) इति रुत्वं नेत्यर्थः । पुंख्यानमिति । चक्षिङो ल्युट् । ख्याञादेशः ।

---

वक्ष्यमाणरीत्येति । प्रत्ययरूपो यो विसर्ग इति व्याख्यादर्शरीत्येत्यर्थः । वस्तुतस्तदसङ्गतम् । कविभिः कृतमित्यादौ दोषापत्तेः । एतच्चान्वये "तु" इति तुनाऽरुचिबोधकेन सूचितम् । यदा तु सूतेः सस्य पकारोऽन्त्यस्य ह्रस्वो म्सुः प्रत्यय इति "स्त्रियाम्" ( पा० सू० ४।१।३ ) इति सूत्रभाष्यकैयटोक्तव्युत्पत्तिस्तदा सस्य लोपे मस्यैव प्रत्ययत्वमिति व्याख्यादर्शोक्तसामानाधिकरण्येऽपि षत्वाप्राप्तिरेव । पातेर्डुम्सुनिति व्युत्पत्तिमादाय तु मूलमिति दिक् ॥

---

व्याख्यादर्शरीत्येत्यर्थः इति । अप्रत्यय इति पर्युदासो लाघवात् तच्च समानाधिकरणं विसर्गविशेषणं, सामानाधिकरण्ये सम्भवति वैयधिकरण्यायोगात् । पदस्येति व्यधिकरणमेव । तथा चेकारोकारोपधकपदस्याप्रत्ययो यो विसर्गस्तस्य ष इति हि तदीयो ग्रन्थः ।

ख्याञादेशेनेत्यस्यार्थसिद्धत्वप्रतिपादनायापूर्वत्वखण्डनाय च वदति आदेशो हि उपदेशे ख्शादिरिति ।

---

यदि कहो कि अनुस्वार विसर्गादि का अच् में पाठ हो जाने से हरिः कर्त्ता, हरिं स्मरेत्, इत्यादि में यणादि हो तो नहीं, त्रिपादी होने के कारण विसर्गादि को असिद्ध हो जाने से । आदि शब्द से पूर्व सवर्ण दीर्घ का ग्रहण होगा । अयोगवाहों का अकार के ऊपर पाठ अनित्य है । "अट्कुपु" (८।४।२) इस सूत्र में अनुस्वारोपलक्षण नुम् ग्रहण होने से । अन्यथा अट्त्वेन सिद्ध रहा अनुस्वारोपलक्षणनुम् ग्रहण करने की क्या आवश्यकता । अनित्य होने के कारण ही 'हरिं जयति' इत्यादि में "झलांजश् झशि" (८।४।५३) से जश्त्व नहीं होता । अनुस्वार को द्वित्व होता है, अपि शब्द से ककार को भी, "अचोरहाभ्यां द्वे" ( ८।४।४६ ) से तकार को द्वित्व कर देने पर भी "यणोमयः" से द्वित्व होगा ही । एक द्वितीय उच्चारण का "अचोरहाभ्याम्" से साधुत्व होगा, अन्य द्वितीय उच्चारण का "यणोमयः" से साधुत्व होगा, अतः "लक्ष्यगन्याय" का विरोध नहीं है । "पुमः खय्यम्परे" ( ८।३।६ ) इस सूत्र घटक "पुम्" यह पुम्स् शब्द में सकार का संयोगान्तलोप करके अवशिष्ट भाग का अनुकरण है । उससे भेद विवक्षा में षष्ठी विभक्ति लाकर पुमः बना है । व्युत्पत्ति पक्ष में पुम्स् शब्द से डुम्सुन् प्रत्ययान्त होने के कारण मकार स्थानिक विसर्ग को "इदुपधस्य" ( ८।३।४१ ) इस षत्व विधायक सूत्र में अप्रत्ययपर्युदास होने से षत्व की प्राप्ति नहीं है । अतः 'कुप्वोः' इस सूत्र को बाधने के लिये "संपुंकानाम्" में पुंग्रहण किया । "अप्रत्ययस्य यो विसर्गः" यह वैयधिकरण्येन अर्थात् भेदेन

नन्वादेश इह दुर्लभः। "वर्जने प्रतिषेधः" "असनयोश्च" इति वार्तिकादिति चेत्। सत्यम्। "बहुलं तणि" "अन्नवधकगात्रविचक्षणाजिराद्यर्थम्" इति वार्तिके बहुलग्रहणात्समाधेयम्। तथा च ख्शादित्वप्रयोजनगणनवार्तिकम्। रुविधिः—पुंख्यानमिति। णत्वं–पर्याख्यानमिति। निष्ठानत्वमाख्यातमिति च। शकारेण व्यवधानात् "कृत्यचः" (पा० सू० ८।४।२९) इति णत्वं न। तथा आख्यातमित्यत्र "संयोगादेरात्–" (पा० सू० ८।२।४३) इति नत्वं न। यत्वस्यासिद्धया यण्वत्ताविरहात्। एवं च "न ध्याख्या—(पा० सू० ८।२।५७) इति सूत्रे ख्याग्रहणं न कर्तव्यमिति भावः। न च ख्या प्रकथने, इत्येतदर्थं तदिति वाच्यम्।

---

शकारेणेति। यत्वासिद्धत्वादिति भावः। न कर्तव्यमिति। यत्वासिद्ध्या यण्वत्ताविरहेण

---

वर्जने प्रतिषेध इति। वर्जनेऽर्थे गम्यमाने ख्यात्रादेशस्य प्रतिषेधः कर्त्तव्य इति तथा च ण्यत्प्रत्ययान्ते अवसंचक्ष्या इत्यत्र आदेशो न भवति दुर्जनाः अवसंचक्ष्याः वर्जनीया इत्यर्थः।

असनयोश्चेति। अस् प्रत्यये सति वा अनप्रत्यये सति आदेशो न भवति तथा च औणादिकास्प्रत्ययान्ते नृचक्षः-इत्यत्रादेशो न। नृचक्षा रक्षः इत्यत्र तु छान्दसवर्णविकारः भाषायान्तु नृचक्षो रक्षः इति भवतीति कैयटेन हरदत्तेन च स्पष्टमुक्तम्।

"अनुदात्तेतश्च हलादेः" इति सूत्रेण विहितयुच्प्रत्ययान्ते "विचक्षणः" इत्यत्रापि आदेशो न।

कथं तर्हि पुंख्यानम्, पर्याख्यानमिति चेत् बाहुलकादित्यवेहि।

तथाहि—बहुलन्तण्यन्नवधकगात्रविचक्षणाजिराद्यर्थम्। सर्वप्रकरणापेक्षमेतत्। अतः इयं शङ्का न कर्त्तव्या यदत्र विचक्षणशब्दादन्येषामुपयोगं न पश्याम इति। तणिति संज्ञा छन्दसोर्ग्रहणम्। तत्र अन्नशब्दे जग्ध्यभावः। "अन्नाणः" इति निपातनाद्वा सिद्धम्। वधक इति ण्वुलि वधादेशः। अल्लोपस्य स्थानिवत्त्वाद्वृद्ध्यभावः। क्वुन् शिल्पिसंज्ञयोः (उ० सू० २००) इत्यधिकारे "हनो वध च (उ० सू० २०४) इत्युणादिसूत्रेण गतार्थं-

---

अन्वय है, अतः प्रत्ययभिन्न सम्बन्धी विसर्ग को षत्व होगा। यहाँ पर, अर्थात् व्युत्पत्तिपक्ष में प्रत्यय सम्बन्धी विसर्ग होने से षत्व की प्राप्ति नहीं है, यह वैयधिकरण्येन अन्वय प्राचीन हरदत्तादि के मत से है। प्रत्ययरूप जो विसर्ग उससे भिन्न को षत्व होता है, इस अभेदान्वय में तो षत्व की प्राप्ति व्युत्पत्ति पक्ष में भी रहेगी प्रत्ययरूप विसर्गाभाव होने से। वस्तुतः व्याख्यादर्शोक्त सामानाधिकरण्येन अन्वय असङ्गत है। "कविभिः कृतम्" इत्यादि में षत्व होने लग जायगा यह असङ्गतता 'अन्वये तु' में अरुचि बोधक तु शब्द से प्रतीत होती है। यदि 'षूङ्' धातु के सकार-को षकारादेश अन्त्य को म्सु प्रत्यय करके पुम्स् शब्द का साधुत्व हो, जो भाष्यकार तथा कैयट ने "स्त्रियाम्" (४।१।३) सूत्र पर लिखा है, तो सकार का लोप हो जाने पर मकार में ही प्रत्यत्व रहेगा तथा च व्याख्यादर्शोक्त सामानाधिकरण्य में भी षत्व की अप्राप्ति ही है। पा धातु से डुम्सुन् प्रत्यय करने वाले पक्ष को लेकर मूल लिखा गया।

यदि कहो कि "चक्षिङ्" व्यक्तायां वाचि से ल्युट् अनादेश "चक्षिङः ख्याञ्" से ख्याञादेश से निष्पन्न ख्यान शब्द के साथ समस्त अर्थात् 'पुंसः ख्यानम्' में षष्ठी समास सकार का संयोगान्त लोप कर देने पर पुम्स् शब्द के मकार को "पुमः खय्यम्परे" से रुत्व हो तो नहीं। आदेश उपदेश

तस्य सार्वधातुकमात्रविषयत्वात्। अत्र च "सस्थानत्वं नमः ख्यात्रे" इत्युत्तर-वार्तिकं प्रमाणम्। सस्थान इति जिह्वामूलीयस्य प्राचां सञ्ज्ञा। स इह न। "शर्परे विसर्जनीयः" (पा० सू० ८।३।३५) इत्यस्य प्रवृत्तेरिति भावः। यदि स्वतन्त्रोऽपि धातुरार्द्धधातुके इष्येत; तदा जिह्वामूलीयस्य दुर्वारतयेदं वार्तिकमसङ्गतं स्यात्।

यत्तु हरदत्तमाधवादिभिरुक्तं ख्याधातुरपि क्शादिर्यत्वविधिरप्युभयसाधारण-इति। तच्चिन्त्यम्। भाष्ये चक्षिङ एवोपक्रमात्सार्वधातुकेऽपि क्शादिप्रयोगापत्तेश्च। न चेष्टापत्तिः। माधवेनार्द्धधातुकेष्वेवायं क्शादिरित्युक्तत्वात्। सार्वधातुकेऽनभिधानस्यैव शरणीकर्तव्यत्वापत्त्या गौरवग्रस्तत्वाच्चेत्यास्तां तावत्। स्यादेतत्।

---

नत्वाप्राप्तेरिति भावः। अत्र चेति। ख्यातेः सार्वधातुकमात्रविषयत्वे इत्यर्थः। सञ्ज्ञेति। एवं च तदुत्तरभावप्रत्ययेन सस्थानशब्द उच्यते। तेन स्ववाच्यो जिह्वामूलीयो वार्त्तिके लक्ष्यते। कुत्वं कस्मान्न भवतीत्यत्रेवेति भावः। क्शादीति पाठे प्रयोगे चर्त्वप्रवृत्तिरिति भावः। इत्युक्तत्वादिति। एवं च माधवो नेष्टापत्तिं कर्तुमर्हं इत्यर्थः। अनभिधानस्यैवेति। क्शादेरनभिधानस्यैवेत्यर्थः। गौरवेति। क्शादित्वं स्त्रीकृत्यानभिधानस्वीकारापेक्षया

---

मेतत्। गात्रमिति। इणः औणादिके ष्ट्रनि गादेशः गाङ्धातुना वासिद्धम्। अजिरमिति। वीभावो न "अजिर शिशिर" (उ० सू० ५६) इति निपातनात् सिद्धम्।

सस्थानशब्द इति। सङ्केतसम्बन्धेन सस्थानशब्दवत्त्वं संस्थानपदशक्यतावच्छेदकम्। तेन रूपेण च जिह्वामूलीयस्य बोधः। सस्थानशब्दाद्विहितत्वप्रत्ययो भावे। भावश्च प्रकृतिजन्यबोधे प्रकार इति। तथा च सस्थानत्वपदेन सस्थानशब्द उच्यते। तस्य च विधानाभावेन तदर्थे लक्षणेति तदाशयो बोध्यः नेष्टापत्तिमिति। आर्धधातुकेष्वेव क्शादिप्रयोग-

---

में क्शादि है। असिद्ध प्रकरण में अर्थात् "पूर्वत्रासिद्धम्" के अधिकार में णत्व प्रकरण के बाद 'क्शाञः शस्य यो वा' यह पढ़ा गया है। भाष्यकार ने 'चक्षिङ्' सूत्र पर स्पष्ट कहा है "असिद्धेशस्य यवचनं विभाषा"। अतः "सुप्रख्येन निर्वृत्तं सौप्रख्यम्" तत्र भवः सौप्रख्यीयः होता है, यत्व असिद्ध हो जाने से "धन्वयोपधात्" (८।२।१२१) से वुञ् प्रत्यय नहीं होता, किन्तु "वृद्धाच्छः" से छ प्रत्यय होता है। यत्वासिद्ध के फल भाष्य में स्थित हैं। तथा च यत्व असिद्ध हो जाने पर अम्परत्वाभाव होने से "पुमः खयि" से रुत्व नहीं होता। यदि यहाँ पर आशङ्का करो कि ख्या आदेश नहीं होना चाहिये, क्योंकि वार्तिक है "वर्जनेप्रतिषेधः" अर्थात् वर्जन अर्थगम्यमान रहने पर प्रतिषेध होता है, अतः चक्षिङ् धातु से "ऋहलोर्ण्यत" से ण्यत् प्रत्यय करने पर "दुर्जनाः संचक्ष्याः" अर्थात् दुर्जन वर्जनीय है। यहाँ पर ख्याञादेश नहीं होता। "असनयोश्च प्रतिषेधो वक्तव्यः" अस् और अन प्रत्यय परे रहते ख्याञादेश नहीं होता, अतः "नृचक्षाः राक्षसः" यहाँ पर चक्षिङ् धातु से 'सर्वधातुभ्योऽसुन्' से असुन् प्रत्यय तथा "अत्वसन्तस्य चाधातोः" से दीर्घ होता है। अस् परे रहने से ख्याञादेश नहीं हुआ। इसका अर्थ होता मनुष्य की हिंसा करने वाला राक्षस, अन प्रत्यय परे रहने पर भी ख्या-आदेश नहीं होता, अतः ल्युट् प्रत्ययान्त विचक्षण में ख्याञादेश नहीं हुआ। पुंख्यानम् यहाँ पर ल्युट् प्रत्यय परे होने के कारण ख्याञादेश नहीं होना चाहिये तो नहीं। "बहुलं तण्यन्नधकगात्र-विचक्षणाजिराद्यर्थम्" इस वार्तिक में बहुल ग्रहण सर्वप्रकरणापेक्ष होने से आदेश निषेध प्रकरण में भी बहुल ग्रहणापेक्षित होने से बाहुलकात् अन परे रहते निषेध नहीं होगा ख्याञादेश होगा। 'बहुलं-

तदस्वीकृत्यैव ख्यातेरार्धधातुकेऽनभिधानस्यैव स्वीकारे लाघवमिति भावः। रुत्वं स्यात्। रुत्वमित्युपलक्षणं जिह्वामूलीयस्य षत्वस्य च। नमः ख्याति, निःख्यातीत्यादौ।

इति प्रतिपादनेनान्यत्र तत्प्रयोगस्यानिष्टत्वं मन्यमानो माधवस्सार्वधातुके ख्शादिप्रयोगस्य कथमिष्टापत्तिं कुर्यादित्याशयः। रुत्वमिति। गणेषु प्रातिपदिकपाठस्यैव शैलीसिद्धत्वादेकवचनान्तत्वेन 'पाठस्य विवक्षार्थत्वात्तत्प्राप्तिसम्पादकोऽत्र कबभाव इत्याशयः। नमःख्याति निःख्यातीति। सार्वधातुके ख्शादित्वाभावाच्छर्परे इत्यस्याप्राप्त्या नमःख्यातीत्यादौ जिह्वा-

तण्यन्न' इस वार्तिक का भाव है, संज्ञा तथा वेद में जग्ध्यादेशादिरूप कार्य बाहुलकात् नहीं होते। अन्न यहाँ पर अद् धातु से क्त प्रत्यय परे रहते जग्ध्यादेश नहीं हुआ। वधकः यहाँ पर हन् धातु से ण्वुल् प्रत्यय परे रहते वधादेश हो गया बाहुलकात्। गात्रम् यहाँ पर लुङ् परे रहते होने वाला गा आदेश, बाहुलकात् ष्ट्रन् प्रत्यय परे रहते हो गया। ल्युट् प्रत्यय परे रहते "विचक्षणः" यहाँ पर ख्याञादेश बाहुलकात् नहीं हुआ। अज् धातु से किरिच् प्रत्यय परे रहते बाहुलकात् वी भाव नहीं हुआ।

ख्शादित्व प्रयोजन की गणना करने वाले वार्तिकें हैं—"रुविधिः पुंख्यानम्" अर्थात् यत्व को असिद्ध हो जाने से शकार का व्यवधान होने से अम्परत्वाभाव होने से "पुमः खयि" से रुत्व नहीं हुआ। "णत्वं पर्याख्यानमिति" अर्थात् यत्वासिद्ध होने से शकार का व्यवधान हो जानेपर 'कृत्यचः' से णत्व नहीं हुआ। "निष्ठानत्वमाख्यतम्" अर्थात् "आख्यतम्" यहाँपर यत्व के असिद्ध हो जाने से यण्वत्ता का अभाव होने से "संयोगादेरात्" ( ८।२।४२ ) इस सूत्र से नत्व नहीं हुआ। अतः नत्व निषेध करने को "नध्याख्यापॄमूर्च्छिमदाम्" ( ८।२।५७ ) इस सूत्र में ख्या ग्रहण नहीं करना चाहिये यदि कहो "ख्या प्रकथने" धातु से क्त प्रत्यय परे रहते नत्व निषेधार्थ है, तो नहीं ख्या प्रकथने धातु का सार्वधातुकमात्र विषय होने से। 'ख्या' प्रकथने धातु का सार्वधातुकमात्र विषय हैं, इसमें प्रमाण है "सस्थानत्वं नमः ख्यात्रे" संकेत सम्बन्ध से सस्थानत्व पद का शक्यतावच्छेदक है, सस्थानशब्द वत्त्व। सस्थानत्व यहाँ पर, सस्थान शब्द से विहित त्व प्रत्यय भाव में हैं, भावश्च "प्रकृतिजन्यबोधे प्रकारीभूतः" जैसे 'गोत्वम्'। यहाँ पर प्रकृति है गो, तज्जन्यबोध होगा, गोत्वविशिष्ट का बोध, उसमें प्रकारीभूत है गोत्व, वही भावपदार्थ कहलायेगा। उसीप्रकार सस्थानत्वशब्द से रुस्थानशब्द ग्रहण होगा क्योंकि सस्थान शब्दवत्त्व में, प्रकारीभूत होगा, सस्थानशब्दवान्, सस्थानशब्दवत् है सस्थानशब्द। उसका विधानाभाव होने से तदर्थ मे लक्षणा हो जाने से जिह्वामूलीय का ग्रहण होगा। इसी बात को दीक्षितजी ने कहा, जिह्वामूलीय की सस्थानसंज्ञा है। वह जिह्वामूलीय यहाँ पर नहीं होता। "कुत्वं कस्मान्न भवति" की तरह अर्थात् कुशब्द संकेत सम्बन्ध से कुशब्दवान् जो ककारादि है, उनमें शक्त होने से कुशब्द का प्रवृत्ति निमित्त कुत्व हो जायगा। दोनों का तादात्म्य होने से शक्तित्वेन तादात्म्य के ज्ञान में बाधकाभाव होने से "कुत्वं कस्मान्न" कहा गया अर्थात् 'कुशब्दः कथन्न'। वही समाधान यहाँ पर तादात्म्य होने से शक्तित्वेन तादात्म्य के ज्ञान में बाधकाभाव होने से "सस्थानत्वं" कहा गया अर्थात् सस्थान।

"नमः ख्यात्रे" यहाँ पर जिह्वामूलीय नहीं होता, "शर्परे विसर्जनीयः" इसकी प्रवृत्ति होने से यदि स्वतन्त्र ख्या धातु आर्धधातुक मे इष्ट रहता, तो जिह्वामूलीय दुर्वार होने से यह वार्तिक असंगत हो जायगा। जो हरदत्त माधव ने कहा है, ख्या धातु में भी क्शाञ् आदेश होता है, क्शाञ् करने पर प्रयोग में चर्त्व होने लगेगा। यत्वविधि उभय साधारण है, अर्थात् चक्षिङ् तथा ख्या धातु दोनों के शकार को यकार होगा वह चिन्त्य है, क्योंकि भाष्यकार ने 'चक्षिङ्' धातु का ही उपक्रम करके ख्शाञ् का विधान किया है। तथा सार्वधातुक में ख्शादि आदेश होने लग जायेंगे।

बहवः पुमांसोऽस्मिन् कुले बहुपुम् ख्यातीत्यत्र रुत्वं स्यात्। "उरः प्रभृतिषु (पा० सू० ५।४।१५०) पुम्-शब्दस्यैकवचनान्तस्यैव पाठान्नेह कप्। सार्वधातुके च ख्यातेः प्रयोगो निर्बाध एवेति चेत्। इष्टापत्तेः। संहिताया अविवक्षायां तु रुत्वं नेति स्पष्टमेव।

यत्तु प्राचा "ख्याधातौ नेति केचित्" इत्युक्तं, तत्र यदि ख्यात्रादेशे इत्यर्थस्तर्हि केचिदित्यनुचितम्। स्वतन्त्रे धातौ चेत्तर्हि सार्वधातुकविषयेऽपि निषेधः स्यात्। न चेष्टापत्तिः। निर्मूलत्वात्।

चक्रिन्त्रायस्वेति। यत्तु प्राचा त्राहीत्युक्तं तत्र परस्मैपदमयुक्तम्। त्रायतेर्ङि-त्त्वात्। त्रायत इति त्राः स इवाचरेत्यर्थे कर्तरि क्विबन्तादाचारक्विपि वा बोद्धव्यम्। प्रशानिति। प्रपूर्वाच्छाम्यतेः क्विप्। "अनुनासिकस्य क्वि-" (पा० सू० ६।४।१५) इति दीर्घः। "मो नो धातोः" (पा० सू० ८।२।६४) इति नः। तस्यासिद्ध-त्वान्नलोपो न।

---

त्रायतेर्ङित्त्वादिति। अत्र त्रायते इत्युक्त्या सत्यपि परस्मैपदे त्रायेत्यस्य प्राप्त्या त्राहीत्यासिद्धिः सूचिता। आचारक्विपि वेति। नामधातौ मूलधात्वादेर्ङित्त्वाद्याश्रित्य "अनुदात्तङित (पा० सू० १।३।१) इत्यादेः प्रवृत्तिर्नेत्यभिमानः। अत एव "त्राहि मां पुण्डरीकाक्ष" इति सङ्गच्छते इति भावः। आर्षं तत्र तदित्यन्ये। शाम्यतेरिति। न नु शान-तेजने इत्यतः, तस्य पदान्ते नलोपेन नान्तत्वासम्भवादिति भावः। न च "अप्रशान्" इति पर्युदासेन नान्तग्रहणेन सिद्धे "नः" इति व्यर्थमिति वाच्यम्। अस्य लक्षणवश-संपन्ननान्तत्वेन पर्युदासेनापि लक्षणवशसम्पन्ननकारान्तानामेवापत्तेः॥

---

मूलीयो निःख्यातीत्यादौ इदुदुपधस्येति, सर्पिः ख्यातीत्यादौ 'इसुसोः सामर्थ्ये' इति षत्वं च स्यादित्यभिप्रायः। नान्तत्वासम्भवादिति। सूत्रे नान्तनिर्देशासम्भवादित्यर्थः। शान् धातोः प्रपूर्वकात् क्विपि निष्पन्नप्रशान् शब्दात्सौ नलोपस्य दुर्वारत्वात्। एतेन प्रतिप-

---

यदि कहो इष्टापत्ति है तो, माधव ने आर्धधातुक में ही ख्शादि किया है। तथा च सार्वधातुक में ख्शादि का अनभिधान ही आश्रय होने के कारण गौरव भी है' अर्थात् ख्शादित्व स्वीकार करके अनभिधान स्वीकार करने की अपेक्षा ख्याप्रकथन को ख्शादि न मानकर ख्या धातु को आर्धधातुक में अनभिधान स्वीकार करने में लाघव है। सम्भावना करते हैं। "बहवः पुमांसोऽस्मिन्कुले, बहुपुम् ख्याति" यहाँ पर "पुमः खय्यम्परे" से रुत्व होना चाहिये, रत्व उपलक्षण है, जिह्वामूलीय, तथा षत्व का "नमः ख्याति" में जिह्वामूलीय प्राप्त होगा। निःख्याति में षत्व प्राप्त होगा। उरः प्रभृति गण में एक वचनान्त पुम्स् शब्द का पाठ होने से यहाँ पर बहुवचन होने से कप् नहीं होगा। सार्वधातुक में ख्याति का प्रयोग निर्विरोध है, यदि कहो तो इष्टापत्ति ही है। संहिता की अविवक्षा करने पर रुत्व नहीं होगा। जो प्राचीनों ने कहा, "ख्याधातौ नेति केचित्" यहाँ पर यदि ख्या धातुका तात्पर्य है ख्याआदेश परे रहते, रुत्व नहीं होता, तो केचित् कहना अनुचित है। यदि स्वतन्त्र धातु का ग्रहण करते हैं, तो सार्वधातुक में भी निषेध होने लग जायगा। यदि कहो इष्टापत्ति है, तो निर्मूल होने से नहीं कह सकते।

जो प्राचीनों ने "नश्छव्यप्रशान्" का उदाहरण प्रक्रियाकौमुदी में "चक्रिंत्राहि" दिया है वह ठीक नहीं, क्योंकि त्रैङ् धातु आत्मनेपदी है। अतः उससे परस्मैपद अयुक्त है, त्रैङ्

"नॄन्पे" (पा० सू० ८।३।१०)॥ पकारोपर्यकार उच्चारणार्थः। तेन नॄः पुनातीत्यादि सिद्धम्। "उभयथर्क्षु—" इत्यत 'उभयथा' इत्यनुवृत्तेर्विकल्पः फलित इत्याशयेनाह—रुः स्याद्वेति॥

"कुप्वोः" (पा० सू० ८।३।३७)॥ सूत्रे खर्परत्वाद्विसर्गः, जिह्वामूलीयस्य खर्त्वात्। "खर्परे शरि" इति विसर्गस्य लोपः, जिह्वामूलीयस्य शर्त्वात्। "वा शरि" (पा० सू० ८।३।३६)। इति विसर्ग एव वा। आदेशयोः कपावुच्चारणार्थौ। चाद्विसर्ग इति। यत्तु प्राचा चाद्विकल्प इत्युक्तं तन्न कपाभ्यां मुक्ते विसर्गस्य सत्वप्रसङ्गात्॥

---

ननु "कुप्वोः" (पा० सू० ८।३।३७) इत्यत्र जिह्वामूलीयस्य खर्त्वाद्विसर्गे तस्य सत्वे सश्रवणापत्तिरत आह—सूत्रे इत्यादिशर्त्वादित्यन्तेन। विसर्गलोपश्च सत्वापवादः। एवं च सूत्रे निर्विसर्गपाठ इति भावः। सविसर्गपाठेऽप्याह—"वा शरि" (पा० सू० ८।३।३६) इति। स च सत्वापवादः। "खर्परे" इति च वैकल्पिकमिति भावः। उच्चारणार्थाविति। तयोरुच्चारणस्य तौ विना असम्भवेन नान्तरीयकतया तयोरुच्चारणं न तु तयोर्विधेयत्वम्। किं तु तन्मात्रे तयोर्लक्षणा व्याख्यानादिति भावः। चाद्विकल्प इति। निपातानामनेकार्थत्वाच्चशब्दो विकल्पार्थ इति तदाशयः। सत्वप्रसङ्गादिति। चानुकृष्टविसर्गस्तु सत्वापवाद इति नास्माकं दोष इति भावः।

---

दोक्तत्वात्सूत्रे शान्धातु निष्पन्नस्यैव ग्रहणं कुतो नेति शङ्का समाहिता। सम्बोधने नलोपनिषेधेन नान्तत्वसम्भव इत्यपि परास्तं सूत्रे सम्बोधनस्याग्रहणात्। न च सूत्रे सम्बोधनान्तस्यानुकरणं सम्भवति नञ्समासानुरोधेन सुबन्तत्वस्यावश्यकत्वेन तदग्रहणात्।

नॄन् पे इति। नॄनिति द्वितीयान्तानुकरणम्। षष्ठ्याः सौत्रो लुक्। नलोपस्तु सौत्रत्वान्न एवं "कान्" (८।३।१२) इत्यत्रापि।

---

धातु से परस्मैपद करने पर तो त्राय बनेगा, त्राहि नहीं बनेगा। अयुक्तत्व का तात्पर्य है, त्राहि प्रयोग असाधु है। अथवा त्रायते इति त्राः "क्विपि च" से क्विप् प्रत्यय त्रावदाचरति इस अर्थ में "सर्वप्रातिपदिकेभ्यः क्विब्वावक्तव्यः" से क्विप् 'सनाद्यन्ताः' से धातुसंज्ञा लोट् के मध्यमपुरुष का एकवचन सि को हि करके त्राहि बनाने पर साधु माना जायगा। यहाँ पर शब्दरत्नकार कहते हैं कि नामधातु में मूल धात्वादि का ङित्वादि आश्रयण करके "अनुदात्तङित" (१।३।१) इत्यादि की प्रवृत्ति नहीं होती यह अभिमान है। अर्थात् उपदेश में जो ङित् तदन्तत्व का अपाय न होने के कारण आत्मनेपद दुर्वार है। अतएव "त्राहि मां पुण्डरीकाक्ष" इत्यादि में भी उक्त प्रक्रिया समझना चाहिये। अथवा आर्ष प्रयोग है।

प्र पूर्वक शम् धातु से क्विप् "अनुनासिकस्यक्वि" (६।४।१५) से दीर्घ 'मोनोधातोः' से नत्व। नत्व असिद्ध हो जाने पर नलोप नहीं होता। शान् तेजने से क्विप् नहीं है, क्योंकि पदान्त में नलोप हो जाने से नान्तत्व असम्भव है। यदि कहो कि अप्रशान् यह पर्युदास होने से नान्त का ग्रहण हो जायगा, "नश्छव्यप्रशान्" में नकार ग्रहण व्यर्थ है तो नहीं, क्योंकि लक्षणवशसम्पन्न नान्तत्व-पर्युदास से भी लक्षणवश सम्पन्न नकारान्त का ही ग्रहण होने की आपत्ति आ जाने से।

"नॄन्" (८।३।१०) इसमें 'नॄन्' यह द्वितीयान्तशब्दस्वरूप षष्ठ्यन्त है, षष्ठी का सौत्रलुक् है। पकारोत्तर अकार उच्चारणार्थक है, अतः "नः पुनाति" इत्यादि की सिद्धि हो जाती है। "उभयथर्क्षु" से उभयथा की अनुवृत्ति होने से विकल्प फलित है। इस आशय पर लिखा है, रुः स्याद्वा।

मिति "दिव उत्" (पा० सू० ६।१।१३१) सूत्रे कैयटहरदत्ताभ्यामुक्तत्वाच्च ।
एवं च परमसजूर्भ्यामित्याद्यपि निर्बाधम्। एवं स्थिते इह सजुष्शब्देन तदन्तवि-
धिर्नेति प्राचामुक्तिरापातत इत्यवधेयम्।

---

(पा० सू० ५।२।४४) "दशान्तात्" (पा० सू० ५।२।४५) इत्यर्थं च। तत्रान्तग्रहणं तु
प्रत्ययविधौ तदन्तग्रहणनिषेधात्तदन्ते प्रवृत्त्यर्थमावश्यकमिति न तत्सामर्थ्याद्व्यपदे-
शिवद्भावाप्रवृत्तिर्वक्तुं शक्या। न च भयाढ्यादाविव "सूत्रान्तात्—" इत्यादौ विशेषण-
विशेष्यभावव्यत्यासेन सिद्धेऽन्तग्रहणसामर्थ्यं सूपपादमिति कौस्तुभोक्तरीत्या निर्वाहः।
"समासप्रत्ययविधौ—" इत्यादीनां सूत्रशब्दादेर्विशेष्यत्वे तात्पर्यग्राहकत्वस्य सत्त्वेन
विपरीतस्य तस्य वक्तुमशक्यत्वात्। न चास्यां मानाभावः। "पूर्वात्सपूर्वादिनिः (पा०सू०
५।२।८६) इत्येकयोगेन सिद्धे पृथग्योगकरणस्य मानत्वात्। न च "इष्टादिभ्य" (पा०सू०
५।२।८८) इत्यत्रानुवृत्त्यर्थं तथा पाठः। अत एवानिष्टीत्यादिसिद्धिरिति वाच्यम्। ज्ञापक-
परभाष्यप्रामाण्येनानिष्टीत्यादिप्रयोगाणामनिष्टत्वात्। एकयोगेऽपि तत्रैव स्वरितत्वबलेन
तावत एवोत्तरत्रानुवृत्तौ बाधकाभावाच्च। व्यपदेशिवद्भावस्य प्रातिपदिके निषेधस्वीकारादेव
"नान्तादसंख्यादेः—" (पा० सू० ५।२।४६) इति चरितार्थम्। अन्यथा पञ्चम इत्यादावपि

---

प्रामाण्यात् बहुच्पूर्वकस्य तस्यानभिधानेनादोषात्। केवलैकशब्दगोशब्दयोरिति। पूर्व-
ग्रहणमपहायैकशब्दगोशब्दयोः पञ्चम्या निर्देशे ताभ्यां परं यत्तदन्तादित्यर्थो यदि लभ्येत
तदा पूर्वग्रहणं व्यर्थमिति सामर्थ्याद्व्यपदेशिवद्भावाप्रवृत्तिसाधकमिति वक्तुं शक्यते। स
चार्थो दुर्लभः। सामानाधिकरण्येनैकशब्दगोशब्दरूपप्रातिपदिकादित्यर्थस्यैव सौगम्येनौ-
चित्यादित्याशयः।

ननु शतसहस्रान्ताच्च निष्कादित्युत्तरसूत्रे निष्कशब्दस्य सामानाधिकरण्येन
प्रातिपदिकसम्बन्धाभावात्तत्साहचर्यादिहाप्येकशब्दगोशब्दाभ्यां परं यत्तदन्तादित्यर्थस्सुलभ-
एवेति पूर्वग्रहणमभीष्टार्थसाधकं किं न स्यादत आह—सूत्रान्तात् ठगित्यादि।
भयाढ्यादाविवेति। अयं भावः तदन्तविधिनिषेधकं यद्वचनं तत्सर्वं विशेषणभाव-
व्यत्यासे तात्पर्यबोधकम्, साक्षाच्छास्त्रबाधापेक्षया एतादृशार्थस्यौचित्यात्। एवं-

---

के कारण प्रत्याख्यान हो जाने से। यदि कहो कि केवल सूत्रादि शब्द से ठगादि वारण फल है
तो नहीं कह सकते, "क्रतूक्थादि सूत्रान्ताट्ठक्" (४।२।६०) "तदस्मिन्नधिकमिति दशान्ताड्डः"
(५।२।४५) इत्यादि में अन्तग्रहण सामर्थ्य से व्यपदेशिवद्भाव की अप्रवृत्ति हो जाने से यदि कहो
तो इस अरुचि पर कहते हैं, 'एकगोपूर्वाट्ठञ्नित्यम्' इस सूत्र घटक केवल एक शब्द गो शब्द
से ठञ् की प्रवृत्ति न हो इसलिए "व्यपदेशिवद्भावोऽप्रातिपदिकेन" की आवश्यकता है, "सूत्रान्तात्
दशान्तात्" (५।२।४५) इसके लिये भी व्यपदेशिवद्भावोऽप्रातिपदिकेन की आवश्यकता है। कारण
वहाँ पर 'प्रत्ययविधौ' में तदन्त का निषेध हो जाने से तदन्त में सूत्र की प्रवृत्ति के लिये अन्तग्रहण
आवश्यक है, अतः अन्तग्रहण सामर्थ्य से 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' की अप्रवृत्ति होती है,
इसको नहीं कह सकते।

यदि कहो कि भयाढ्यादि की तरह "मेघर्तिभयेषु कृञः" यहाँ पर आढ्य सुभग यहाँ पर 'कर्मणि'
का अनुवर्तन करते हैं, भय और आढ्यादि को विशेषण बनाकर तदन्त विधि करते हैं। अन्यत्र
'कर्मणि' को विशेषण मेघादि को विशेष्य करने से मेघादि द्वारा तदन्तग्रहण नहीं होता। कारण तदन्त
विधि निषेध के वचन विशेष्य विशेषण भाव के व्यत्यास में तात्पर्य ग्राहक है, जिसमें तदन्तत्व इष्-

व्यपदेशिवद्भावेन संख्यादित्वात्तद्वैयर्थ्यं स्पष्टमेवेत्यरुचेराह—व्यपदेशिवद्भाव इत्यादि। दिव-उत्सूत्रं यत्रेति बहुव्रीहिणा तत्सूत्रघटिते पादे इत्यर्थः। एवं च "दिव उत्" (पा० सू० ६।१।१३१) इति सूत्रे हरदत्तेन "इन्द्रे च" (पा० सू० ६।१।१२४) इति सूत्रे कैयटेनोक्तमिति भावः। "येन विधिः—" (पा० सू० १।१।७२) इति सूत्रे कैयटेन सूत्रोपात्तान्तादिशब्दविषयतास्येति वदता स्पष्टमेव प्रत्ययविधिविषयतोक्ता। "असमासे निष्कादिभ्यः" (पा० सू० ५।१।२०) इति सूत्रे भाष्ये कैयटे च स्पष्टमनयोः प्रत्ययविधिविषयतोक्तेति दिक्। इत्याद्यपीति। आदिना सजूर्भ्यामिति।

---

निषेधविषये तदन्तविधिविधायकमपि तादृशतात्पर्यग्राहकमेव तथा च यत्र तदन्तत्वमिष्टं तस्य विशेषणत्वम्। यत्र नेष्टं तस्य विशेष्यत्वम् कल्पनीयम्। मेघर्तिभयेषु कृञ इत्यत्र (३।२।४४) आढ्यसुभग (३।२।५६) इत्यत्र कर्मणि इत्यनुवर्तते। तत्र उपपदविधौ भयाढ्याद्यन्तग्रहणाय "भयाढ्याद्यन्तग्रहणमिति" येनविधिः इति सूत्रभाष्ये प्रयोजनवार्तिकेन भयस्य, आढ्यादेश्च विशेषणत्वमिति तदन्तविधिः। अन्यत्र च कर्मणीत्यस्य विशेषणत्वम्, मेघादीनाञ्च विशेष्यत्वमिति न तैस्तदन्तग्रहणम्। तथा "सूत्रान्तात्" इत्यत्र सूत्रविशेषणतया यद्यपि तदन्तविधिर्भवितुमर्हस्ति तथापि तत्र "समासप्रत्ययविधौ" इत्यनेन सूत्रोपात्तस्य विशेष्यत्वम्। प्रातिपदिकादित्यस्य च विशेषणत्वम् एवेति नियम्यते इति न तद्वत् तदन्तविधिर्भवितुं शक्यते येनान्तग्रहणस्य सामर्थ्यं सूपपादं स्यात्।

---

है वह विशेषण, जिसमें तदन्तत्व इष्ट नहीं वह विशेष्य होता है। सूत्रान्त इत्यादि में विशेष्य विशेषण भाव के व्यत्यास से अर्थात् सूत्र को विशेषण करके तदन्तविधि सिद्ध है, अन्त ग्रहण सामर्थ्यात् व्यपदेशिवद्भावोऽप्रातिपदिकेन की अप्रवृत्ति हो जायगी तो नहीं "समासप्रत्ययविधौ प्रतिषेधः" इत्यादि निषेध सूत्र शब्दादि में विशेष्यत्व के तात्पर्य ग्राहक होने से विपरीत कथन अशक्य है। अर्थात् सूत्रादि विशेषण नहीं होंगे।

यदि कहो कि "व्यपदेशिवद्भावोऽप्रातिपदिकेन" इसमें कोई प्रमाण नहीं है तो नहीं कह सकते, "पूर्वात्पूर्वादिनिः" एक योग से सिद्ध रहा पृथक् सूत्र बनाना ही इस परिभाषा में प्रमाण है, यदि कहो कि "सपूर्वाच्च" की इष्टादिभ्यश्च में अनुवृत्ति करके 'अनिष्टी' इत्यादि साधुत्वार्थ पृथक् योग है तो नहीं, ज्ञापकप्रधान भाष्य प्रामाण्य से 'अनिष्टी' इत्यादि इष्ट न होने से। किञ्च 'एकयोग निर्दिष्टानां क्वचिदेकदेशोऽप्यनुवर्तते' परिभाषा का आश्रयण करके एक योग में भी सपूर्वात् इस अंश में स्वरितत्व प्रतिज्ञा के बल से उत्तर में अनुवृत्ति में कोई बाधक नहीं है। व्यपदेशिवद्भाव का प्रातिपदिक में निषेध स्वीकार करने से ही नान्तादसंख्यादि चरितार्थ होता है, अन्यथा पञ्चमः इत्यादि में भी व्यपदेशिवद्भाव से संख्यादि होने के कारण सूत्र वैयर्थ्य स्पष्ट है। तो इस अरुचि पर कहते हैं। "व्यपदेशिवद्भावोऽप्रातिपदिकेन" तथा "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति" ये दोनों परिभाषायें प्रत्ययविधि विषयक हैं इसको कैयट हरदत्त ने "दिव उत्" (६।१।१३१) सूत्र पर कहा है। इसका अभिप्राय है, दिव उत् सूत्र में बहुव्रीहि होने से "दिव उत्" सूत्र विशिष्ट पाद, तथा च दिव उत् सूत्र पर हरदत्त ने "इन्द्रे च" सूत्र पर कैयट ने कहा। "येन विधिः" (१।१।७२) इस सूत्र पर कैयट ने स्पष्ट कहा है, कि जहाँ पर अन्तादिशब्द का ग्रहण हैं, जैसे "सूत्रान्ताट्ठक्" 'दशान्ताड्डः' आदिपदेन 'एक गोपूर्वाट्ठञ्', ज्ञापक सजातीयापेक्ष होने से जो 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' परिभाषा के निषेध विषय है, वह विषय उसका भी होने से स्पष्ट हो गया प्रत्ययविधि विषयता इसमें है। "असमासे निष्कादिभ्यः" (५।१।२०) यहाँ पर भाष्यकार तथा कैयट ने स्पष्ट कहा है,

"भोभगो" (पा० सू० ८।३।१७) ॥ असन्धिः सौत्र इति । भगोअघोशब्दयो-रोकारस्याकारस्य च पूर्वरूपं सौत्रत्वान्नेत्यर्थः । यदि तु भोस्, भगोस्, अघोस्, इति सान्तं रान्तं वा अनुकृत्य भो इत्यादीनां त्रयाणामलोऽन्त्यस्य यः स्यादपूर्वस्य रोश्चेति व्याख्यायते, तर्हि असन्धिर्न्याय्य एव । युक्तं चैतत् । अन्यथा विभोरिदं-सुप्रभा गौर्यस्य स सुप्रभगुस्तस्य सुप्रभगोरिदं रघोरिदमित्यत्रापि यत्वापत्तेः । भवति ह्ययं भोशब्दादिपूर्वो रुः । न चात्र भोशब्दादेर्लाक्षणिकत्वादग्रहणम् । "विभाषा भवद्भगवदघवतामोच्चावस्य" इति वार्तिकेन निष्पन्नानां भवदादि-प्रकृतिकानां भोशब्दादीनामपि लाक्षणिकत्वाविशेषात् । अनर्थकत्वमप्युभयत्र तुल्यम् । रुविशिष्टानामेवार्थवत्त्वात् ।

---

ननु सान्तानुकरणे "विभाषा भवत्—" इति वार्तिकनिष्पन्नानां ग्रहणं न स्यादत आह—रान्तं वेति । कृतरुत्वानुकरणमित्यर्थः । अलोऽन्त्यस्येति । न च भो राजसे इत्यादौ "रो रि" इति लोपे कृते एकदेशविकृतन्यायेन भोः शब्दत्वादन्त्यस्यौकारस्य यत्वापत्तिरिति वाच्यम् । तेषामभिधाने एषां रोरपूर्वस्य च रोरिति व्याख्यानेनादोषो बोद्धव्यः । अत्र पक्षेऽघोशब्दान्तद्वंद्वे षष्ठ्याः सौत्रो लुक् बोद्धव्यः । अवधेयमिति । यदि "ग्रहोऽलिटि"

---

अभिधाने इति । स्वीक्रियमाणे इति शेषः एतेनानभिधानकल्पनयात्र समाधानेऽपि "भो राजन्" इत्यस्य दर्शनेनानभिधानकल्पनायाम्मानाभावः इति दर्शितम् ।

अपूर्वस्येति । अः पूर्वो यस्येत्यर्थः । एवञ्च "रोःसुपि" इति सूत्रस्थं रोरित्युभयत्र सम्बध्यते इति सिद्धम् । अत्रपक्षे = कृतरुत्वानुकरणपक्षे । अन्यथाऽपूर्वान्तिद्वन्द्वात् षष्ठी-कल्पने क्वचिद् वैयधिकरण्येन क्वचित्सामानाधिकरण्येनान्वयोदुर्घटः स्यादिति भावः । अत्र-पक्षइति कथनेनायम्पक्षो न युक्त इति ध्वनितम् ।

---

कि "व्यपदेशिवद्भावोऽप्रातिपदिकेन" तथा "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति" ये दोनों परिभाषायें प्रत्ययविधिविषयक है । तथा च परमसजूर्भ्याम् 'सजूर्भ्याम्' इत्यादि को रुत्व करने में कोई बाधक नहीं है । सजुष् शब्द में तदन्तविधि नहीं होती यह प्राचीनों का कथन आपात-रमणीय है ।

"भो भगो अघो अपूर्वस्य योऽशि" (८।३।१७) इस सूत्रान्तर्गत 'भगो अघो' तथा अघो अपूर्वस्य यहाँ पर "एङः" पदान्तादति से पूर्वरूप नहीं होता छन्दोवत् सूत्र होने से ।

यदि भोस्, भगोस्, अघोस्, यह सान्तानुकरण अथवा भोर्, भगोर्, अघोर, यह रान्तानुकरण करके, भो इत्यादि तीनों के अन्त्य अल् को यकार होता है, अपूर्वक रु सम्बन्धी रेफ को यकार होता है, अश् परे रहते, इस व्याख्यान में असन्धि न्यायतः प्राप्त है ।

सान्तानुकरण कहने से कार्य सम्पन्न हो जायगा "रान्तं वा" कहने का मनोरमाकार का तात्पर्य यह है कि केवल सान्तानुकरण स्वीकार करने पर "विभाषा भवद्" इत्यादि वार्तिक से निष्पन्न भो इत्यादि का ग्रहण नहीं होगा, उनका भी ग्रहण हो इसलिए 'रान्तं वा' यह कहा गया ।

रान्त का तात्पर्य है, कृतरुत्व तथा च कृतरुत्वानुकरण स्वीकार करने पर वार्तिक निष्पन्नों का तथा सान्तों का भी ग्रहण हो जायगा ।

यदि कहो कि "भो राजसे" इत्यादि में "रोरि" से लोप कर देने पर एकदेशविकृतन्याय से भोः शब्दत्व आ जाने पर "भो भगो" से यत्व होना चाहिये तो, नहीं भो राजसे इत्यादि को

ननुरोरुकारस्यानुबन्धत्वाद्रेफमात्रं विसर्गस्य स्थानि; तथा च "अनल्विधौ" इति स्थानिवद्भावो न स्यादित्याशङ्क्याह—न ह्ययमिति। यथाऽग्रहीदित्यत्र "ग्रहोऽलिटि" (पा० सू० ७।२।३७) इति दीर्घस्य स्थानिवद्भावेनेट्त्वात् "इट-ईटि" (पा० सू० ७।२।२८) इति प्रवर्तते। एवमिहापि विसर्गस्य रुत्वाद्यत्वं-प्रवर्तेतेति भावः। तथा च स्थानिवत्सूत्रे भाष्यम्—"विशिष्टं ह्येषोऽनलमाश्रयते इटंनाम" इति। इतोऽपि हेतोर्घात्वङ्गेत्यादिपरिगणनमशुद्धमित्यवधेयम्। निपाता-

---

(पा० सू० ८।२।२८) इति सूत्रे इटः स्थानित्वेन निर्देश इति तत्रानलाश्रयणं, प्रकृते तु विसर्गे रेफस्यैव स्थानित्वाद्वैषम्यं "अनल्विधौ" इत्यस्य स्थान्यल्वृत्तिधर्माश्रये स्थानि-सम्बन्ध्यल्वृत्तिधर्माश्रये च नेत्यर्थस्तत्र स्थान्यल्रेफवृत्ति रुत्वं स्थानिवत्त्वेन दुर्लभमलिव-धित्वात्स्पष्टं चेदं प्रकृतसूत्रे भाष्ये इत्युच्यते तदा पयःस्वित्यत्र यत्ववारणायाशीति। तत्र हि "रोः सुपि" (पा० सू० ८।३।१६) इति विसर्गः। नियमशास्त्राणां च[1] विधिमुखेनैव

---

तत्र = "इट ईटि" इति सूत्रे। प्रकृते = "भो भगो" इत्यत्र। वैषम्यम् = अलाश्रयणम्। यथा प्रकृतेऽलाश्रयणन्तथोपपादयति—अनल्विधौ इति। तत्र = देवाः सन्ति इत्यत्र। दुर्लभ-मिति = एवञ्च सिज्लोपविधायकं यद् "इट ईटि" इति ततोऽस्य वैषम्यं स्पष्टमिति।

---

आवश्यक होने से इनको स्वीकार कर लेने पर अर्थ होगा भोः इत्यादि के रु सम्बन्धी रेफ को तथा अपूर्वक रु सम्बन्धी रेफ को यत्व होता है। इस व्याख्यान में कोई दोष नहीं है कृतरुत्वानुकरण पक्ष में अघो शब्दान्त द्वन्द्व करके षष्ठी का सौत्रत्वात् लुक् समझना चाहिये। यह कथन युक्तियुक्त है। अन्यथा षष्ठ्यन्त विभुशब्द में 'विभोरिदम्' यहाँ पर, 'सुप्रभा गौर्यस्य सः सुप्रभगुस्तस्य, सुप्रभोरि-दम्, रखोरिदम्' यहाँ पर यत्व होने लगता। क्योंकि भोशब्दादिपूर्वक रु यहाँ पर भी है। अनुकरण करने पर उन्हीं का ग्रहण होगा, कोई दोष नहीं। यदि कहो कि विभोरिदम् इत्यादि में भो शब्द लाक्षणिक है अतः ग्रहण नहीं होगा, तो नहीं, कारण "विभाषा भवद्भगवदघवतामोच्चावस्य" इसका अर्थ होता है। भवद् भगवद् अघवद् इनको रु होता है और अव शब्द को ओकारादेश है सामान्येन वेद अथवा लोक में। यह "मतुवसोरु सम्बुद्धौ छन्दसि" (८।३।१) पर वृत्ति में स्पष्ट है। तथा च इस वार्तिक से निष्पन्न भवदादिप्रकृतिक भोः शब्दादि में भी लाक्षणिकत्व आ जाने से। अनर्थकत्व भी दोनों में तुल्य है। रु विशिष्ट में ही अर्थवत्त्व है।

देवास् सन्ति यह स्थिति रहने पर सकार को "ससजुषोः रुः" से रुत्व अनुबन्धलोप हो जाने पर "भोभगो अघो अपूर्वस्य" में अश् ग्रहण होने से यहाँ पर अश् परत्वाभाव होने से "भो भगो अघो अपूर्वस्य" से यत्व नहीं होता, अपितु "खरवसानयोर्विसर्जनीयः" से विसर्ग तथा "विसर्ज-नीयस्य सः" से सत्व हो जाने से देवास्सन्ति का साधुत्व होता है। यह अश् ग्रहण का फल है।

---

१. विधिमुखेनैवेति। नियामकशास्त्राणां द्विधाप्रवृत्तिः, विधिमुखेन निषेधमुखेन च तत्र यदि नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यम्, नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकञ्च यद्रूपं तद्रूपाव-च्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचे नियामकशास्त्रस्य विधिमुखेन प्र-वृत्तिः, यथा पदत्वयोग्यपूर्वोत्तरभागघटितसमुदायत्वावच्छिन्नातिरिक्तत्वेन अर्थवत् सूत्रीयार्थवत्त्वावच्छिन्ने संकोचे वाक्यस्येव समासस्यापि प्रातिपदिकत्वाप्राप्त्या विधिमुखेन प्रवृत्तिः। निषेधमुखेन प्रवृत्तौ तु नियामकशास्त्रीयोद्देश्यताप्रयोजकपदस्य स्वार्थभिन्नं यत् नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्य-

इति। "भोभगो—" (पा० सू० ८।३।१७) इति सूत्रे निर्दिष्टाश्वादेराकृतिगण-त्वात्तत्र बोद्धयाः। तथा च "विभाषा भवद्भगवत्" इति वार्तिकं नाश्रणीयम्।

---

प्रवृत्तिरिति तत्र रुविशिष्टः स्थानीति तद्वृत्तिरुत्वस्य स्थानिवत्त्वेन लाभः सुकरः। यदि तु "रोः सुपि" (पा० सू० ८।३।१६) इत्यत्रापि "रुः" इत्यनुवर्त्य रोः रेफस्यैव तेन विसर्ग-स्तदाऽश्ग्रहणमुत्तरार्थं सत्स्पष्टार्थमिहैव कृतमित्यवधेयम्। तत्रेति। चादिष्वित्यर्थः वार्त्तिकं-नाश्रयणीयमिति। भो इत्यादिप्रयोगाणां निपातैरेव सिद्धेः। निपातानामपि सम्बोधनान्त-

---

यदि कहा जाय कि विसर्ग यत्व की प्राप्ति रहने पर यत्व विसर्ग की दृष्टि से असिद्ध हो जाने के कारण विसर्ग ही होगा, यत्व व्यावर्तन करने को अश् ग्रहण है यह कथन अनुपयुक्त है तो नहीं क्योंकि यत्व को विसर्ग की दृष्टि में असिद्ध हो जाने पर विसर्ग हो जाने पर भी विसर्ग में स्थानि-वद्भाव से रुत्व आजाने पर यत्व दुर्वार है उसको व्यावर्तन करने के लिये अश्ग्रहण किया गया।

यदि कहो कि रु का उकार अनुबन्ध है, अतः रेफमात्र विसर्ग का स्थानी है तथा च अनल्विधौ यह निषेध लग जाने से स्थानिवद्भाव नहीं होगा तो नहीं कह सकते, जैसे अग्रहीत् यहाँ पर "ग्रहोऽ-लिटि" करके इट् को दीर्घ हो जाने पर स्थानिवद्भाव से दीर्घ में इट्त्व आ जाता है, और "इट ईटि" (७।२।२८) से सकार का लोप हो जाता है। उसी प्रकार यहाँ पर भी स्थानिवद्भाव से विसर्ग में रुत्व आ जाने से यत्व हो जायगा। स्थानिवत् सूत्र पर भाष्यकार ने लिखा है—यह "इटईटि सकारलोप में विशेष अनल् इट् नामक समुदाय का आश्रयण करता है, इडादेश ईट् का यह असङ्ग्रह होने से धात्वङ्ग इत्यादि परिगणन ठीक नहीं। यदि कहो कि "ग्रहोऽलिटि" इस सूत्र में इट् का स्थानित्वेन उच्चारण होने के कारण वहाँ पर अनलाश्रयण है, यहाँ पर तो विसर्ग में रेफ का स्थानिवद्भाव करते हैं यह वैषम्य है तो नहीं, अनल्विधौ का अर्थ होता है, "स्थानिरूपो योऽल्

---

नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकरूपावच्छिन्नं तत्रभवतीत्यस्य न भवतीत्यर्थे लक्षणा यथा समासभिन्नं यत्पदत्वयोग्यपूर्वोत्तरभागघटितसमुदायत्वावच्छिन्नं तत्प्रातिपदिकसञ्ज्ञं न भवति इत्यर्थेन वाक्यस्य प्रातिपदिकत्वाभावः समासस्य च तत्त्वं सिद्ध्यति, तत्र सति सम्भवे विधिमुखेनैव प्रवृत्तिः निषेधमुखेन प्रवृत्तेः स्वार्थहानिः, परार्थकल्पना, शास्त्रबाधरूपदोषत्रयग्रस्तत्वात्। विधिमुखेनप्रवृत्तौ, निषेधार्थकत्वं तु उक्तरीत्या सङ्कोचेन फलितार्थमादायैव।

यत्र तु विधिमुखेन प्रवृत्तौ शास्त्रवैयर्थ्यम् स्नुषाश्वश्रून्यायप्रसङ्गः तत्रागत्या निषेधमुखेनैव प्रवृत्तिः। यथा "हन्तेरत्पूर्वस्य" इत्यत्र अत्पूर्वस्येति नियमस्य। 'हन्तेः' इति शास्त्रीयोद्देश्यतावच्छेदकव्याप्यं नियामक—"अत्पूर्वस्य" इत्येतच्छास्त्रीयोद्देश्यतावच्छेदक व्यापकञ्च रूपं हन् धात्ववयवनत्वम्, हन्धात्ववयवाकारपूर्वकनत्वं वा। तत्राद्यधर्मावच्छिन्नातिरिक्तत्वेन सङ्कोचे "हन्ते"; इति शास्त्रस्य लक्ष्यमेव किमपि न स्यादिति तद्वैयर्थ्यापत्तिः। द्वितीयधर्मावच्छिन्नातिरिक्तत्वेन तु 'प्रहण्यात्' इत्यादौ 'हन्तेः' इत्यस्य प्राप्तिं वारयित्वा 'अत्पूर्वस्य' इत्यनेन णत्वं, नतु प्रघ्नन्ति इत्यत्रेति 'हन्तेः' इति प्राप्तणत्ववारणान्नान्यत् किमपीति "स्नुषाश्वश्रून्यायविरोधः"। तथा चोभयथाऽपि संकोचासम्भवेन विधिमुखेन प्रवृत्तिसम्भवो नास्ति अतस्तत्रागत्यानिषेधमुखेन प्रवृत्तिः। तत्र च "अत्पूर्वस्य" इत्यस्य अत्पूर्वभिन्नहन्धात्ववयवनस्य णत्वं नेत्यर्थं इति 'प्रघ्नन्ति' इति सिद्धम्, 'प्रहण्यात्' इत्यत्र तु 'हन्तेः' इत्यनेन णत्वमिति उभयोर्योगयोः सार्थक्यम्। यत्र तु विधिमुखेन प्रवृत्तिः सम्भवति तत्र न निषेध-मुखेन प्रवृत्तिः स्वीकार्यादोषत्रयापत्तेः। किन्तु विधिमुखेनैव। एवञ्च प्रकृते "रोः सुपि", "इत्यत्र" सप्तमीबहुवचनाव्यवहितपूर्वत्वविशिष्टरेफातिरिक्तत्वेन "खरवसानयोः" इत्यत्र संकोचेन विधिमुखेन प्रवृत्तिः सम्भवतीति "रोः सुपि" इत्यस्य विधिमुखेनैव प्रवृत्तिः स्वीकार्येति तदाशयः।

अन्यथा पुँल्लिङ्गैकवचनमात्रे भो हरे इत्यादिसिद्धावपि भो हरिहरौ, भो विद्वद्-वृन्द, भो गङ्गे, इत्यादि न सिद्ध्येदिति भावः। एतच्च वृत्तिहरदत्तादिमतेनोक्तम्। भाष्यस्वरसरीत्या तु "विभाषा-" इत्यादिवार्तिकमारब्धव्यमेव। किं तु निपातोऽपि भोः शब्दोऽस्ति, तेन द्विवचनादौ स्त्रीनपुंसकयोश्च न दोषः। युक्ततरं चैतत्। हे भवन्नितिवत् हे भो इति प्रयोगस्यापीष्टत्वात्। तस्य च वार्तिकारम्भ एव सिद्धेः। "स्युः प्याट्पाडङ्गहैहेभो" इत्यमरोक्तानां सम्बोधनार्थानां निपातानां सह प्रयोगा-

---

भवदादिसमानार्थकत्वात्सम्बोधनविभक्त्यन्तत्वेनामन्त्रितत्वमस्ति। "भवदादि" इत्यत्र भोः शब्दस्याप्यादिना ग्रहणात्तत्र भो इत्यादिसिद्धिरिति भावः। अन्यथा=साधारणानाम-भावे। भो विद्वद्वृन्देति। नपुसके सोर्लुका लुप्तत्वेन वार्तिकाप्रवृत्तेरिति भावः। भो गङ्गे इति। विभक्तौ लिङ्गविशिष्टाग्रहणान्ङीपा व्यवधानाद्भवतः सम्बुद्धिपरत्वाभावेनेति भावः। स्युः प्याडिति। "स्युः प्याड्—" इत्यस्य निपातमात्राङ्गीकारे इत्यादिः। ननु निपातोऽप्ययं

---

विभक्ताविति। गङ्गापदेन सामानाधिकरण्यात् तस्यस्त्रीलिङ्गत्वेन ततोऽपि स्यादिति तात्पर्यम्।

---

तद्वृत्ति धर्मनिमित्तके विधौ न स्थानिवत्"। अथवा स्थान्यंवयवाल्वृत्तिधर्मनिमित्तके विधौ न स्थानिवत्। स्थानिरूप जो अल् रेफ, तद्वृत्ति धर्म निमित्तक कार्य करने में स्थानिवद्भाव नहीं होगा, अतः स्थानिवत्वेन रुत्व नहीं आयेगा, अनल्विधौ निषेध लग जाने से, "भो भगो" सूत्र के भाष्य में स्पष्ट है, तो पयः सु यहाँ पर यत्व वारण करने के लिये अश् ग्रहण करना चाहिये। यहाँ पर "रोः सुपि:" से विसर्ग हुआ है। "रोः सुपि:" इस नियम शास्त्र की विधिमुखेन प्रवृत्ति होने से "खरवसानयो:" यहाँ पर सप्तमी बहुवचनाव्यहित पूर्वत्व विशिष्ट रेफातिरिक्तत्वेन संकोच होने से 'रोः सुपि' से विसर्ग होगा, स्थानिता में अल्त्वव्याप्यधर्मावच्छिन्नत्वाभाव होने से स्थानिवद्भाव से रुत्व आ जायगा। यदि "रोः सुपि" ( ८।३।१६ ) यहाँ पर रेफ का अनुवर्तन करके रु के रेफ को ही "रोः सुपि" से विसर्ग होता है तो अश् ग्रहण "हलि सर्वेषाम्" इत्यादि के लिये है स्पष्टता ज्ञापन करने को यहाँ पर ही अश् ग्रहण कर लिया गया।

"भो भगो" इस सूत्र में उच्चारित जो भोस् भगोस् अघोस् इनमें निपातत्व रहेगा, चादि को आकृति गण होने से। अतः "विभाषाभवद्भगवत्" इस वार्तिक का आश्रयण नहीं करना चाहिये, निपातों से ही भो इत्यादि प्रयोगों का साधुत्व हो जायगा। निपातों को भी सम्बोधनान्त भवदादि-समानार्थक होने से सम्बोधन विभक्त्यन्त होने के कारण "सामन्त्रितम्" ( २।३।४८ ) से आमन्त्रित सञ्ज्ञा हो जायगी पञ्चमी सप्तमी विभक्त्यन्तेतर से भी तसिलादि देखे जाते हैं, इत्यर्थक "इतराभ्योऽपि दृश्यन्ते" इस सूत्र पर पठित वार्तिक "दृशिग्रहणाद्भवदादि योगे एव" इस वार्तिक में भवदादि घटक आदि शब्द से भोः शब्द का भी ग्रहण हो जाने से "तत्र भोः" इत्यादि की सिद्धि हो जायगी विभाषाभवदित्यादि वार्तिक करने की कोई आवश्यकता नहीं। वार्तिक को ही स्वीकार करने पर अर्थात् साधारण न मानने पर पुल्लिंग के एकवचन मात्र में "भो हरे" इत्यादि की सिद्धि हो जाने पर भी "भो हरिहरौ' यहाँ पर सम्बुद्धिपरे न रहने से भो विद्वद्वृन्द यहाँ पर नपुंसक लिङ्ग में सु 'का' लुक् होने के कारण वार्तिक की अप्रवृत्ति होने से रूप सिद्ध नहीं होगें। भो गङ्गे यहाँ पर विभक्त्युद्देश्यक विभक्ति निमित्तक सर्वविधविभक्ति सम्बन्धी कार्य करनेपर लिङ्गविशिष्ट का अग्रहण होता है—इत्यर्थक "विभक्तौ लिङ्गविशिष्टाग्रहणात्" इस परिभाषा के बल से 'भोः' यहाँपर स्त्रीलिङ्गविशिष्ट का ग्रहण न होने से, गङ्गाशब्द सामानाधिकरण्य होने से ङीप् होने लग जायगा, तथा च ङीप् व्यवधान होने से

योगात्। किं चात्रभवान् हरिस्तत्रभवान् इतिवत् तत्र भो इत्याद्यपि वार्तिके सत्येव सिद्धयति। "इतराभ्योऽपि दृश्यन्ते" (पा० सू० ५।३।१४) इति सर्वविभक्त्यन्तात्त्रतसोभवदादियोग एवेष्टत्वात्। किञ्चामन्त्रितत्वे पदात्परस्याष्टमिकनिघातः। "आमन्त्रितं पूर्वम्–" (पा० सू० ८।१।७२) इत्यविद्यमानवद्भावः।

---

भवच्छब्दसमानार्थएवेति हे भो इत्यस्य नासङ्गतिः। अत एव भाष्यकैयटयोर्वार्त्तिकसिद्धविभक्त्यन्तप्रतिरूपकमव्ययमित्युक्तं, विभक्त्यन्तप्रतिरूपकत्वं च शब्दतोऽर्थत इत्यन्यत्र स्पष्टम्। किं च व्य तिलुनीत इत्यादिवदेतयोरपि सहप्रयोग सम्भव इत्यरुचेराह—किं चेति। पदात्परस्येति। इदं च न भोः शब्दे फलमुभयोरपि भोः शब्दयोः सम्बोधनप्रथमान्तत्वेनामन्त्रितत्वात्। किं तु तिष्ठसि भगो, तिष्ठसि अघो इत्यादौ भगवन्, अघवन् तिष्ठसीत्यर्थके "आमन्त्रितस्य–" इति निघातसिद्धिः। निपातयोस्तु तयोः सम्बोधने शक्तौ मानाभावेन सम्बोधनप्रथमान्तत्वाभावेनामन्त्रितत्वाभावात्। भगो तिष्ठसीत्यादौ अविद्यमानत्वम्। 'आम् भगो देवदत्त' इत्यादौ एकान्तरता। भगो, भगो आगच्छ इत्यादौ द्विर्भावः।

---

ननु शब्दत एव विभक्तिप्रतिरूपकत्वमस्तु तावतापि भाष्योपपत्तिर्भविष्यतीत्यत आह—विभक्त्यन्तेति। अर्थतश्चेति विनिगमनाविरहादुभयं विवक्षितमितिभावः। अयंभावः "उपसर्गविभक्तिस्वरप्रतिरूपकाश्च" इत्यत्र स्वरांशेऽर्थतः प्रतिरूपकत्वं न सम्भवतीति शब्दतः प्रतिरूपकत्वं गृह्यते तत्साहचर्यादन्यत्रांशेऽपि शब्दत एव प्रतिरूपकत्वमिति तु न वाच्यम् समकालवाचकयुगपच्छब्दस्य युगं पततीति युगपत् इति व्युत्पत्त्या सिद्धशब्दतोविभक्त्यन्तप्रतिरूपकत्वेन वार्त्तिकेनैव सिद्धेस्तस्य गणे पाठवैयर्थ्येन शब्दतोऽर्थतश्च प्रतिरूपकत्वग्रहणज्ञापनात्। प्रतिरूपकत्वम् = सादृश्यम्।

---

सम्बुद्धिपरत्वाभाव होने से प्रयोग साधुत्व नहीं होगा। यह वृत्तिकार तथा हरदत्तादि के मत से कहा। भाष्यकार की रीति से तो "विभाषा" इत्यादि वार्तिक की आवश्यकता है ही। किन्तु निपात भी भो शब्द है। इससे, द्विवचन, स्त्रीलिङ्ग, तथा नपुंसक लिङ्ग में दोष नहीं है, यह श्रेष्ठतम है। हे भवन्, इसकी तरह, हे भोः यह भी इष्ट है, इसका साधुत्व वार्तिक रहने पर ही होगा, क्योंकि भोः को निपातमात्र अङ्गीकार करने पर स्युः प्यात् पाट् अङ्ग है हे भोः इत्यादि सम्बोधनार्थक निपातों का अर्थात् हे भोः इत्यादि का सहप्रयोग नहीं होगा।

यदि कहो निपात भी भवत् शब्द समानार्थक ही है, अतः हे भोः यह असङ्गत नहीं है, इस निपात को भवत् शब्द समनार्थक होने के कारण ही, भाष्य कैयट में वार्तिक सिद्ध विभक्त्यन्त प्रतिरूपक अव्यय हैं यह कहा। विभक्त्यन्त (तुल्यता) प्रतिरूपकता विनिगमनाभाव होने से शब्द से तथा अर्थ से उभयतः ली जाती है। किञ्च जैसे व्यतिलुनीते इत्यादि में व्यतिहार विशिष्ट क्रियावाचक लूञ् धातु का द्योतक आत्मनेपद तथा उपसर्ग का साथ में प्रयोग होता है तथा सम्बोधन वाचक भो शब्द का और तद्द्योतक हे शब्द का सह प्रयोग हो जायगा तो इस अरुचि पर कहते हैं।

किञ्च अत्रभवान् हरिः तत्र भवान् इसकी तरह "तत्रभोः" यह वार्तिक रहने पर सिद्ध होगा, क्योंकि "इतराभ्योऽपिदृश्यन्ते" (५।३।१४) इससे सर्वविभक्त्यन्त से त्रल् और तस् भवदादि योग में ही इष्ट है। किञ्च सम्बोधन में जो प्रथमा तदन्त की आमन्त्रित संज्ञा होती है। इत्यर्थक "सामन्त्रितम्" (२।३।४८) से आमन्त्रित संज्ञा कर देने पर। पद से परे पाद के आदि में स्थित न हो ऐसा जो

आमएकान्तरम्–" ( पा० सू० ८।१।५५ ) इति विधिः। "वाक्यादेरामन्त्रितस्य–" ( पा० सू० ८।१।८ ) इति द्विर्भावः। "सुबामन्त्रिते" ( पा० सू० २।१।२ ) इति पराङ्गवद्भावश्चेत्यादि सर्वं सिद्धयति, न त्वन्यथेति दिक्। भगो, अघो इति निपातावपि यदि प्रमाणिकौ तर्हि स्तान्नाम। आमन्त्रितकार्यसिद्धिस्तु वार्तिकाऽऽयत्तैवेति सुधीभिराकलनीयम्।

---

धनेन भगो इत्यादौ पराङ्गत्वमिति भावः। यदि प्रामाणिकाविति। यदीत्यनेनेदं सूचितं–तौ न प्रामाणिकौ। अत एव भाष्ये "विभाषा भवत्–" इति व्याख्याय भो ब्राह्मणाः भो ब्राह्मणीत्यस्यैवासिद्धिमाशङ्क्याऽन्यथमेष भोः शब्दो विभक्तिप्रतिरूपकत्वादित्येवोक्तम्। एवं च भगो हरिहरावित्याद्यसाध्वेव।

---

सुधीभिराकलनीयमिति। ननु भवच्छब्दस्थानिकैर्भो इत्यादिभिर्भो हरे इत्यादीनां सिद्धावपि, भो हरिहरौ, भो गङ्गे, भो विद्वद्वृन्देत्यादिषु क्वचित्सम्बुद्धिपरत्वाभावेन क्वचित् ङीपा व्यवधानेन विभाषाभवदिति वार्तिकस्याप्रवृत्या उक्तरूपसिद्ध्यर्थं निपातानामावश्यकत्वम्। एवञ्चैतैरेव सर्वत्र निर्वाहे वार्तिकं नाश्रयणीयम्, न च तत्रभवान् इतिवत् तत्रभोरित्यादीनां वार्तिकारम्भे एव सिद्धिः, "इतराभ्योऽपि दृश्यन्ते" इत्यस्य भवदादियोग-एवेष्टत्वादितिवाच्यम् भवदादीत्यत्र भोः शब्दस्याप्यादिना ग्रहणाद्दोषाभावः। आमन्त्रित-कार्यसिद्धिरपि न फलम् प्रकृतसूत्रस्थप्रामाण्येन निपातानामपि सम्बोधनान्तभवदादि समानार्थकत्वात्सम्वोधनविभक्त्यन्तत्वेन आमन्त्रितत्वात् वार्तिकाभावे हे भो इत्यादिप्रयोगो-न स्यात्।

---

आमन्त्रित उसको सर्वानुदात्त होता है, इत्यर्थक "आमन्त्रितस्य च" ( ८।१।१९ ) से निघात होता है। यह फल भोः शब्द में नहीं है क्योंकि दोनों भोः शब्दों को सम्बोधन विभक्त्यन्त होने से आमन्त्रितत्व रहेगा। किन्तु भगवन् तिष्ठसि अघवन् तिष्ठसि इत्यर्थक तिष्ठसि भगोः, तिष्ठसि अघोः इत्यादि में निघात करना निपातातिरिक्त का फल है। निपात जो भगोः अघोः इनकी सम्बोधन शक्ति में प्रमाणाभाव होने से सम्बोधन प्रथमान्तत्वाभाव होने से आमन्त्रितत्वाभाव रहेगा। क्योंकि भोः शब्द में ही 'विभाषा' इति वार्तिक सिद्ध विभक्त्यन्त प्रतिरूपकता है, यह भाष्य कैयट में कहा गया है। भगोः अघोः में नहीं। भगोः तिष्ठसि इत्यादि में "आमन्त्रितपूर्वमविद्यमानवत्" ( ८।१७२ ) से अविद्यमानवद्भाव हो जाने से तिङन्त निघात नहीं होता। निपातारिक्त भगोः रहने पर ही अविद्यमानवद्भाव होगा।

"आम् देवदत्त भगोः" इसमें भगोः यहाँ पर "आमन्त्रितस्य" ( ८।१।१९ ) से प्राप्त जो अनुदात्त है, उसका "आम्" से परे एकव्यवधायक रहने पर आमन्त्रित अनुदात्त नहीं होता, इत्यर्थक "आम एकान्तरमामन्त्रितमनन्तिके" (८।१।५५) से प्रतिषेध सिद्ध होता है। यदि कहो कि देवदत्त का अविद्यमानवद्भाव हो जाने पर एकान्तरता नहीं प्राप्त है तो नहीं कह सकते, "नामन्त्रितेसमानाधिकरणे" से अविद्यमानवद्भाव का प्रतिषेध हो जाने से। निपातातिरिक्त भगोः रहने पर ही यह फल होगा। आम् यह अङ्गीकार अर्थ में है। 'भगो भगो आगच्छ' यहाँ पर "वाक्यादेरामन्त्रितस्यासूया-संमतिकोपकुत्सनभर्त्सनेषु" (८।१।८) से आमन्त्रित को द्वित्व नहीं होगा, 'भगो आगच्छ' शब्द रत्न में द्विर्भावप्रवृत्ति योग्य उदाहरण लिखा है। 'धनेन भगोः' इसका अर्थ होता है धन से ऐश्वर्यवान्। यहाँ पर 'स्वर' कर्तव्यता रहने पर आमन्त्रित वाच्यार्थका जो निमित्त उसको कहनेवाला जो सुबन्त उसका पराङ्गवद्भाव होता है। "इत्यर्थक सुबामन्त्रिते पराङ्गवत्स्वरे" (२।१।२) से पराङ्गवद्भाव निपातातिरिक्त

यत्तु वदन्ति-सकारान्तानेवैतान् निपातानास्थाय रुत्वौत्वे भाष्ये प्रत्याख्याते इति, तदतिरभसात्। स्यादेतत्। निपातानामभ्युपगमे यत्वविधौ त एव गृह्येरन् प्रतिपदोक्तत्वात्। न तु सम्बुद्ध्यन्ताः लाक्षणिकत्वादिति चेन्मैवम्। "स्वरितेनाधिकारः" (पा० सू० १।३।११) इत्यत्राधिकः कारोऽधिकार इति व्याख्यानमाश्रित्य लक्ष्यानुरोधेन स्वरितत्वमाश्रित्योभयग्रहणात्। "भुवश्च महाव्याहृतेः"

---

तदतिरभसादिति। "भोभगो—" (पा० सू० ८।३।१७) "मतुवसोः—" (पा० सू० ८।३।१) इति सूत्रयोरस्यार्थस्य भाष्येऽस्पृष्टत्वादिति भावः। उभयग्रहणादिति। वार्त्तिकबोधितसाधुत्वानामपि "कुलटाया वा" (४।१।१२७) इत्यादौ कार्यान्तरबोधनाय सूत्रकृता-

---

उभयोः समानार्थकत्वादित्यादिप्रत्युक्तम् किञ्च व्यतिलुनीते, इत्यादिवदुभयोः प्रयोगसम्भव इति चेन्न अव्ययम् एषमोशब्दो विभक्तिप्रतिरूपकत्वात् इति भाष्यात् मो शब्दस्य भवच्छब्दसमानार्थकत्वकल्पनेनामन्त्रितत्वेऽपि इतरयोस्तत्कल्पने मानाभावात्, तिष्ठसि भगो, तिष्ठसि अघो इत्यत्रामन्त्रितस्येत्याष्टमिकनिघातः, भगो तिष्ठसि इत्यादावामन्त्रितपूर्वमित्यविद्यमानवद्भावः। आम देवदत्त भगो इत्यादावामन्त्रितस्येति प्राप्तनिघातस्वरस्य आमएकान्तरमामन्त्रितमनन्तिके इति प्रतिषेधः। नचात्र देवदत्तस्याविद्यमानवद्भावेनैकान्तरता प्राप्नोतीति वाच्यम् 'नामन्त्रिते समानाधिकरणे' इतिसूत्रेणाविद्यमानभावस्य निषेधात्। शब्दरत्नोक्तभगो देवदत्तेतिपाठे तु फलं चिन्त्यम्। भगो भगो आगच्छेदित्यादौ वाक्यादेरामन्त्रितस्येति द्विर्भावः धनेन भगो इत्यादौ सुबामन्त्रितेपराङ्गवत्स्वरे इति पराङ्गत्वम्। न च षष्ठ्यामन्त्रितकारकवचनमिति परिगणनेनात्र धनस्यामन्त्रितं प्रति करणत्वाभावादप्राप्तिरिति वाच्यम् मतुबर्थसत्तादिरूपकरणत्वेनादोषात्। इति कार्याणि वार्तिकसत्त्वे एव सिद्ध्येयुरिति।

---

भगोः रहने पर ही होगा। मत्वर्थसत्ता में धन का करणत्वेन अन्वय होने से आमन्त्रित के प्रति कारकत्व है, अतः पराङ्गवद्भाव हो जायगा। यह सब वार्तिक रहने पर ही सिद्ध होगें। भगोः अघोः' यदि निपात भी प्रामाणिक है तो रहें, आमन्त्रित कार्यों की सिद्धि तो वार्तिक के मानने पर ही होगी। यदि के कथन से प्रतीत होता है, कि 'भगोः अघोः' प्रामाणिक निपात नहीं है। इसलिए भाष्य में "विभाषा भवद्" इसकी व्याख्या करके मोः ब्राह्मणी इसकी असिद्धि की आशङ्का करके कहा "अव्ययमेषमोशब्दः विभक्तिप्रतिरूपकत्वात्"। अर्थात् यह मोः शब्द विभक्त्यन्त तुल्य अव्यय है। अतः "भगोः हरिहरौ" यह असाधु है। जो कहते हैं कि सकारान्त निपात ही भाष्यकार ने स्वीकार किया है, रुत्व ओत्व का भाष्यकार ने प्रत्याख्यान कर दिया, यह अत्यन्त शीघ्रता का कथन है, क्योंकि "भोभगो" (८।३।१७) "मतुवसोः" (८।३।१) इन सूत्रों पर इस अर्थ का भाष्यकार ने स्पर्श ... नहीं किया। यदि कहो कि निपातों को स्वीकार करने पर यत्वविधि में उन्हीं का ग्रहण होगा। प्रतिपदोक्त होने से, सम्बुद्ध्यन्तों का नहीं लाक्षणिक होने से तो नहीं कह सकते, "स्वरितेनाधिकारः" यहाँपर "अधिक करने को अधिकार कहते हैं", इस व्याख्यान का आश्रयण करके लक्ष्यानुरोध से उसमें स्वरितत्व प्रतिज्ञा करके अधिक कार्य अर्थात् दोनों का ग्रहण हो जायगा।

यदि कहो कि सूत्र बनाते समय वार्तिक तो थे नहीं, तथा च तद्बोधित साधुत्व का अनुकरण असम्भव है, अतः कैसे दोनों का ग्रहण होगा तो नहीं कह सकते, वार्तिक बोधित साधुत्वों का "कुलटाया वा" इत्यादि में कार्यान्तरबोध करने के लिये सूत्रकार के अनुवाद करने से। अर्थात् "शकन्ध्वादिषु" से बोधित साधुत्व का अनुवाद कुलटा में पररूप करके किया तथा च एकदेश में प्रमाण मिल

( पा० सू० ८।२।७१ ) इति सूत्रे महाव्याहृतिग्रहणं लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वज्ञापनार्थमिति हरदत्ताद्युक्तेश्च । न चैवमपि प्रभोरित्यादावतिव्याप्तिः । परस्परसाहचर्येण निपातानां वार्तिकोक्तानां च ग्रहणेऽप्यन्येषामग्रहणात् ।

"व्योर्लघु" ( पा० सू० ८।३।१८ ) लघुप्रयत्नतरः लघूच्चारणतरः । स चान्तरतम्याद्वस्य वोयस्य य इत्याह—वयाविति ।

---

ऽनुवादस्य करणादिति भावः । हरदत्तेति । एवं चानित्यत्वात्तदप्रवृत्तौ उभयोर्ग्रहणसिद्धिरिति भावः । "विभाषा भवत्—" इति वार्तिके भो ब्राह्मणाः, भो ब्राह्मणि, इत्यसिद्ध्याशङ्कायामव्ययमेष भोः शब्द इति सिद्धान्तेनोभयोरत्र ग्रहणलाभादिति बोद्ध्यम् । परस्परसाहचर्येणेति । तेन चार्थवतामेव ग्रहणमिति भावः । अर्थवत्परिभाषयेत्यपि बोद्ध्यम् । अन्येषाम्—अनर्थकानां । सान्तरान्तान्यतरानुकरणमिति पक्षे प्रसिद्ध्या भो इत्यादिपूर्वकरेफान्तानामेवार्थवतां ग्रहणस्य न्याय्यतया भो इत्याद्योकारान्तानुकरणपक्षेऽपि वार्तिकनिष्पन्नानां निपातानां चैकदेशभूतभोशब्दादीनामेव ग्रहणमिति भावः । अत्रेदन्तत्त्वं—रान्तानामेवानुकरणं सूत्रे सन्ध्यभावो न्याय्य एवेति भाष्यस्वरसः ।

लघूच्चारणतरः । लघुतरोच्चारणः ।

---

व्योर्लघु इति । यद्यपि वर्णसमाम्नाये यस्य प्राथम्यात् य्वोरित्युचितं तथापि ( "लोपो व्यो" पा० सू० ६।१।६६ ) इति लोपवारणाय सौत्रत्वमाश्रयणीयं स्यादतो-व्योरित्युक्तम् ।

लघुप्रयत्नतर इति । लघुतरः प्रयत्नो यस्योच्चारणे स लघुप्रयत्नतरः । अन्यपदार्थसम्बन्धोत्तरं वर्त्तिपदार्थप्रकर्षविवक्षया साधुः । प्रयत्ने लघुतरत्वं चैषां शैथिल्यजनकत्वमेव ।

शुक्लतरः पट इत्यादावपिविशेषणप्रकर्षविवक्षया साधुत्वस्य सर्वत्र दर्शनात् । एवञ्च "शिखीध्वस्तः" इतिवत् साधुत्वमस्येति बोध्यम् ।

---

जाने के कारण, वार्तिकों के अपूर्वत्वाभाव बोधन द्वारा तत्साध्य प्रयोगों का साधुत्व सूत्रकार ने ही किया, यह बोधित होता है । और "भुवश्च महाव्याहृतेः" ( ८।२।७१ ) इस सूत्रपर महाव्याहृतिग्रहण लक्षण प्रतिपदोक्तपरिभाषा को अनित्यत्व ज्ञापन करने के लिये हैं, यह हरदत्त ने कहा । तथा च अनित्य होने से 'लक्षणप्रतिपदोक्त' परिभाषा के अनित्य होने से अप्रवृत्ति हो जाने पर दोनों का ग्रहण होगा । "विभाषा" इस वार्तिक पर भोः ब्राह्मणाः, भोः ब्राह्मणि, इनकी असिद्धि की आशंका करके अव्यय यह भोः शब्द है यह सिद्धान्त होने से दोनों का ग्रहण होगा । लक्षण प्रतिपदोक्त परिभाषा को अनित्य स्वीकार करने पर प्रभोः इत्यादि में अतिव्याप्ति दोष आ जायागा तो नहीं कह सकते । परस्पर साहचर्य से निपातों का और वार्तिकोक्तों का ग्रहण हो जानेपर भी दूसरों का अग्रहण होने से अर्थात् अर्थवत्परिभाषा से अर्थवानों का ग्रहण होने से अनर्थकों का ग्रहण नहीं होगा । सान्त अथवा रान्तानुकरण पक्ष में प्रसिद्ध भो इत्यादि पूर्वक अर्थवान् रेफान्तों का ग्रहण न्यायसंगत है । भो इत्यादि ओकारान्त पक्ष में भी वार्तिक निष्पन्नों के और निपातों के एकदेशीभूत भो शब्द का अनुकरण है । यहाँ पर सिद्धान्त है, सूत्र में रान्तानुकरण है, अतः सन्ध्यभाव न्यायसंगत है ।

"व्योर्लघुप्रयत्नतरः शाकटायनस्य" (८।३।१८) इस सूत्र में लघुप्रयत्नतर का भाव है लघूच्चारणप्रयत्नतर अर्थात् लघुतरोच्चारण, क्योंकि लघूच्चारणप्रयत्नतर कथन से उच्चारणक्रियागतप्रकर्ष का

"ओतो गार्ग्यस्य" (पा० सू० ८।३।२२) ओकारादिति। यत्त्वोकारान्तादङ्गादिति प्राचा व्याख्यातं, तन्न। अङ्गस्याप्रकृतत्वात्। असम्भवाच्च। न ह्युदाहरणेष्वोकारान्तमङ्गमस्ति।

"हलि सर्वेषाम्" (पा० सू० ८।३।२२) यकारस्येति। वकारस्तु नानुवर्तते। भोभगोअघोऽपूर्वस्यासम्भवात्। अपूर्वस्तु यद्यपि सम्भवति—वृक्षव् करोतीति, तथापि तत्र लोपाप्रसङ्गः। अशीत्यनुवर्त्याशा हलो विशेषणात्। वृक्षव्हसतीत्यादि तु अनभिधानादसाध्वित्याहुः। गव्यमित्यत्र तु पदान्तत्वं नास्ति। गव्यूतिरित्यत्र तु वकारप्रश्लेषान्न वलोप इत्युक्तम्। ननु देवा नम्या इत्यादौ "लोपो व्योः—" (पा० सू० ६।१।७६) इत्येव सिद्धम्। मैवम्। तं प्रति यत्वस्यासिद्धत्वात्। देवा यान्तीत्यत्र वल्परत्वाभावाच्च। अहोरात्र इति। "रात्राह्नाहाः" (पा० सू० २।४।२९) इति पुंस्त्वम्। अहरादीनामिति। उभयत्राप्यादिशब्दः प्रकारे। तेन "स्वर्चक्षो-रथिनः सत्यशुष्मः"। 'विप्रः कविः काव्येन स्वर्चनो" इत्यादि ग्राह्यम्।

---

हलो विशेषणादिति। स्पष्टं भाष्ये। इत्याहुरिति। हरदत्तादयः। वकारलोपे ततस्तदर्थानवगतेरित्यर्थः। एवं च करोत्यादिपरेऽपि तत एव लोपे न भविष्यतीत्यशा हलो विशेषणं व्यर्थमिति सूचितम्। भाष्यमपि तदेकदेश्युक्तिरेव। "न पदान्ताः परेऽणः सन्ति" इति "लण्" सूत्रस्थभाष्यविरोधाच्च।

---

अनवगतेरिति। आनुपूर्वीज्ञानस्यासत्तिविधया शाब्दबोधहेतुत्वेन तथोच्चारणेन तदर्थबोधस्य लोकेऽदृष्टत्वादित्यर्थः। शास्त्रस्यानिष्टाजनकत्वादितिभावः।

---

लाभ होता है क्रियाप्रयोजकप्रयत्नगत का लाभ नहीं होता, अतः शब्दरत्नकार ने कहा लघुतरोच्चारणः। सादृश्यात् यकार को यकार, वकार को वकार होता है। तथा च इसका अर्थ होता है, पदान्त यकार वकार को लघूच्चारण वकार यकार होता है अश् परे रहते। जिसके उच्चारण में जिह्वाग्र उपाग्र मध्य मूल का शैथिल्य हो वह लघूच्चारण कहलाता है।

"ओतो गार्ग्यस्य" (८।३।२०) का अर्थ होता है ओकार से परे पदान्त अलघुप्रयत्न यकार का नित्य लोप होता है। गार्ग्य ग्रहण पूजार्थ है। जो यहाँ पर ओकारान्त अङ्ग से परे यह प्राचीनों ने व्याख्या की है, वह ठीक नहीं क्योंकि अङ्ग प्रकरण प्राप्त नहीं है। असम्भव भी है। उदाहरण में ओकारान्त अङ्ग कहीं नहीं मिलता।

"हलि सर्वेषाम्" (८।३।२२) इसका अर्थ है, भो भगो अघो अपूर्वक लघु अलघु उच्चारण यकार का लोप होता है हल् परे रहते सभी के मत से। यहाँ पर वकार का अनुवर्तन नहीं होता, भो पूर्वक, भगो पूर्वक अघो पूर्वक अपूर्वक न मिलने से। यद्यपि वृक्षव् करोति में अपूर्वक सम्भव है तथापि वहाँ पर लोप की ही प्राप्ति नहीं है कारण 'भो भगो" से अश् का अनुवर्तन करके अश् को हल् का विशेषण कर देने पर अर्थ होगा, अश् रूप हल् परे रहते। तथा च् वृक्षव् करोति में अश् रूप हल् का अभाव होने से लोप नहीं होगा। वृक्षव् हसति इत्यादि तो अनभिधान होने से असाधु है। यह हरदत्तादि ने कहा है। वकार का लोप कर देने पर उससे तदर्थ की प्रतीति नहीं होती यह भाव है, इसी प्रकार करोति इत्यादि परे रहते अर्थावगति न होने से लोप नहीं होता, अतः अश् को हल् का विशेषण करना व्यर्थ है।

'भो भगो' का भाष्य भी एकदेशी है, "नपदान्ताः परे अणः सन्ति" यह भाष्य विरोध होने से अर्थात् हस्वरूप अण् पदान्त में नहीं मिलते। गव्यम् यहाँ पर तो पदान्तत्व नहीं है। अतः लोप

तृढो वृढ इति। ऊदित्त्वेन वेट्कत्वात् "यस्य विभाषा" (पा० सू० ७।१।१५) इति निष्ठायां नेट्। ढत्वधत्वष्टुत्वढलोपाः।

यत्तु प्राचा प्रत्युदाहृतं दृढ इति तन्न। तत्र ढलोपस्यैवाभावात्। तथा हि— "दृढः स्थूलबलयोः" (पा० सू० ७।२।२०) इति सूत्रेण दृंहेर्नकारहकारयोर्लोपः, तकारस्य ढत्वं च निपात्यते। न त्वसिद्धकाण्डस्थढत्वस्येह प्रवृत्तिः "दादेर्धातोः—" (पा० सू० ८।२।३२) इति घत्वेन बाधात्। न च इडभावो ढत्वं च निपात्यतां-धत्वष्टुत्वढलोपास्तु भविष्यन्त्येवेति वाच्यम्। तथा सति परिदृढय्येत्यत्र "ल्यपि लघुपूर्वात्" (पा० सू० ६।४।५६) इति णेरयादेशो न स्यात्। पारिदृढीकन्येत्यत्र "अणिञोः—" (पा० सू० ४।१।७८) इति ष्यङ् च स्यात्। ढलोपस्यासिद्धत्वेन गुरूपोत्तमत्वादिति भाष्ये स्थितम्।

---

इडभावो ढत्वं चेति। चेन नलोपसङ्ग्रहः। ढलोपा इति। "ढो ढे लोप" (पा० सू० ८।३।१३) इत्येतद्दृष्ट्या ष्टुत्वं तु नासिद्धं सामर्थ्यादिति भावः। भाष्ये स्थितमिति। "दृढः स्थूल—" (पा० सू० ७।२।२०) इति सूत्रे शेषः।

---

भाष्ये स्थितमित्यत्र भाष्यं "ढ्रलोपे" इति सूत्रस्थङ्ग्राह्यमिति भ्रमनिवारणायाह "दृढः स्थूल" पा० ७।२।२० इति सूत्रे शेषः।

---

की प्राप्ति ही नहीं है। गव्यूतिः में वकार का लोप नहीं होता वकार का प्रश्लेष होने के कारण यह पहले बता दिया गया। यदि कहो कि देवा नम्याः इत्यादि में तो "लोपो व्योः" इससे ही यकार का लोप हो जायगा तो नहीं कह सकते, उसके प्रति यत्व असिद्ध रहने से यकार ही नहीं दिखाई देगा। देवा यान्ति यहाँ पर वलपरत्वाभाव होने से "लोपोव्योः" की प्राप्ति नहीं है।

"अहो रात्रः" यहाँ पर "अहश्च रात्रिश्च तयोस्समाहारः" ये व्युत्पत्ति करके द्वन्द्व समास तथा समासान्त प्रत्यय करने पर परत्वात् "सनपुंसकम्" (२।४।१७) को और अपवादत्वात् "परवल्लिङ्ग-द्वन्द्वतत्पुरुषयोः" (२।४।२६) को बाधकर "रात्राह्नाहाः पुंसि" (२।४।२९) से पुंल्लिङ्ग होता है।

अहरादीनां पत्यादिषु (वा०) इसका भाव होता है अहरादिघटक रेफ को रेफ होता है पत्यादि परे रहते। इसमें अहरादि तथा पत्यादि दोनों में आदि शब्द सदृश में रहने से "स्वर्चक्षः" तथा स्वर्चना में रेफ को रेफ हो जाता है, विसर्ग नहीं होता।

तृढोवृढः यहाँ पर तृहू हिंसायाम् वृहू उद्यमने से क्त प्रत्यय हुआ है, ऊदित्व होने से क्त्वा प्रत्यय परे रहते इट्विकल्प से होने के कारण क्तप्रत्यय परे रहते "यस्य विभाषा" (७.१.१५) से इट् नहीं होता। होढः से ढत्व 'झषस्तथोः' से तकार को धकार ष्टुत्वेन ढकार "ढोढेलोपः" से पूर्व ढकार का लोप कर देने पर "तृढः" वृढः का साधुत्व होता है। जो प्राचीनों ने प्रत्युदाहरण दृढ दिया है, वह युक्त नहीं, क्योंकि ढलोप का ही अभाव रहता है। उसी को दिखाते हैं, दृढः स्थूलबलयोः" (७।२।२०) इस सूत्र के बल से दृह् धातु के नकार हकार का लोप तथा तकार को ढत्व का निपातन करते हैं, यहाँ पर असिद्धकाण्डस्थ अर्थात् "होढः" से ढत्व नहीं हुआ, "दादेर्धातोः" (८।२।३२) से बाध हो जाने से।

यदि कहो इट् का अभाव तथा ढत्वका निपातन करेंगे, धत्व ष्टुत्व ढलोप तो हो ही जायगा "ढो ढेलोपः" (८।३।१३) इसकी दृष्टि से ष्टुत्व असिद्ध नहीं होता, ढलोप विधान सामर्थ्य से। तो नहीं कह सकते, ढलोप को असिद्ध हो जाने पर लघुपूर्वत्वाभाव हो जाने पर परिदृढय्या यहाँ पर "ल्यपि-लघुपूर्वात्" (६।४।५६) से अयादेश नहीं होगा। परिदृढी कन्या यहाँ पर ढलोप असिद्ध हो जाने पर

यत्तु प्राचा व्याख्यातं दृंहेरेवेदं निपातनं, दृहवृद्धाविति तु प्रकृत्यन्तरम्। तस्य निष्ठायामागमशास्त्रस्यानित्यत्वादिडभावे "वा द्रुह–" (पा० सू० ८।२।३३) इत्यत्र 'वा" इति योगविभागात् पक्षे घत्वाभावे ढलोपे च प्रत्युदाहरणमिदं-द्रष्टव्यमिति। तन्न। उभयोरपि निपातनाभ्युपगमात्। तदाह वामनः—'अथ दृहिः प्रकृत्यन्तरमस्ति तस्याप्येतन्निपातनं नलोपवर्जमिति। युक्तं चैतत्। अन्यथा हि अस्माद् णेरय् न स्यात्, ष्यङ् च स्यात्'।

उत्वमेवेति। सिद्धासिद्धयोरतुल्यबलत्वेन "विप्रतिषेधे परम्–" (पा० सू० १।४।२) इत्यस्याप्रवृत्तौ निष्प्रतिपक्षत्वादुत्वमेव भवतीत्यर्थः। "तदुक्तम्–" पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य" इति। एतेन विभक्तिकार्यं प्राक् पश्चादुत्वमत्वे इत्यादि व्याख्यातम्।

---

द्रष्टव्यमितीति। ष्यङि णेरयाभावे चेष्टापत्तिरिति भावः। उभयोरपीति। स्वदवलम्बभूतेन वृत्तिकृतेति शेषः। तदाह—वामन इति। अत्रारुचिबीजं तु दृहेर्नकारहकारलोपार्थमिति भाष्यविरोधः। अनिदितो दृहेस्तु दृहितमित्येवेष्यत इति कैयटविरोधश्चेति। किं च प्रसादोक्तरीत्या दृहेरपि इडभावढत्वयोः सिद्धाविण्निषेधप्रकरणे दृढ इति निपातनस्य व्यर्थत्वमित्यलम्।

अभावादुत्तरस्येति। आहार्याभावारोपादित्यर्थः।

---

आहार्याभावरोपादिति। शास्त्रप्रामाण्यादिति भावः। बाधकालिकेच्छाजन्यत्वात्तस्याहार्यत्वम् लोकवैलक्षण्येप्युक्तहेतोरेवात्रेष्टसिद्धयङ्गीकारान्मनोरथसिद्धिः।

---

गुरूपोत्तम हो जाने पर "अणिञोः" (४।१।७८) से ष्यङ् होने लगेगा। "दृढः स्थूल" (७।२।२०) इस सूत्र के भाष्य पर लिखा है। जो प्राचीन दृह् धातु का ही यह निपातन है, वृद्धयर्थक दृह् धातु भिन्न है। उससे क्त प्रत्यय करने पर आगमशास्त्र अनित्य होने से इट् का अभाव हो जाने पर वा "द्रुह" (८।२ ३३) यहाँ पर "वा" यह योग विभाग करके पक्ष में घत्वाभाव ढलोप करने पर यह प्रत्युदाहरण बन जायगा, ष्यङ् प्रत्यय तथा णिको अयादेशाभाव तो इष्ट ही है, यह व्याख्या करते हैं वह ठीक नहीं, क्योंकि वृत्तिकार ने दोनों धातुओं से निपातन स्वीकार किया है, जो आपके अवलम्ब है।

इसी को वामन ने स्पष्ट कहा है। दृहि प्रकृत्यन्तर है नलोप को छोड़कर उसका भी यह निपातन है। यह ठीक है अन्यथा णि को अयादेश नहीं होगा और ष्यङ् होने लगेगा। यहाँ पर अरुचि यह कि "दृंहेर्नकारो हकारलोपार्थम्" यह भाष्य विरोध तथा "अनिदितो दृहेस्तु दृहितमित्येवेष्यते" यह कैयट विरोध होगा। किञ्च प्रसादोक्तरीति से दृह् धातु से भी इट् का अभाव ढत्व सिद्ध है इट् निषेध प्रकरण में दृढः निपातन व्यर्थ है।

मनोरथः यहाँ पर "पूर्वत्रासिद्धम्" से "रोरि" को असिद्ध हो जाने के कारण सिद्ध और असिद्ध में अतुल्य बल हो जाने पर "विप्रतिषेध" की अप्रवृत्ति रहने पर बाधक न रहने से उत्व ही होगा। उसीको कहा है, त्रिपादी में विप्रतिषेध नहीं होता उत्तर का अभाव होने से। "पूर्वत्रासिद्धम्" इस शास्त्र के प्रामाण्य से बाधकालिकेच्छाजन्यरूप आहार्यज्ञानाभाव का आरोप होने से, इस कारण विभक्ति कार्य प्रथम पश्चात् उत्वमत्व यह व्याख्या की गई।

सूत्रे सु इति पृथक् पदं लुप्तषष्ठीकमित्याह—एतत्तदोर्यः सुरिति। एतत्तदर्थंगतसंख्याभिधायी यः सुस्तस्येत्यर्थः। एतत्तदोर्विहित इति व्याख्याने तु परमस ददाति परमैष ददातीत्यादौ न स्यात्। अर्थद्वारकसम्बन्धाश्रयणे लिङ्गं तु "अनञ्समासे" इति बोद्धव्यम्। अकोः किमिति। साकच्कयोः शब्दान्तरत्वादप्रसङ्ग इति प्रश्नः। एषक इति। "अकोः" इति प्रतिषेध एव "तन्मध्यपतितस्तद्ग्रहणेन गृह्यते" इति परिभाषां ज्ञापयतीति भावः।

बहुलग्रहणेति। अत एव लोपं विना पादपूरणेऽपि क्वचिद्भवति। सास्मा अरम्। सः अस्मै इति च्छेदः॥

इति स्वादिसन्धिः॥

॥ इति पञ्चसन्धिप्रकरणम्॥



---

लिङ्गमिति। विहितविशेषणे तद्वैयर्थ्यं स्पष्टमेवेति भावः।

सास्मा अरमिति। सोस्मा अरमिति सन्धावपि पादपूर्त्तेः। न च "प्रकृत्यान्तः पादम्—" (पा० सू० ६।१।११५) इति पूर्वरूपस्याभावेन न पादपूर्त्तिः। "सोऽयमागात्" इत्यादावत्रापि प्रातिशाख्येन सिद्धेः। एवञ्चावधारणपरतया न व्याख्येयम्। "सोहमाजन्म—" इत्यादौ बहुलग्रहणेन क्वचिदप्रवृत्त्यापि सिद्धेरिति तात्पर्यम्॥

इति भट्टोजिदीक्षितपौत्रहरिदीक्षितकृते मनोरमाव्याख्याने लघुशब्दरत्ने पञ्चसन्धिप्रकरणम्॥



---

तद्वैयर्थ्यमिति। अनञ्समासग्रहणवैयर्थ्यम्। तद्धि "असः शिवः" इत्यादौ लोपाभावार्थकृतम्। यद्यत्र विहितविशेषणं स्यात्तदा सोस्तच्छब्दाद्विधानाभावेन लोपाप्राप्त्या तद्वैयर्थ्यं स्पष्टमेव। वस्तुतस्तु विहितपदाध्याहारेण तद्योगे पञ्चमीकल्पनापेक्षयाऽनन्तरपदाध्याहारेण तन्निरूपितसम्बन्धे षष्ठीत्येवोचितम्। तथा च एतत्तदोरनन्तर इत्यर्थः। तेन परम स ददातीत्यादौ न दोषः। गौणे तु दोषः। तत्र त्यदाद्यत्वाभावेन। हल्ङ्यादिलोपस्य दुर्वारत्वात्। न च 'परमः स ददातीत्यादौ परमोत्तरसोरपि तत्पदान-

---

"एतत्तदोः सुलोपोऽकोरनञ्समासे हलि" (६।१।१३२) यहाँ पर सु लुप्तषष्ठीक पृथक् पद है। एतत् तद्गत संख्या को कहनेवाले सु का लोप होता है। एतत् तद् से विहित जो सु इस व्याख्यान में परम स ददाति परमैष ददाति में सु का लोप नहीं होगा। एतत् तद् से परे यह व्याख्यान सम्भव नहीं है, पञ्चमी का अभाव होने से। एतत् तद् का अवयव सु यह भी सम्भव नहीं है सुप्रत्यय होने से। अतः अर्थद्वारकसम्बन्धाश्रयण करके, एतत्तदर्थंगत इत्यादि कहना पड़ा अर्थद्वारकसम्बन्धाश्रयण में प्रमाण है अनञ् समास, विहित विशेषण में तो अनञ् समास व्यर्थ है, क्योंकि "असश्शिवः" इत्यादि में लोपाभाव के लिये किया गया है। यदि यहाँ पर विहित विशेषण स्वीकार करेंगे तो सु का तत् शब्द से विधानाभाव होने से लोप की अप्राप्ति रहेगी अनञ् समास ग्रहण व्यर्थ है।

न्तरत्वेन लोपापत्तिरिति वाच्यम् । एतच्छब्दसाहचर्येण तच्छब्दान्तरस्यापि परस्य ग्रहणे-नादोषात् । यत्तु एतत्तदर्थगतसंख्याभिधायिनः सोर्लोप इति, तन्न परमः स ददाति तत्कल्पमित्यादौ परमपदोत्तरसोः कल्पबुत्तरसोश्च तदर्थगतसंख्याभिधायित्वेन लोपापत्तेः । न च स्वाव्यवहितोत्तरत्व, स्वार्थगतसंख्याभिधायित्वोभयसम्बन्धेन एतत्तद् विशिष्टसोर्लोप-इत्यर्थं इति न दोष इति वाच्यं स्वार्थगतसंख्याभिधायित्वसम्बन्धस्य वैयर्थ्यापत्तेः ।

सर्वतन्त्रस्वतन्त्रपण्डितराजश्री१०८रामयशस्त्रिपाठिमहोदयानाम् ( परमपूज्य-
श्री १०८राघवेन्द्रानन्दसरस्वतीमहोदयानाम् ) अन्तेवासिना पण्डित-
श्रीबट्टूलालद्विवेदिमहोदयानां पुत्रेण श्रीसुभद्रागर्भसम्भूतेन
द्वारकाप्रसादद्विवेदिनाकलितायां बालप्रकाशिकायां
पञ्चसन्धिप्रकरणम् समाप्तम् ॥

---

अकोः किम् का भाव है अकच् प्रत्यय विशिष्ट शब्दान्तर होने से उससे परे सुलोप की प्राप्ति ही नहीं है । अकोः यह प्रतिषेध "तन्मध्येपतितस्तद्ग्रहणेन गृह्यते" इस परिभाषा का ज्ञापन करता है, एतत् से एतकत् का भी ग्रहण हो जायगा उसको वारण करने के लिये अकच् ग्रहण किया ।

"सोचि लोपे चेत्पादपूरणम्" (६।१।१३४) इसमें "स्यश्छन्दसि बहुलम्" (६।१।१३३) से बहुलग्रहण का अनुवर्तन आ जाने से लोप के बिना पाद पूर्ति रहने पर भी कहीं लोप हो जाता है, सोस्मा अरम् सन्धि करने पर भी पाद की पूर्ति हो जाती है । सु का लोप करने पर सास्मा अरम् । इसका पदच्छेद है सः अस्मै ।

यदि कहो कि "प्रकृत्यान्तः पादम्" से प्रकृतिभाव हो जाने से पूर्वरूप का अभाव हो जाने पर पाद की पूर्ति नहीं होगी तो नहीं सोऽयमागात् इत्यादि की तरह प्रातिशाख्य से प्रकृति भाव का निषेध हो जायगा पूर्वरूप हो जाने पर सिद्ध हो जायगा । यदि बाहुलकात् क्वचिद् लोप के बिना पाद पूर्ति को स्वीकार करते हो तो अवधारण मानने की क्या आवश्यकता बाहुलकात् कहीं अप्रवृत्ति ही स्वीकार कीजिये । इसीसे ही "सोऽहमाजन्म" इत्यादि की सिद्धि हो जायगी ।

सर्वतन्त्रस्वतन्त्रपण्डितराज श्री १०८ रामयशस्त्रिपाठिमहोदय के अन्तेवासी ( परमपूज्य
श्री १०८ राघवेन्द्रानन्दसरस्वती महोदय के छात्र ) पण्डितश्रीबट्टूलालद्विवेदी
महोदय के पुत्र श्रीसुभद्रागर्भसम्भूत द्वारकाप्रसादद्विवेदीकृत
हिन्दी बालप्रकाशिका में पञ्चसन्धि प्रकरण समाप्त ।

---



